प्रकाशक—
चौखम्बा विद्याभवन
( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )
चौक ( बनारस स्टेट बैंक भवन के पीछे ),
पो० बाक्स नं० ६९
वाराणसी २२१००१




मूल्य १००

अन्य प्राप्तिस्थान—
चौखम्बा सुरभारती प्रकाशन
( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )
के० ३७/११७, गोपालमन्दिर लेन
पो० बा० नं० ११२९, वाराणसी २२१००१
दूरभाष : ५५३५७

*

चौखम्बा संस्कृत प्रतिष्ठान
३८ यू. ए., जवाहरनगर, बंगलो रोड
दिल्ली ११०००७

मुद्रक—
भोजी मुद्रणालय
वाराणसी

# भूमिका

संस्कृतिरेव राष्ट्रम्। संस्कृतिः राष्ट्रमिति नाम सार्थकं करोति। अतएव संस्कृति-संरक्षणमेव कस्यचिद्राष्ट्रस्य परमं कर्तव्यम्। यदि नाम राष्ट्रिया संस्कृतिर्विनष्टा स्यात्, तर्हि सर्वमेव विनष्टं भवति।

न काचित् संस्कृतिरेकस्मिन् दिने केनचिदेकेन पुरुषेण पुरस्क्रियते। यथा काचिन्नदी बह्वा स्रोतसा पूरिता च जन्मादाय स्वरूपं विदधाति, तथैव संस्कृतिरसंख्यानां लोकानां मनीषिणां सम्प्रदायानां च आचार-विचार-शिल्पकलादीनात्मसात्कुर्वाणा प्रचरति। एवम्भूतेऽपि यथा गङ्गा हिमालयस्य वैशद्यं स्वकीये प्रवाहे सर्वत्र सततं धारयति, तथैव भारतीया संस्कृतिर्वेदस्य सार्वभौमत्वमुररीकृत्य सर्वोपकारक्षमा प्रवर्तते।

निःसन्देहं संस्कृतिस्तु नित्यं संवर्धते, नूतनतत्त्वानि सन्धारयते च। तथापि नूतनानि तत्त्वानि परिधानानीव भारतसंस्कृतिशरीरं प्रसाधयन्ति, न तस्य हानिं कुर्वन्ति। अनेन प्रकारेण संस्कृतेर्निर्जरत्वं निधीयते।

भारतवासिनो भारतीयसंस्कृतिस्वरूपं सम्यगनुसृत्य पुनः गौरवास्पदं पदं प्राप्तुं समर्थाः सन्ति। भारते परतन्त्रीभूते भारतवासिनः प्रायशः स्वदेशस्य सांस्कृतिकपरम्परां प्रति विस्मरणशीलाः सञ्जाताः। स्वतन्त्रतायाः अभ्युपगमे पुनरपि स्वदेशस्य संस्कृतेः संस्कृत-साहित्यस्य च निधिः सम्यगवगन्तव्यः।

भारतीयसंस्कृतेर्विवेचनं बहुधा योरपीयविचारणापद्धतिमनुसृत्य कृतम्। प्रस्तुतप्रबन्धे प्राचीनसंस्कृतिधारा भारतीयदृष्ट्या विभाविता वर्तते, तस्याः पर्यालोचनं च भारतीय-वैज्ञानिकप्रणालीमवलम्ब्य समारब्धम्। अत्र न केवलं भारतीयसंस्कृतेः सिद्धान्तपक्ष उप-वर्णितः, अपि तु तस्याः व्यावहारिकस्वरूपमपि समुदाहृतम्। भारतीयसंस्कृतेः प्रवृत्तीनां परिज्ञानाय राधिद्विशिष्टानुसन्धानपद्धतिरनुसर्तव्येति मे मतिः। तस्याः परिरक्षणं प्रबन्धे-ऽस्मिन् पदे पदे भविष्यति।

विदुषां वशंवदः
रामजी उपाध्यायः

# अनुक्रमणिका

# आमुखम्

मानवस्येतरप्राणिभ्यः सुखप्रवृत्तौ स्वभावतो वैशिष्ट्यं वर्तते। यद्यपि मानवः 'आहारनिद्राभयमैथुनेन पशुभिः समानः' किन्तु पशुवदाभिरेव प्रवृत्तिभिस्तस्य प्रगतिर्नावरुद्धा। मूर्खा अपि पशवो नूनमेवाहारविहारनिद्रादिकं यथेष्टं वाञ्छन्ति भयकारणानि निवारयन्ते च—मानवोऽपि तद् वाञ्छति तानि निवारयते च किन्तु पशूनामाहारविहारस्य सामग्रीषु साधनेषु च युगानुसारं परिवर्तनं किञ्चिन्मात्रमेव भवति। तेषां जीवनविधिरधुनापि प्रायः तादृशो यथा सहस्रवर्षपूर्वमेवासीत्। इत्थं पशुजीवनं प्राकृतिकं भवति। तस्माद् विपरीतमेव मानवजीवनं सांस्कृतिकं भवति। यथैव वर्तते मानववैशिष्ट्यम्। मानवस्य जीवनविधिः प्रतियुगं नवतरो दृश्यते। कदापि स आहारविहारादिषु सर्वथा परितुष्टो न भवति। स नित्यमेव नवीनसामग्र्या साधनानां च सम्पादनेन परितुष्टतरमात्मानं कर्तुं चेष्टते। इहैव मानवस्य बुद्धिः सहायरूपेण तिष्ठति। बुद्धियोगेन स जगतो नित्यं कल्याणपरं नवीनतररूपं विदधाति। मानवो बुद्धेरुत्कर्षेण पशुभ्य उत्कृष्टतरो भवति।

मानवीयानन्दस्य सामान्यतः चत्वारि क्षेत्राणि वर्तन्ते—( १ ) आधिभौतिकम् ( २ ) आध्यात्मिकम् ( ३ ) रसात्मकम् ( ४ ) सेवात्मकं च।[1] आधिभौतिकक्षेत्रे मानव ऐन्द्रियकसुखलाभाय ज्ञानविज्ञानबलेन पञ्चतत्त्वनिर्मितवस्तूनामधिकाधिकोपयोगित्वरूपं परिज्ञाय विज्ञाय चात्मानं बहु मन्यते। अस्यां दिशि परमाणुशक्तेराविष्कारोऽधुना सर्वोत्कृष्टोन्नतिर्दृश्यते। आध्यात्मिकक्षेत्रे योगस्य दर्शनस्य च महिमा वर्तते। योगदर्शनाभ्यासेन परमात्मनश्च ज्ञानेनानुभूत्या च परानन्दो लभ्यते। समाधिर्ब्रह्मनिष्ठता चात्मनोऽस्य चरमविकासो वर्तते। रसात्मकक्षेत्रे काव्यकलाशिल्पानामतिशयो राजते। तेभ्यो हृदयद्वारानन्दः प्राप्यते। सेवात्मकक्षेत्रे बालानामात्मगुणानां चाभिवृद्धिः सामाजिकसंविधाने धर्मव्यवहारेण क्रियते।[2] अनेनैव 'परोपकाराय सतां विभूतयः' 'वसुधैव कुटुम्बकम्' 'आदानं हि विसर्गाय' 'परोपकारः पुण्याय' 'एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये' इत्यादयः शिष्टाचारस्य प्रकाशस्तम्भाः सनातनाः सन्ति।

चतुर्षु क्षेत्रेष्वनन्तान्यमूल्यविषयाः। निरवधिकालं मानवो ज्ञानेन, दर्शनेन, रसवृत्त्या, धर्मभावेन चाधिकतरानन्दस्य प्राप्तये यत्नं करिष्यति। प्रकरणमिदमधिकृत्य मानवो बुद्धे-

---

1. तथा गौतमेन त्रिविधं शरीरं व्याकृतम्—स्थूलं, सूक्ष्मं, मनोमयरूपं च। एतेषां प्रत्येकशो येभ्यो भवति आनन्दविषयः (दार्शनिकार्थे पाश्चात्यदृष्ट्या) रवीन्द्रनाथठक्कुरेणापि मानवस्यानन्दत्रयं प्रविभाजितम्—प्राकृतिकम्, नैतिकम्, आध्यात्मिकं च। शान्तिनिकेतने पृ० २००।

2. एतस्य परमादर्शः मृच्छकटिके चारुदत्तः—'दक्षिणतया परकीयमिवात्मानमवगच्छति शरणागतवत्सलश्च।'

रध्यात्मवृत्ते, सौन्दर्यभावनाया, शीलभावस्य च नित्यमेव सवर्धनं कृतवान् करिष्यति च। इत्थमेव सवर्धनप्रक्रिया मानव-सस्कृतिरिति ख्याता। सस्कृतिर्मानव-जीवनस्य कला, व्यक्तित्वस्य विकसन वा भवति।[१]

## संस्कृतेरुपकरणानि

### प्राकृतिकदशा

सास्कृतिकप्रवृत्तय प्रधानत प्रकृतिप्रदत्तसाधनै रुप्यन्ते। मानवस्तु प्रकृतिप्रदत्तवस्तुभिर्जीवनधारण करोति। प्रकृतिश्चेदुदारा, तर्हि स्वल्पश्रमेणैव जीवनोपाया लभ्य ते। तया प्रभाविता जना स्वयमवोदारा जायन्ते। प्रकृतिश्चेद दुस्साध्या भवेत्तर्हि कठोरश्रमेण जीवनोपायानुत्पादयन्तो जना स्वयमेव कठोरा भवन्ति। मानव प्रथम प्रकृतेरेवौदार्यस्य सहिष्णुतायाश्च शिक्षा गृह्णाति। प्रकृते रम्यप्रदेशेषु मनीषिणो दार्शनिकमाध्यात्मिक च तत्त्व विदन्ति। कलाविद प्रकृतेरुपादानानि गृहीत्वा तस्या सौष्ठव सौन्दर्यं च काव्यचित्र-मूर्तिवास्तुभिरभ्यञ्जन्ति। प्राकृतिकसविधानानुरूप हि भारतस्य सास्कृतिक सामाजिक राजनीतिकमैक्य विकसितम्।

### राजनीतिकदशा

सास्कृतिकविकासे राजनीतिकस्थितीना प्रभावो वरीवर्ति। प्राचीनयुगे राजा सस्कृते सरक्षकोऽभवत्। 'यथा राजा तथा प्रजा' इति सिद्धान्तानुसार राज्ञो गुणा प्रजासु प्रतिबिम्बिता अभवन्। राज्ञो रुचिमनुवर्त्य सास्कृतिकसस्थाना प्रादुर्भावोऽभ्युदयश्चाभवताम्। भारतस्येतिहासे प्रतियुग राजनीतिकस्थितीना सास्कृतिकसघटनविघटनयोरुपरि प्रभाव सुप्रकटित एव।

### महापुरुषाणा कर्तृत्वम्

महापुरुषाणा कृतिभिराचार्यत्वेन च सस्कृतेरभिनवा दिशा जायते। बहवस्तत्रासन् महर्षय आचार्याश्च तीर्थङ्कररूपेणावताररूपेण वा येषामभावे भारतीयसस्कृते सुषम स्वरूप न प्रादुर्भवेत्। आधुनिकयुगे महात्मनो गांधिमहाभागस्य सास्कृतिकप्रभावो ऽनुत्तम एव।

### स्वाभाविकप्रवृत्तय

कस्यापि राष्ट्रस्य सस्कृतिपथे तत्रत्यनिवासिना स्वाभाविकप्रवृत्तीना प्रभावो विद्यते। भारतवासिनस्तु स्वभावतो दार्शनिका भवन्ति परम्परावादिनश्चाङ्गलदेशवासिन। ईदृशीनां प्रवृत्तीना प्रतियुग सस्कृतिविन्यासे छाया प्रतिफलति।

---

१. सस्कृतिशब्द प्रथम यजुर्वेदे ७ १४ वर्तते। 'सा सस्कृतिर्विश्ववारा' इति। ऐतरेयब्राह्मणेऽपि निगदितम्—आत्मसस्कृतिर्वाव शिल्पानि—एतैर्यजमान आत्मान सस्कुरुते। ६.२७.१। उभयत्र सस्कृतिशब्द प्रायोऽस्मिन्नर्थे प्रयुक्त।

उपरिनिर्दिष्टोपकरणानुसारं भारते कश्चिद् विशिष्टः समायोगः समुदभवत् । तस्मिन्नेव सन्निधाने भारतीयसंस्कृतिः सम्यग् विकसिता । तदेव सम्प्रति पर्यालोचनीयम् ।

## सांस्कृतिकसमायोगः

### प्राकृतिकभूमा

'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति । भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः' इति छान्दोग्योपनिषदि सन्देशः । नियमेन भूमात्मसात्करणीयः इति समुद्दिश्य सन्ध्याविधौ 'भूर्भुवः स्वः' पदानि मानसे भावितानि । अनेन पाठेन मानवस्याल्पभागपरिधौ पृथिव्या सह वायुलोकः स्वर्गलोकश्च समाविष्टौ । अमुना विचारेण मानवः शरीरकुटुम्बग्रामराष्ट्रादिभ्यः परिधिभ्यो बहिर्निर्गतो भूमानमन्वभवत् ।[1]

इयमेव सा निःसीमता, यया भारतीयानां व्यक्तित्वमतिशयोदात्तं निर्मापितम् । तेषां मानसपटले पृथिव्या आकाशलोकस्य च समृद्धिः सौन्दर्यञ्च प्रतिबिम्बितं । अधुनापि स एवाकाशः अस्माकमावरणम् । दिवा तस्य नीलिमा रात्रौ चागणिततारकाणां प्रभा रमणीयतमौ, किन्तु पृथ्वी प्राचीनयुगे भव्यतरासीत् ।[2] वैदिकयुगे पृथिव्या औदार्यं कविना गीतम्—

भूमे मातर्नि धेहि मा भद्रया सुप्रतिष्ठितम् ।
संविदाना दिवा कवे श्रियां मा धेहि भूत्याम् ॥ अथर्व० १२ १ ६३

पृथिव्या गुणानुरूपं राष्ट्रियचरित्रं विकसितम् । तस्याः सान्निध्ये ऋषिणोच्चरितम्—

यद्वदामि मधुमत् तद् वदामि यदीक्षे तद्वनन्ति मा ।
त्विषीमानस्मि जूतिमानवान्यान् हन्मि दोधत ॥ अथर्व० १२ १ ५८

भारतभूमेः समग्रत्वेन तस्याः विन्यस्तपयसां सारल्येन मानवजीवने सम्यक् कार्यपद्धतौ चार्जवं प्रतिफलितं ।

भारतीयप्रकृतेर्महत्त्वपूर्णोपकरणानि—पर्वताः, नद्यः, समुद्राः, वनानि, ऋतवः, पशुपक्षिणश्च सन्ति । एषां सांस्कृतिकप्रभावः परीक्षणीयः ।

भारते हिमालयः श्रेष्ठपर्वतोऽस्ति । अस्माकं देशस्तेन हिमालयेन समुद्रैश्च सुरक्षितम् । चतुर्दिक्षु सुरक्षिते भारते पुरा वैदेशिकाः स्वल्पसंख्यका एवागताः । तेऽपि भारतीयसंस्कृतौ रञ्जिताः । हिमालयस्तु तपोभूमिः विद्याभूमिश्चाभवत् । अत्रैव विद्यार्थिनस्तपस्विनश्च सुखेन निवसन्तोऽनायासेनैव जीवनधारणायावश्यकवस्तूनि प्राप्नुवन् । हिमालयानुरूपमेव तेषामाध्यात्मिकदर्शनं प्रस्फुटितम् । अधुनापि बदरी-कैलास-गौरी-नन्दाप्रभृतीनि सोहर-

---

१ अथर्व० १२ १ ५३

२ आधुनिकयुगे वनानि नष्टप्रायाण्येव कासारजलाशयाश्च शोषिता एव तडागनाम्ना नद्योऽपि । मृगालीभयादेव शुष्का एव वनान्ताः । पर्वतश्रेण्या नवीनसंस्कृतिप्रवणा जना वसतिं विधाय तत्र वनैः सिक्तामात्मपद्धत्यैव ।

स्थानानि महर्षीणा कीर्तिस्तम्भरूपेण सम्मानितानि। महर्षीणामुपदेश समादृत्य सन्तोऽद्यापि तेषा माहात्म्य समोकर्तुं हिमालय पर्यटन्ति। हिमालयस्तु तीर्थमेव।

अन्येषामपि पर्वताना न्यूनाधिक हिमालयवत् प्रभावो लक्ष्यते। रामायणानुसार चित्रकूटस्य रमणीयता रामस्य मनोभावेन व्यज्यते। तद्यथा

न राज्याद् भ्रशन भद्रे न सुहृद्भिर्विना भव।
मनो मे बाधते दृष्ट्वा रमणीयमिम गिरिम्॥

दक्षिणभारते विन्ध्यमेकलमलयमहेन्द्रसह्यादीना गिरीणा समाहारो वर्तते। आसु पर्वतमालासु बह्वो गुहा निर्मिता। वनान्तरमणीयासु गुहासु धर्माणा दर्शनानाञ्चोनायका अवसन्। अस्मिन् पर्वतप्रदेशे नैसर्गिकरमणीयतामाश्रित्य मानवस्य कलात्मकप्रवृत्तय चित्रमूर्तिवास्तुरूपा. प्रस्फुटिता।

नदीभि पर्वतप्रदेशेषु समतलप्रदेशेषु च तत्रत्यनिवासिभ्यो जीवनोपाया उपायनीकृता। नदीना तटप्रदेशान् समाश्रित्य मुनीना नागरिकाणाञ्च वसतय सवर्धिता। तासा जल स्नानाय, पानाय, जलविहारादिमनोरञ्जनाय चाभवत्।

सर्वा नद्योऽस्त शोधपावना सन्ति। तथा हि

सर्वप्रस्रवणा पुण्या सरासि च शिलोच्चया।
नद्य पुण्यास्तथा सर्वा जाह्नवी तु विशेषत॥

सागरस्य विपुलविस्तारो निरवधि परिधिश्च मानवस्य परमतामादधाति। पौराणिकमतेन सागरस्य मन्थनमभवत्। तत चतुर्दशरत्नानि प्राप्तानि। सागरोऽय विष्णो शयनमभूत, वरुणस्य गृहमभवत्, इन्द्रवज्रेम्य भीताना पर्वतानामाश्रयश्चासीत्। भारतस्य समृद्धिमपि सागर सवर्धयति। बहुविधरत्नमुक्ताफलानि प्रदाय स आत्मन रत्नाकरत्व साधयत्येव। नाविका सागरस्य पर पार गत्वा भारतीय संस्कृतिदीप-पादप द्वीपेषु महाद्वीपेषु च रोपितवन्त।

भारतीयसस्कृते निर्माणमरण्यवासिभिर्मुनिजनैरधिकाशत कृतम्। भारतीयप्रकृतिर्वनभागेषु विशेषेणारत्नरामवत। वैदिककालतोऽरण्यानी देवी प्रतिष्ठिता वर्तते, वनस्पतिश्च वनराजो वटवृक्ष सोमश्चास्ति। ऋषिभिर्वनानि रम्याणोति गीतम्। वनभागेषु यत्र जीवनोपाया —जलानि फलकुसुमादीनि—सुलभा आसन, तत्र महर्षीणामाश्रमा स्थापिता राजभिश्च नववसतय कारिताः। रामायणे निगदित वनसौरभ स्पृहणीयमेव—

पश्य रूपाणि सौमित्रे वनाना पुष्पशालिनाम्।
सृजता पुष्पवर्षाणि तोय तोयमुचामिव॥
पुष्पसद्धन्नशिखरा मारुतोत्क्षेपचञ्चला।
अमी मधुकरोत्तसा प्रगीता इव पादपा॥

एषु वनेषु निवसद्भिर्महर्षिभि सस्कृते सर्वाङ्गसम्पन्ना धारा प्रवाहिता। तस्या न

केवलं भारतवासिनोऽपि तु वैदेशिका अपि सततं निष्णाता.।[1] ठक्कुरेण रवीन्द्रनाथेन वनानामनुपमा सांस्कृतिकोपयोगिता सन्दिष्टा—'यदि भारता योरपीयसांस्कृतिकपद्धतिमनुसरन्ति तर्हि न ते योरपीया भवन्ति किन्तु केवलं दूषितभारता एव भवन्ति । अनेनैव कारणेन तेषां सिद्धान्तानामनुसन्धानमेवास्माकं परं कर्तव्यं वर्तते यैर्भारताः स्वकीयात्मानं अवगच्छन्तु। न ते सिद्धान्ता व्यापारे राष्ट्रियभावनायाः संवर्धने वान्तर्हिता.। सा विश्वात्मकभावना सर्वेषामभ्युदयाय वर्तते । न सा केवलमात्मज्ञानेन सीमिता, अरमात्मविजयस्वरूपिणी सा समर्पणमेवात्मन.। प्राचीनभारतीयवनेषु प्रथममेव तेषां सिद्धान्तानामवबोधोऽभवत्। वनेषु तेषु सिद्धान्तानुसारमाचरणपद्धतिः स्वीकृता। उपनिषदि प्रथमघोषणा विद्यते तस्य सत्यस्य; गीतायां तस्य व्याख्या च कृता। बुद्धस्तु सांसारिकतां परित्यज्याखिलमानवनार्थं तं सन्देशं सुलभं कर्तुं प्रायतत।[2]

भारतीयवनसम्पत्तिः सदैव देशेषु विदेशेषु च बहुमूल्याभिमता। भारतीयकाष्ठं सहस्रयोजनदूरेऽपि विदेशे भवननिर्माणाय प्रेषितम् । चन्दनं. पत्रपुष्पैश्च प्रसाधनानि रचितानि। वन्यपशुचर्मणोर्णेन च बहुविधानि परिच्छदादीनि वस्तूनि निर्मितानि । इत्थं राष्ट्रस्यौद्योगिकाभ्युदयेऽपि वनाना महत्त्वं विशिष्टमेवासीत् ।

### ऋतुसौरभम्

भारतीयप्रकृतेश्चारुता ऋतुक्रमेण विपरिवर्तते । षड्ऋतुक्रमेण वर्षे षड्रूपाण्येव प्राकृतिकपरिधानानि जायन्ते । न कोऽपि ऋतुः कदापि तावत् कठोरः भवति येन पीडिता जना कार्यविरता भवेयुर्न च कस्मिन्नपि ऋतौ भोजनपानवस्त्रादीना वैशिष्ट्येन विना जीवनयापनं दुर्भरं जायते । प्राचीनभारते प्रायः सर्वेषु प्रदेशेषु अधिकतरा वर्षा न्यूनतरोष्णता चाभवताम् । ऋत्वनुसारं भोजन-परिधान-प्रसाधन-व्रत-मनोरञ्जनादीनि व्यवस्थापितानि ।

ऋतूनां प्राकृतिकमनोहारितामनुसृत्य कविभिश्चित्राचार्यैश्च कलाकृतयः समुद्भाविताः । कालिदासस्य ऋतुसंहारे स्पष्टमेतत् ।

### राजनीतिरुमान्यता

राजा तु भारते देव इति सम्मानितः । देववद्राजाऽपि लोककल्याणाय सदैव सचेष्टो भवत्विति राजनीतिकजीवनस्य प्रथमा मान्यता। इन्द्रविष्णुवरुणादिभ्यः प्रजापालनस्य रीतिः प्रचिता । एषा देवानामंशावतारो भवति राजेति भारतीया धारणा ।

राजा वर्णाश्रमधर्मस्य संरक्षक इति शास्त्रवचनम् । सर्वेष्वाश्रमेषु वर्णेषु च वर्तमानाना

---

1 तेषामृषीणां कुटीरा भारतीयसंस्कृतेः परमोत्सा । तत्रैव राजापि समागत्य नतमस्तकोऽभवत्, ऋषिपदं च स्वीचकार। तेषामेवादर्शान् सर्वे समीकर्तुं समीहन्ते स्म। न खलु राजधानी पुरा सम्कृते केन्द्रमभिमतं सत्राम् ।

2. The Message of the Forest

प्रजाना व्यक्तित्वस्य परमविकासाय, तासा कर्तव्ये नियोजनमकर्तव्यान्निवारण च राजधर्म । भारतीये साहित्ये पुराणेतिहासे च बहूनामादर्शनृपाणा चरितगाथा सन्ति तेषु राम-युधिष्ठिराशोक-विक्रमादित्यहर्षभोजादयो वरेण्या ।

राजनीतिस्तु भारते मन्वादिभि स्मृतिकारै शाश्वत व्यवस्थापिता । तदनुसार मनो सनातनशासनपद्धति सामान्यतो वैदेशिकशासकैरपि भारते प्रचारिता । अस्या स्थितौ भारते सास्कृतिकजीवनस्य शृ खला अनवच्छिन्ना वर्तन्ते ।

## ऐतिहासिकसघटनम्

प्राचीनकालादेव सदा भारतेऽनेकधर्मावलम्बिनोऽनेकभाषाभाषिणश्च निवसन्ति ।[1] सर्वेषामेव तेषा यथाकाल परस्पर सम्मिश्रण समभवत् । इत्यमेका राष्ट्रियता सस्कृतिर्निमिता, राष्ट्रभाषा समुदभवच्च ।

देवासुरमानवराक्षसगन्धर्वनागादयो वैदिकसाहित्ये वर्णिता सन्ति । अन्येऽपि बहवो जनसमूहा महाभारते, रामायणे, नाट्यशास्त्रे चोल्लिखिता यवन-किरात गान्धार-चीन-शबर बर्बर-शक-तुषार-कङ्क-पह्लवान्ध्र-मद्रक-पौण्ड्रपुलिन्द-रमठ-काम्बोजाश्च । एतेषा प्रत्येकस्य प्रथम विशिष्टा सत्ता सस्कृतिश्चास्ताम् ।[2] कालान्तरे पारस्परिकसम्मिलनेनास्तित्वमपि तेषा विलुप्तप्रायमेव ।

ऐतिहासिकयुगे ग्रीकशककुशनहूणादयो ये केचिद्भारते आगतास्तेषा सस्कृतिर्भारतीयसस्कृतौ समीकृता ।

## महापुरुषाणा प्रभाव

महापुरुषाणामप्रतिमप्रभावो भारतीयसस्कृतौ वर्तते । प्रथम वैदिकदेवेषु कतिपया — इन्द्ररुद्रविष्णुवरुणादय स्वकीययुगाना महापुरुषा एवासन् । कालान्तर तेषा व्यक्तित्व तादृशमेव दिव्यगुणै समनुगमित यथा रामकृष्णबुद्धादीना महापुरुषाणमवतारत्व सजातम् । शिवविष्णुगौतमादीना चरितगाथाभिर्भारतीयसस्कृति काव्यकलाधमदर्शनादिषु प्रभाविता ।

परवर्तिवैदिकयुगे याज्ञवल्क्याजातशत्रुजनकादयो महर्षय उपनिषत्सु वेदान्तदर्शनस्याध्यात्मिकसाधनायाश्चादर्श प्रस्थापयामासु । वैदिकेतरसस्कृते तीर्थङ्कराणा बोधिसत्वाना चाविर्भाव सजात । कालान्तरे ऋषिपरम्पराया शङ्कररामानुजादीना प्रादुर्भावोऽभवत । सर्वे च ते सनातनाचार्या भारतीयसस्कृत्यै काञ्चिदभिनवा प्रदीप्ति प्रदायास्माक राष्ट्र तामसिकप्रवृत्ते परित्रातवन्त ।

सामाजिकेभ्योऽभिरामजीवनदर्शनप्रदानेन महाकवीनामविमात्र श्रेयो विद्यते । आदि-

---

१. जन बिभ्रती बहुधा विवाचस नानाधर्माण पृथिवी यथौकसम् । अथर्ववेदे १२ १. ४५

२. आधुनिकनृतत्त्वविज्ञानानुसार भारतीयसमाजे आर्य नेग्रिटो मोटोआस्टालायड मगोल-भूमध्यसागरीयद्राविडादीना सम्मिश्रण वर्तते ।

कविर्वाल्मीकिर्व्यासश्च रामायणमहाभारतादिषु ग्रन्थनिर्माणाय या पद्धतिं चक्रतुस्तामेवानु-सृत्याश्वघोष-कालिदास-भारवि-श्रीहर्षादयो भारतस्य सततजागरणस्य सन्देशमददुः। पूर्वाचार्याणां कलाविज्ञानशास्त्रादीनां परम्परा सानुबन्धा विद्यते।

स्वाभाविकमान्यता

स्वभावत एव भारतीया देवपरा सन्ति। पञ्चतत्त्वानि सामान्यतः शिवतनुरिति सम्मितम्। सर्वं खल्विदं ब्रह्मेति महावाक्यं जगतो दिव्यतां निदर्शयति। आचार्यातिथि-माता-पितृ-गो-ब्राह्मण-सूर्य-चन्द्रादयः प्रत्यक्षदेवा एवाभिमताः। अनेन प्रकारेण भारतवासिनां जगदिदं सर्वदेवमयं विद्यते। अस्मिन् दिव्यसन्नियोगे मानवस्य व्यक्तित्वं प्रकृत्यैव दिव्यं भवति।

अपरा विशेषता भारतीयस्वभावस्य दिक्कालावच्छिन्नानि वस्तूनि प्रत्यनुरागाधिक्य-मेव। अस्या दशाया न कापि सांस्कृतिकधारा कदापि सर्वथा विलुप्ता। केवलं निकटस्थमेव समाराधनं नार्हति, अपितु दूरस्थमपि लोकानुग्राहकं वस्तु पूज्यते। तथा हि हिमालयो गङ्गा च भारतस्य दूरस्थभागेष्ववस्थितानां लोकानां दर्शनीयौ अर्चनीयौ च मन्येते। अधुनापि प्राचीनयुगस्य वंशविन्यासधर्मादयो बहुभिराद्रियन्ते भारतीयसमाजे। प्राचीनयुगस्य वीरगाथा, महर्षीणां ज्ञानदर्शनानि च लोकः स्वीकर्तुं समुत्सुको वर्तते।[1] काव्येषु दर्शनग्रन्थेषु च पुरातनप्रवृत्तीनां नवावतारः समीहितः। तद्यथा प्रतिपादितं मनुना—

येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यते॥

सांस्कृतिकप्रवृत्तिषु ज्ञानेन्द्रियैरनुभूतानि तत्त्वानि वाङ्मात्रमुत्सृष्टानि न सम्मितानि यावद् योगदृष्टिभिः परिगृहीतान्यध्यात्मतत्त्वानि। अनया दिशा ऋषीणां वाणी परम-प्रमाणस्वरूपमाप्तवचनमेवाभिमता। इत्थं चाध्यात्मस्य सर्वोत्कर्षमिति परमाशयः।

दर्शनक्षेत्रे भारतस्य विचारस्वातन्त्र्यं सुस्पष्टमेव। वैदिकदर्शनमाश्रित्य परस्परविरो-धिनामपि षड्दर्शनानां प्रवर्तनमद्भुतमेव प्रतिभाति। सहकृपया सवर्णनायान्येषामपि देशविदेशविदुषां ज्ञानसम्पदां स्वीकरणे भारतीयाः सदैव तत्पराः आसन्। अनेन प्रकारेण भारतीयस्वभावस्य सहिष्णुता परिचीयते।

उपर्युक्तैः सांस्कृतिकतत्त्वोन्मेषकैः समायोगैर्भारतीयसंस्कृतेः कानिचिद् वैशिष्ट्यानि सञ्जातानि। तेषां पर्यालोचनं विधेयम्।

---

1 अधुनापि समाजस्थो वर्गो आत्मना वेदोपनिषदः कण्ठाग्रं कुर्वन्ति, इत्यादिग्रन्थेषु नित्यं वदन्ति श्रुत्वा च। राजेन्द्रप्रसाद की आत्मकथा पृ० ५११

Owing to the remarkable continuity of Indian culture the religions and social institutions of modern India are constantly illustr ated by those of the past, Macdonell: History of Sanskrit Literature Preface Page VII

# सांस्कृतिकवैशिष्ट्यम्

## देवर्षिपरायणता

'सर्वं देवमयम्' इति प्रागेव निदर्शितम् । एकस्मात् पुरुषाद् ब्रह्मणो वा जगतः सृष्टिविकासं मत्वा तस्मिन् ब्रह्मणि लय एव जीवनोद्देश्यमिति निश्चित्य मुक्तिः सम्भाविता । एकदेवादाविर्भूतानिन्द्रप्रमुखान् सुरानुद्दिश्य यज्ञाराधनपूजादिकं विहितम् । एषां देवानां प्रसादेन स्वर्गप्राप्तिरिति भारतीयधर्मस्य प्रधाना प्रवृत्तिः ।

भारतीयाः प्रवृत्त्या सामान्यतो देवपराः सञ्जाताः ।[1] भारतास्तु देववाणीमब्रुवन्, तेभ्यो वैदिकनिधिरपि देवेभ्यः प्राप्तः । ते सत्कर्मसु व्यापृता आसन्, यतो देवाः सत्कर्मभिः प्रसन्ना भवन्ति । असत्कर्मणस्ते भीता आसन्, यतः पापकारिणो जनान् देवा दण्डयन्ति । गीतानुसारं तु—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ ९ २७

प्राचीनयुगे ब्रह्मचारिणो ब्रह्मसस्था अपितु ब्रह्मचर्यमचरन् । ते एव मूलरूपेण ब्राह्मणा आसन् । गृहस्थाः ब्रह्मयज्ञे शिष्येभ्यो ब्रह्मज्ञानं दत्तवन्तः, देवपितृयज्ञयोर्देवार्चनं कृतवन्तः, भूतयज्ञे सर्वेषां प्राणिनां दिव्यस्वरूपं हृदि धारयन्तः तेभ्यो भोजनं दत्तवन्तः, अतिथियज्ञे च विष्णुरूपमेवातिथिमागतं मत्वा तस्य सत्कारं कृतवन्तः । वानप्रस्थाः तपसा तत्त्वज्ञानेन च ब्रह्मविचाररहस्यं ज्ञातुमयतन्त । सन्यासिनस्तु ब्रह्मसस्था एवाध्यात्मिकमानन्दमन्वभवन् । देवपरा एव सर्वेषां कलाशिल्पानां विकासः सामान्यतः परिभाविताः । इदमेवानुसृत्य गीतायां दर्शितम्—

देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥

इमामेव देवपरायणतामाश्रित्य राष्ट्रस्य सांस्कृतिकमैक्यं सुप्रतिष्ठितं 'वसुधैव कुटुम्बकम्' इति भावना समाधारिता च । जैना बौद्धाश्च देवसंस्कृतेर्विपरीता बभूवुः ।

यथा देवास्तथैव ऋषयस्तु सर्वैर्भारतवासिभिः स्वकुलस्य प्रथमपुरुषा एव सम्मानिताः । तेषामृषीणां चरितानि लोकानामादर्शभूतानि काव्यकलेतिहासादिषु गीयन्ते । महापुरुषा अपि ऋषिभिस्तुल्या राष्ट्रचरित्रनिर्मातारः सन्ति । तथा हि—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥

## धर्मपरता

भारतीयसंस्कृतौ धर्मपदस्यातिव्यापकवृत्तिर्वर्तते । जीवनस्य प्रथमश्वासतोऽन्तिमश्वास-पर्यन्तं प्रतिक्षणं मानवेन कथं व्यवहर्तव्यमिति धर्मो बोधयति । सर्वेषां वर्णाश्रमाणां सर्वदा

---

1 यथा हि—यद्देवा अकुर्वंस्तत् करवाणीति तैत्तरीये १ ३ २६

पदानां चाधिष्ठातॄणां कर्तव्याकर्तव्यावबोधनं धर्मेण कार्यते। धर्मशास्त्रेषु संस्कारविधि, आश्रमव्यवस्था, जातिव्यवस्था, भोजन-पानालङ्करणावासादि-व्यवस्था, मनोरञ्जनविधानम्, राजनीति, शिल्पकलादयः सर्वाण्यपि सम्यक् प्रकाशितानि। भारतीयबौद्धिकगवेषणा प्रायो धर्मप्रवणाऽभवत्। तद्यथा प्रतिपादितं मैक्डानलमहोदयेन The intellectual life of Indians has, in fact, all along been more dominated by religious thought than that of any other race[1].

सर्वजनीनता

भारतस्यातिविशाले प्राङ्गणे बहूनां सांस्कृतिकसमुदायानामाचार-व्यवहार-परम्पराः क्रोडीकुर्वन्ती भारतीया संस्कृतिरवश्यमेव सर्वजनीनतामुद्वहति।

आध्यात्मिकता

प्राचीनयुगे भारता ऐहलौकिकीषु पारलौकिकीषु च प्रवृत्तिषु समानमेव ममुत्सवः बभूवुः। अध्यात्मपथिका यथाशीघ्रमाधिभौतिकपरिग्रहान् परित्यज्य मोक्षपरायणा अभवन्। ईदृशा मोक्षपरायणाः साधवः सर्वाधिकं सम्मानिता बभूवुः। सम्राजोऽपि तेषां समक्षं नतमस्तका अभवन्। अस्यां दशायां राजापि गृहस्थाश्रमं परित्यज्य वानप्रस्थे प्रवृत्तः सन्नात्मनः पदवृद्धिमेवामन्यत।

सर्वाङ्गीणता

सर्वेषां वर्णानामाश्रमाणां च विकासं प्रस्तावयति भारतीया संस्कृतिः। तत्र देवलोकः, राजप्रासादः, कृपाणकुटीरः, शिल्पागारः, तपोभूमिश्च एते सर्वे कथं रूपिताः सन्तो महत्तमलोककल्याणं विधास्यन्तीति प्रथमा विचारणा। धर्मार्थकाममोक्षाणां चतुर्वर्गाणां स्थापनया जीवनस्य पूर्णता सम्यग्विलसति भारतीयसंस्कृतौ।

धर्मफलम् जन्मान्तरवादश्च

सर्वासु भारतीयसंस्कृतिषु कर्मफलस्यानिवार्यता वर्तते। कर्मणः फलमस्मिन्नेव जीवने प्राप्यत एव, अतः परमपि मरणोत्तरकाले स्वर्गे, नरके, नानाविधयोनिषु परिभ्रमणेऽपि कर्माणि न त्यजन्ति कर्तारम्। अयं विश्वासः सदाचारस्य महानाधारः।

सत्याग्रहः

समीहितं यथेष्टमुचितं वा स्वामिनं कारयितुं प्रेरणा सत्याग्रहेण समुद्भाविता इति विदिता पद्धतिर्भारतवासिनां वर्तते। कठोपनिषदि नचिकेतसः, रामायणे भरतस्य, पुराणे प्रह्लादस्य तादृश्यः कथाः प्रथिताः सन्ति। राजतरङ्गिणीवर्णनानुसारं तु बहुषु स्थानेषु ब्राह्मणाः प्रायोपवेशेन राज्ञो न्यायोचितपथं प्रचरितुं प्रेरितवन्तः। कश्चिद् गोपालो राजानमन्यायपथाद् विरमयितुमनिशरणमवापेति तत्रैवोल्लिखितम्—

घरके धर्मपतूनामुत्तस्थेऽपि तदार्पितं।
वह्नि गोपालकोऽप्येकः कारुण्यप्रवणोऽविशत्॥ राजत० ८ २२२६

---

१ A History of Sanskrit Literature P. 7

### सर्वे सुखिन सन्तु

आत्मसुखाभिलाषुका बहवस्तत्र सन्तु सर्वत्र, किन्तु सर्वेषा सुखाय यत्नकारिणो भारतीयसस्कृतौ एव प्रतिष्ठिता बभूव ।[1] इदमेव निर्वार्य सुकृतिन आत्महिताय स्वल्पवस्तूनामेवोपयोग समीचीन मन्यन्ते । अस्या दशाया परेषा शोषणमसम्भव भवति । सर्वे सुखिन सन्तु' इत्यस्य सिद्धान्तस्य श्रेष्ठानुयायी महाराजोऽशोकोऽभवत् । तस्य मतेन यत्किञ्चित् सत्य शिव सुन्दर चास्ति तत् सर्वेषामेव भवतु ।

### सनातनता

भारतीयसस्कृतौ कतिपयसनातनादर्शा राजन्ते । न ते परिवर्तनमर्हन्तीति लोकधारणा । तद्यथा—वेदाना प्रमाण, सत्याहिंसादीना पालन वा । त एवादर्शा भारतीया सस्कृतिममरीकुर्वन्ति । तथया ऋग्वे प्रार्थनास्ति ।

मा न पथ पिथ्यान्मानवादधि दूर नैष्ट परावत । ऋ० ८ ३० ३

### नि सीमता

सस्कृते सर्वेषु क्षेत्रेषु नि सीमता स्पष्टमेव वर्तते । सास्कृतिकाभ्युत्थानाय बहुविधा योजना कृता, किन्तु तासा निर्मातार कदापि स्वयोजनाया सर्वोत्कृष्टत्व न प्रत्यपादयन् । नित्य नवीनतरा मान्यता स्वीकृता । विज्ञानशिल्पकलादिष्वपि सर्वत्र नवीना प्रयोगा समीकृता । विशालेऽस्मिन् भारतप्राङ्गण भारतीयसस्कृते विविधदृश्यावलोभि समलङ्कृता नि सीमता समन्वयात्मिका वर्त्तते । दार्शनिकभूमौ नि सीमताया सर्वोच्चविकासो गीताया लभ्यते । निस्सीमतया बहुसख्यकाना वर्गाणामेकसूत्रेणोपनिबन्धन सम्भावितम् ।

### तपस फलोत्पादकत्वम्

भारतीयसस्कृतौ तपस प्रभावोऽत्युच्चोऽभिमत । सृष्टे समारम्भ एव प्रजापतेस्तपसोऽभवत् । सर्वेषु आश्रमेषु धर्मेषु, पराक्रमेषु च तपसैव सिद्धि समाम्नाता । तपस्तु त्यागस्य परम रूपम

## भारतस्यैक्यम्

भारतस्यैकत्व प्राचीनयुगे सदैव सम्प्रतिष्ठितमासीत् । न केवल भारतवासिनोऽपितु वैदेशिकविद्वासोऽपि कश्मीरप्रदेशात्कन्याकुमारीपर्यन्त सिन्धुतो ब्रह्मपुत्रपर्यन्त च भूभागमेकदेशमेवामन्यन्त ।[2] विष्णुपुराणेऽस्य देशस्यैकत्वमनेन श्लोकेन निर्दशितम्—

---

१. माता यथा नियं पुत्त आयुसा एकपुत्तमनुरक्खे ।
एव पि सब्बभूतेसु मानस भावये अपरिमाण । सुत्तनिपाते मेत्तसुत्त ७
सान्त्वनेनान्न प्रदानेन प्रियवादेन चाप्युत ।
समदु खसुखो भूत्वा स परत्र महीयते ॥

२ ह्वेनसाङ्गो भारतस्यैकत्वं क्षेत्र च निदर्शयन् लिखति—The Whole territory was about 9000 li in circuit, with snowy mountains on the north and the sea on its three sides ग्रीसारबदेशाना विदुषामपि मतमीदृशमेव वर्तते ।

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥ २·३१

जम्बूद्वीपस्य प्रधानमेव वर्षं भारतं सुप्रसिद्धमेव ।

भौगोलिकदृष्ट्या स्पष्टत एको विदिलष्टभूभागः प्रतिभाति भारतम् । भारतीयेतिहासे सततमेवास्य देशस्यैकता प्रतिफलति । भारतस्य संस्कृतिप्रकृत्योर्विभूतीनां गणनाप्रसङ्गे प्रायशोऽस्य सर्वभागेष्ववस्थितानां नदीनां गङ्गा-यमुना-गोदावरी-सरस्वती-सिन्धु-कावेरीणाम्, नगरीणां अयोध्या-मथुरा-माया (हरद्वार) काशी काञ्च्यवन्तिका-द्वारवतीनाम्, पर्वतानां महेन्द्रमलयसह्यशुक्तिमदृक्षविन्ध्यपारियात्राणां चाकलनं क्रियतेऽधुनापि । शङ्कराचार्यस्तु भारतस्य सीमान्तप्रदेशे विश्वविद्यालयरूपान् मठान् बदरीद्वारका काञ्ची-पुरीषु स्थापयामास । चक्रवर्तिराजेभ्यः समग्रं भारतमर्थशास्त्रानुसारं चक्रवर्तिक्षेत्रमासीत्, यथा—

तस्यां हिमवत्समुद्रान्तरमुदीचीनं योजनसहस्रपरिमाणं तिर्यक्चक्रवर्तिक्षेत्रम् ।

पुरा भारतस्य सर्वेषु भागेषु संस्कृतभाषा राष्ट्रभाषा विद्वद्भाषा चासीत् । इत्थमेव सर्वभागेषु सर्वेषां विज्ञानदर्शनधर्माणां वेदोपनिषद्रामायण - महाभारत - नाट्यशास्त्रमहाकाव्यादीनां तेषां रचयितॄणां च प्रसरणमभवत् । रामकृष्णमहावीरगौतमशङ्कराचार्य-विवेकानन्द महात्मगान्धि-रवीन्द्रनाथादीनां परिभ्रमणोपदेशभूमिः प्रायो भारते सर्वत्रैवाभवत् । देशेऽस्मिन्नधुनापि प्रायः सर्वत्रैव सामाजिकव्यवस्थैकरूपेण वर्तते ।

राजनीतिकविचारेण भारतस्यैकत्वममर्दिग्धमेव वर्तते । समग्रभारतं सदैवैकच्छत्राधीनं नाभवदिति सत्यमेव । तथापि बहवस्तत्र महाराजा बभूवुर्येषां दिग्विजयप्रवृत्तिर्भारतस्यैक्यमेव राजनीतिकदृष्ट्यापि निदर्शयति । प्राचीनभारते राजा तु मनोः प्रतीकमात्रमेवासीत् । कस्मिंश्चिदपि काले भारतस्य विभिन्नभागेषु राजमानाः बहवो राजान एकस्य मनोरनेकरूपाण्येवासन् । अस्मिन् प्रसङ्गे राज्ञो महत्त्वं न वर्तते । महत्त्वपूर्णं तदासीन्मनुमार्गेण प्रणिहिता राजनीतिर्या समस्ते भारते एकैवाभवत् ।

भारतस्य सर्वेषां भागानां जना इतरभागेषु गत्वा तत्र वस्तु स्वतन्त्रा आसन्, विद्यार्थिनस्तु भारते पूर्वेषु भागेषु पश्चिमेषु पर्यटन्ति स्म । विद्याप्रदातार आचार्याः कथक कला-काराश्च सर्वेषु जनपदेषु परिभ्रम्य तत्रत्यजनान् पर्यानन्दयन् । तेषां कृतिषु सर्वं भारतमेव प्रतिफलितमासीत् । तद्यथा कल्हणः कश्मीरराजस्य मातृगुप्तस्याभिषेकं वर्णयन् भारतस्य विविधभागानां विभूतीः संस्मरति—

तस्य विन्ध्यतटव्यूढवक्षसः परिनिर्लुठत् ।
सज्ञाब्दसभिषेकाम्बु रेवास्रोत इवाबभौ ॥
राजत० ३,२४७

श्लोकेऽस्मिन् काश्मीरक कविर्विन्ध्यस्य रेवायाश्च सौभाग्यसौन्दर्यं विपुलयति उपमाद्वारेण। न कदापि भारतस्य ह्रस्वो विशालो वा कश्चिद् भाग सकुचितमतिभिरपि स्वात्मसकोचाय परिकल्पित ।

अपर च भारते न काप्यासीत् तादृशी राज्याना शाश्वतसीमा ध्रुवं वा क्षेत्र यादृशी योरपीयराज्येष्वधुना वर्तते। य कश्चिदधिकतर शक्तिशाली राजा बभूव स यथेष्ट क्षेत्रमधिकृत्य स्वराज्यसीमा निर्मितवान्। अस्या स्थितौ बहुषु राज्येषु स्थितेष्वपि देशस्यास्य साकल्यं न विलुप्तम्। ततो न कदाप्यस्य छिन्नाङ्गत्व समर्थनीयम्।

## संस्कृतिः सभ्यता च

सभाया साधुरिति सभ्य । तस्य भाव सभ्यता । कस्यापि मानवस्य समाजस्य वा तान् गुणानधिकृत्य सभ्यता जायते यैस्ते समाजस्य सघटन कुर्वन्ति, परस्पर सवर्धयन्ति, सौहार्द सहिष्णुता च दर्शयन्ति। इत्य सभ्यतापदेन मानवस्य सर्वोच्चगुणा सामस्त्येन व्यक्ता भवन्ति। सस्कृतिस्तु कस्मिंश्चिदपि वस्तुनि सर्वोच्चयोग्यताया आधानमेव सक्षेपेण भवति। मानवीयसस्कृत्या मानवव्यक्तित्वस्य विकास परिलक्ष्यते, किन्तु तेन विकासेन सार्वजनिक कल्याण भवति न वेत्यनिश्चितमेव। कल्याणकारित्व च सस्कृतौ सभ्यतया प्रजायते। कोऽपि वैद्यराज प्राप्तविद्य सस्कृतोऽपि यदि रोगिणामार्थिकशोषण करोति तर्हि सोऽसभ्य एव।[1]

अस्मिन्पुस्तके प्रथम सस्कृतेर्निदर्शन क्रियते प्रसङ्गत सभ्यताया वर्णनमपि भविष्यति। सभ्यतासस्कृत्यो सामञ्जस्यगति सर्वथा प्रशस्ता।

## संस्कृतिज्ञानस्य साधनानि

भारतीयसस्कृतेर्ज्ञानार्थं सामान्यतोऽस्माक पूर्वजाना कृतयोऽवशिष्टानि च तासा रूपाणि विदेशतो भारते आगताना यात्रिणा लेखास्तत्तत्त्वविदुषा निबन्धाश्च सोपयोगानि सन्ति।[2] पूर्वजाना कृतय साहित्यपुराणेतिहास-पट्टावली-वशावली-शिलालेख-ताम्रपत्र-मुद्रा-शिल्पास्त्रशस्त्रादिरूपा प्राप्यन्ते। आसु प्राचीनतमानि प्रस्तरयुगस्यास्त्राण्येव सन्ति। तस्मिन्युगे जना काष्ठम्यास्य्न प्रस्तरस्य चास्त्राणि निर्मितवन्त। अस्त्रार्थं धातुप्रयोगोऽज्ञात एवासीत। दक्षिणभारते 'बेल्लारी' प्रदेशे प्रस्तरयुगस्य बहुसख्यकान्यस्त्राणि बहुविधान्यपररूपाण्यवशिष्टानि च प्राप्यन्ते। शेषभारतेऽपि इतस्तत समकालिकावशिष्टानि वस्तूनि लभ्यन्ते।

### साहित्यम्

भारतवर्षस्य पुरातन साहित्यिकनिधिरतिशयसमृद्धो वर्तते। तत्र प्रथम स्थान वैदिक-

---

१ दुर्जन परिहर्तव्यो विद्ययालङ्कृतोऽपि सन्।
मणिना भूषित सर्प किमसौ न भयङ्कर ॥

२ कल्हणन राजतरङ्गिण्या १ ११—२० श्लोकेषु बहूनि प्राचीनसस्कृतिज्ञानसाधनानि वर्णितानि।

साहित्यस्यैवास्ति। वैदिकसाहित्येन वेदसंहितानां, ब्राह्मणग्रन्थानामारण्यकोपनिषदां च निर्देशो भवति। पश्चात् श्रौतगृह्यधर्मसूत्राणां स्मृतीनां च ग्रन्था वर्तन्ते। प्रायोऽस्मिन्नेव युगे महाभारतरामायणयो रचना कृता। इमे द्वे संस्कृतिज्ञानाधाकररूपे स्त। आभ्यां सह पालिग्रन्थानां रचना समारब्धा। पालिसाहित्यस्य त्रिपिटकानि मूलग्रन्थाः। इमानि समाश्रित्य परवर्तियुगे दर्शनधर्मादिकमधिकृत्य विपुलसाहित्यं विरचितम्। वेदाङ्गानां शिक्षाकल्पनिरुक्तच्छन्दोज्योतिषव्याकरणविषयाणां ग्रन्था वैदिकयुगे विरचिताः। कालान्तरे तेषामभाव एव सञ्जातः, किन्तु वेदाङ्गपरम्परा सदैव सानुबन्धाभवत्। पाणिनिर्व्याकरणमधिकृत्याष्टाध्यायीमरचयत्। तामेव समाश्रित्य पतञ्जलिना महाभाष्यं रचितम्। मौर्ययुगे कौटिल्येनार्थशास्त्रस्य रचना कृता। उपर्युक्तैः सर्वैर्ग्रन्थैः प्रावरप्रोष्ठयुगस्य संस्कृतिधारा परिचीयते।

रामायणमहाभारतयोः शैलीमनुकृत्य परवर्तियुगेऽष्टादश पुराणानि, उपपुराणानि च विरचितानि सङ्कलितानि वा। एषु ग्रन्थेषु सृष्टेरादिकालत एव मानवजीवनस्य सर्वाङ्गीणा विशदा गाथा प्राप्यते। अपराणि च तत्र सन्त्येव नीतिशास्त्राणि कामशास्त्राणि च, यैः समकालिकजीवनस्य लौकिकपक्षः प्रकाश्यते।

खीष्टाब्दसमारम्भादेव भारते काव्यग्रन्थानां प्राचुर्यं वर्तते। तत्र खलु महाकाव्यरूपक-गद्यकाव्यादीनां महानिचयो वर्तते। अश्वघोष-कालिदास-भारवि-भवभूति-बाणभट्ट-माघ-दण्डि-सुबन्धु-श्रीहर्ष-कल्हणप्रमुखा असंख्यास्ते महाकवयो येषां कृतयोऽधुनापि लभ्यन्ते। ततोऽप्यधिकतराः संख्या तेषां सरस्वतीललितानां, येषां काव्यवैखरी कालेन कवलीकृता।

जैनसंस्कृतेः परिचयार्थमङ्गोपाङ्गपुराणादिकमतिसमृद्धं साहित्यं संस्कृत-प्राकृतापभ्रंश-भाषासु लभ्यते। तामिलभाषायामपि प्राचीनसंस्कृतेरमूल्यानि पुस्तकानि विद्यन्ते।

शिल्पायुर्वेद-यन्त्र-सैन्यविधानादीनि कला-ज्ञान-विज्ञानात्मकान्यधिकृत्य पुस्तकानि वर्तन्ते।

## नगरध्वंसावशेषाः

प्राचीनतमसंस्कृतेः सुस्पष्टज्ञानाय प्रायः चतुःसहस्रवर्षपूर्विकायाः सिन्धुसभ्यतायाः नगरध्वंसावशेषाः विशेषमहत्त्वपूर्णा वर्तन्ते।[1] तैरवशेषैः तत्रत्यलक्षाधिकनागरिकाणां जीवनविधिः संस्कृतिर्वा प्रायः सामस्त्येन ज्ञायते। तस्मिन् युगे उत्तरभारतस्य बहुषु स्थानेषु सिन्धु-सभ्यतायाः प्रसारोऽभवत्। विशेषतो राजस्थाने गंगानगरजनपदस्य कालिबंगाग्रामे, उदयपुर-जनपदस्य अहारग्रामे, घग्घरघाटीषु च सिन्धुसभ्यतानुवर्तिन्यो वसतय आसन्निति उत्खननेन प्रमाणितम्। अन्या समकालिकवसतयः पञ्चनद-सौराष्ट्र-महाराष्ट्रोत्तरप्रदेशेषु च प्राप्ताः।

---

१. सिन्धुसभ्यतायाः पुरातननाम दिल्मुन इत्यासीत्। एतत् मतं पेनसिल्वानिया विश्वविद्यालयस्य डा० सेमुयलक्रेमर महोदयेन पुरस्कृतम्।

बहवस्तत्र वर्तन्ते प्राचीननगराणां ध्वंसावशेषा । तेषु केषाञ्चिदेव खननं सम्पादितम्। तथा हि हस्तिनापुर-तक्षशिला पाटलिपुत्र-कौशाम्बी-नालन्दादिषु प्राप्ता अवशेषा दर्शनीया एव।

ताम्रपत्रशिलालेखादय.

प्राचीनसस्कृते प्रामाणिकमैतिहासिकं च ज्ञानं शिलालेखस्तम्भलेखताम्रपत्रादिभिरेव भवति । ख्रीष्टाब्दत त्रिशताब्दं प्रागेवाशोकेन भारतस्य विभिन्नभागेषु शिलालेखा स्तम्भलेखाश्च प्रतिष्ठापिता । तेषु लेखेषु महाराजस्याशोकस्य प्रजानामभ्युदयाय सवर्धनाय चोदात्ता नीतिरद्यापि विपुलसन्देश ददाति । ख्रीष्टाब्दत त्रिशताब्दं प्रागुत्कलप्रदेशे जैन-राजेन खारवेलेन हाथीगुम्फाशिलालेख कारित । परवर्तिनो गुप्तस्य यशोधर्मणश्च लेखा प्रमुखा सन्ति ।

प्राचीनकाले दानानि सामान्यतस्ताम्रपत्रै. प्रमाणितानि । ईदृशेषु ताम्रपत्रेषु दानो-द्देश्यानि, दातुर्वंशावली, सामाजिकस्थितिश्च प्रायो दर्शितानि । शिलालेखाना ताम्रपत्राणा च सम्पादितसंग्रहा, बहुषु ग्रन्थेषु प्रकाशिता वर्तन्ते ।

मुद्रा

मुद्रा अपि पूर्ववदुपयोगिन्यो भवन्ति । तासु राज्ञा प्रमुखेतिवृत्तानि, तेषा राज-चिह्नानि, पूज्यदेवताना प्रतिकृतयश्चाङ्कितानि वर्तन्ते । मुद्राभि. प्रायश कलाप्रमाणा ज्ञायन्ते । वैदेशिकमुद्राभिर्विदेशव्यापारोऽनुमीयते ।

शिल्पकला

प्राचीनध्वसादिषु प्रचुरशिल्पसामग्री विद्यते । सिन्धुसभ्यताया युगात्प्रभृति प्राय सदैव सवत्र च कलाकृतयोऽभवन् । वैदिकजैनबौद्धप्रमुखासु सस्कृतिषु शिल्पकला-नामतिशयमाहात्म्य बभूव । फलतो देवालयस्तूपगुहादय कलाकृतय निर्मिता । न केवल भारते परन्तु लङ्का-वर्मा स्याम-जावा-सुमात्रा-बाली-चीन-जापानादिषु देशेषु भारतीयकलाप्रमाणादर्शा प्रतिष्ठापिता. । शिल्पकलाधिष्ठानेषु प्रायशस्तत्र.त्य. समकालि-कस्य सामाजिकजीवनविधि सामस्त्येन निदर्शितो वर्तते ।

वैदेशिकलेखा

प्रथम तु वैदेशिको लेखो मेसोपोटामियाप्रदेशे प्राप्त । अस्मिन् लेखे वैदिकदेवाना चर्चा विद्यते । अनेन ऋग्वेदस्य रचनाकालादीना परिचय प्राप्यते । तत पश्चाद् ग्रीस-देशस्य यवनयात्रिणामितिहासज्ञाना च निबन्धन महत्त्वपूर्णं विद्यते। हेरोडोटस-मेगस्थनीज-प्लीनी-स्ट्राबो-डायोडोरसारयनादय प्रमुखयवनलेखका बभूवु , येषा कृतिषु भारतवर्णनं विद्यते ।

चीनदेशस्य बहवो यात्रिणो भारतीयविद्याभिलाषिणो भूत्वा परिभ्रम्य चास्माकं देशस्य विविधभागेषु स्वकालिकमितिवृत्त लिखितवन्त । ह्वेनसागफाह्यानेत्सिंगादय. तेषु यात्रिषु प्रमुखा आसन् । बहवो भारतीयविद्वासो वृहत्तरभारते तुर्किस्तानचीनजापानेण्डोचीनपूर्वि-

द्वीपसमूहेषु भारतीयसंस्कृतेः प्रचारार्थं गताः। तेषु तेषु देशेषु निवसन्तः तेऽगणितग्रन्थान् रचयन्। तेषु ग्रन्थेषु भारतीयसंस्कृतेर्वर्णनं विद्यते। पूर्वद्वीपसमूहेष्वद्यापि रामायणमहाभारतादिकं समाश्रित्य लिखिता बहवो ग्रन्था प्राप्यन्ते। अरबदेशवासिनः कतिपयविद्वांसः सुलेमानाबुजैदुल्हसनेब्नमुर्दबादयः भारतीयवृत्तं सविस्तरमेव लिखितवन्तः।

## सांस्कृतिकयुगविभाजनम्

संस्कृतिमधिकृत्य भारतीयेतिहासस्य त्रयो विभागाः कल्पिताः—प्राचीनं मध्ययुगीनम्, अर्वाचीनञ्च। प्राचीनयुगं सृष्टेरादिकालादारभ्य खीष्टस्य पश्चात् द्वादशशताब्दपर्यन्तं वर्तते। ततः परं मध्ययुगमारभ्यते। मध्ययुगे भारतीयसमाजो वैदेशिकसंस्कृतीनां प्रवृत्तिभिरत्यन्तं प्रभावितोऽभूत्। खीष्टस्य पश्चादष्टादशशताब्दपर्यन्तमेव मध्ययुगीनाः प्रवृत्तयो वर्तन्ते। तस्य पश्चात् यूरोपीयजातीनां समागमेन भारते पाश्चात्यसंस्कृतेराविर्भावोऽभूत्। अस्मिन् नवयुगे भारतीयसंस्कृतिः पाश्चात्यसंस्कृत्या प्रभाविता दृश्यते।

उपर्युक्तसांस्कृतिकयुगविभाजनं तावन्मात्रमेवावितथं यावन्मात्रं गङ्गायास्त्रिभागाः—पर्वतदेशीयः, समतलदेशीयः, समुद्रदेशीयश्च कथ्यन्ते। वस्तुतस्तु गङ्गाधारा सदाधारा त्वेकैव। तथैव भारतीयसंस्कृतिरेकैव वर्तते। कालान्तरे जातानां परिवर्तनानां विकासप्रवृत्तीनां च परिचयार्थं क्रमाणां युगानां विभाजनं स्वीकृतम्। अधुनापि प्राचीनसंस्कृतिर्वाहिता वैदेशिकसंस्कृतिभिः क्वचित् सम्पृक्तापि भारतीयानामभ्युदयपथं प्रकाशयति।

# संस्कारः

व्यक्तित्वस्य विकसनमेव संस्कृति । संस्कृते समारम्भो भारते प्रथम संस्कारेभ्यो भवति। यत्किञ्चिदपि प्रागाकलित विकाससौरम्य मानवताया विद्यते, तस्य भावेन भावनमेव संस्कार । संस्कारेणैव शिशो मानवताया प्रथमोद्बोधो भवति। गर्भाधानात् प्रभृति मरणपर्यन्त संस्कारविधिना पुरुषस्य शरीरस्य मनसश्च शुद्धिर्जायते समक्ष च तस्य भाविजीवनस्योत्थानमयी परम्पराविष्क्रियते[1] । व्यक्तित्वस्य विकासाय तत्सम्बन्धितत्त्वानुशीलनम्, उपदेशश्रवणम्, गुरुजनाना वैदिकमन्त्रै शुभाशसा चावश्यमेव प्रभावोत्पादकानीति भारतीयाना धारणा ।

भारतीयकल्पनानुसार सर्वेषु समारम्भेषु देवाना सहायता सोपयोग वर्तते। व्यक्तित्वस्य विकासनेऽपि पदे पदे तेषा सहायता याचनीया भवति। देवा प्रार्थिता सन्तोऽदृश्या अपि सहायता कर्तुं सन्मार्गे नियोजयितु च प्रस्तुता भवन्ति । संस्कारप्रक्रियासु तेषा समक्ष शुद्धसंस्कृतोन्नतिप्रवणाय भाविजीवनाय प्रतिज्ञा क्रियते ।

एषु संस्कारेषु षोडश एव प्रायशो धर्मग्रन्थेषु संगृहीता । तेषा प्रमुखसंस्काराणा नामानि गर्भाधान-पुंसवन सीमन्तोन्नयन विष्णुबलि-जातकर्म-नामकरण-निष्क्रमणान्नप्राशन-चौलोपनयन चतुर्वेदव्रत-समावर्तनविवाहा सन्ति। व्यक्तित्वस्य विकासदृष्ट्या ब्रह्मचर्यमतिशयमहत्त्वपूर्णं विद्यते । ब्रह्मचर्यस्यारम्भ उपनयनविधेरनन्तर भवति। प्रायश संस्कारा शैशवे सम्पाद्यन्ते ।

संस्काराणा सर्वजनीनत्व प्रत्यक्षमेव वर्तते । शूद्राणा स्त्रीणा च संस्कारा मन्त्रविहीना कृता ।

स्त्री-संस्कार-विषये मनुना प्रोक्तम्—

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषत ।
संस्कारार्थं शरीरस्य यथाकाल यथाक्रमम् ॥ मनु० २·६६

संस्कारा अपरिहार्या आसन् प्राचीनयुगे । अकृतसंस्कारा जना जातिच्युताश्चाण्डालशूद्राणा समकक्षत्व प्रापाश्चेति प्रमाणितम् । उपनयन तु द्वितीय जन्मैव येनार्यो द्विजो भवति ।

प्राचीनयुगे पितृणामत्यधिका चिन्ता पुत्रस्य व्यक्तित्वविकसनाय बभूव । 'आत्मा वै जायते पुत्र ' इति शास्त्रवचनानुसार पिता स्वयमेव पुत्ररूपेण जायते । अस्या दशाया

---

१. तथा हि रानशेखर काव्यमीमासायाम्—'संस्कारो ह्यात्मनि समवैति, न स्रोतेण पौरुष वा विभागमपेक्षते ।'

पिता स्वकीयामावानपि पुत्रसमृद्ध्या परिपूर्णात्मानं बहु मन्यते स्म । प्राचीनयुगस्य धर्म-परायणतापि संस्कारं सर्वजनग्राह्यं विदधाति स्म ।

## गर्भाधानम्

शिशोर्मातुर्गर्भे बीजरूपेण प्रतिष्ठापनं हि गर्भाधानम् । वैदिककालेऽस्मिन्नवसरे विष्णु-त्वष्टृ-प्रजापति-सरस्वतीनां स्तवनं कृतम् । बृहदारण्यकोपनिषदि विशिष्टगुणैः समन्वितान् पुत्रान् प्राप्तुं विशिष्टभोजनानां विधानं वर्तते ।

परवर्तियुगे गर्भाधानाय तिथीनां नक्षत्राणां च शुभाशुभत्वं पर्यालोचितम् । विज्ञान-सम्मतं प्रतिभाति विधानमिदम् ।[1] गर्भे स्थाप्यमानः शिशुर्मातुर्मानसपटलाङ्कितपुरुषस्य सादृश्यं प्राप्नोति । अत एव हीनाः पुरुषास्ततो न द्रष्टव्या इति केषाञ्चित् शास्त्रकाराणां मतम् ।

मातुः पितुश्चोदात्तविचाराणां सङ्कल्पनम्, तेजस्विपुत्रप्राप्तिकामना, दिव्यशक्तीनां सान्निध्यं चास्य संस्कारस्य वैशिष्ट्यानि । 'संस्कारोऽयं किमात्मनि श्रेयसाय, उत पुत्रनि-श्रेयसाय । पुत्रनिःश्रेयसायेति प्रमाणम् ।

## पुंसवनम्

गर्भस्थशिशोः पुंस्त्वं विधातुं पुंसवनं क्रियते । प्रथमं तावत् देवानां स्तुतयः कृताः, तेभ्यश्च देवेभ्यः पुत्रप्राप्तये वरो याचितः । अस्मिन्नवसरे गर्भरक्षणार्थं पुत्रोत्पत्तये चायु-र्वेदोक्तोपयोगाः प्रयोगाश्च कृताः ।[2] पुंसवनसीमन्तोन्नयनसंस्कारविधिषु समायोजितः सोल्लासं कृत्यं स्वास्थ्यसंवर्धनाय भवति, गर्भस्थशिशोः कल्याणं जायत इति सुनिश्चितमेव ।[3]

वैष्णवसंस्कृतौ पुंसवनार्थं वर्षपर्यन्तं विष्णोः स्तुतिः तस्याराधना पूजा च कर्तव्या इति विहितम् ।[4]

## सीमन्तोन्नयनम्

सीमन्तोन्नयनमुत्सवप्रायमभवत् । संस्कारेऽस्मिन् पतिः पत्न्याः केशपाशमलङ्कुर्वन् तस्मिन् सीमन्तमरचयत् । गीणत्रो गर्भभारक्लान्ता माता प्रमादिताभूत् । वैदिकयुगे सीमन्तोन्नयनावसरे वीणागाथिनो वीणावाद्यपूर्वकं सोमराजस्य स्तुतिमकुर्वन् । सीमन्तो-न्नयनं गर्भाधानात् चतुर्थे मासे सम्पादितम्, यदा शुक्लपक्षे पुष्या नक्षत्रेण चन्द्रमा युक्तोऽ-भवत् ।

---

१ R B Pandey Hindu Samskaras p 89

२ पुंस्त्वलक्षणानामाविर्भावात्प्राग्गर्भस्थशिशोर्लिङ्गपरिवर्तनं कर्तुं शक्यत इति स्पष्टं मतमायुर्वेदस्य । चरके शारीरस्थानप्रकरणे ८. ३—२५ ।

३ समानयोगक्षेमा हि माता तदा गर्भेण केषुचिदर्थेषु । शारीरस्थाने ४ १६

४ भागवते ६ १८—१९ अध्यायत ।

## विष्णुबलिः

गर्भाधानादष्टमे मासे विष्णुबलिसंस्कारेण विष्णवे चतुष्पष्टिबलयः समर्पिता वैदिकसूक्तैश्च तस्य देवस्य स्तुतिः कृता। प्रभावेणास्य संस्कारस्य गर्भस्थशिशोः संरक्षणं निरापद् प्रसूतिश्चाभ्यर्थ्येताम्। सोष्यन्तीकर्मसंस्कारेणासन्नप्रसवाया मातुः कल्याणार्थं सुखेन प्रसवार्थं चायोजनं कृतम्।

## जातकर्म

शिशौ जाते महान् हर्षो जायते। प्रथमं तावत् वैश्वानरस्य परितुष्टिः सम्पाद्यते। वैश्वानरस्य परितोषेण जातस्य शिशोः कालान्तरे तेजस्वितायाः समृद्धेः शक्तेश्च सम्भावना अभिमता। नाभिवर्धनात्प्रागेव पञ्चभिर्ब्राह्मणैः शिशोरनुप्राणनमक्रियत। अनेन विधानेन तस्य पूर्णजीवनस्याभ्युदयस्य चाशा सम्भाविता। ब्राह्मणानां संसर्गो रहस्यविधिना शिशोर्ब्राह्मणत्वविधायकः इति धारणासीत्। पश्चात् पृषदाज्यस्याहुतिः कृता। अस्मिन् हवने पिताकामयत—

"अस्मिन्सहस्रं पुष्यासमेधमानः स्वे गृहे। अस्योपसद्यां माच्छैत्सीत् प्रजया च पशुभिश्च स्वाहा। मयि प्राणांस्त्वयि मनसा जुहोमि स्वाहा। यत्कर्मणात्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टात्स्विष्टकृद्विद्वान्स्विष्टं सुहुतं करोतु नः स्वाहा" इति।

ततः पितास्य दक्षिणं कर्णमभिनिधाय

"वाग्वागिति त्रिरथ दधिमधुघृतं सनीयानन्तर्हितेन जातरूपेण प्राशयति, भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि, भूर्भुवः स्वः सर्वं त्वयि दधामि" इति सन्दिष्टवान्।[१]

वैज्ञानिकदृष्ट्या मानवस्तु ब्रह्माण्डस्याखिलस्य सूक्ष्मं स्वरूपमेव। अस्य तस्यानुशीलनस्य मानसिकप्रतिष्ठार्थं शिशोर्जन्म प्रथमोऽवसरोऽभवत्। अनेन प्रकारेण मानवव्यक्तित्वस्य विश्वात्मकत्वं नियोजितम्।

पश्चात् पिता शिशोर्नाम कृतवान् 'वेदोऽसि' इति गुह्यमेव नामाभवत्। ततः शिशुं मात्रे प्रदाय पिता तस्मै स्तनं प्रयच्छति सरस्वतीं प्रार्थयते च—

यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि।
यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवेऽकः॥

ततः पितास्य मातरमभिमन्त्रयते—

इलासि मैत्रावरुणी वीरे वीरमजीजनत्।
सा त्वं वीरवती भव, यास्मान् वीरवतोऽकरदिति।

---

१. बृहदारण्यके ६.४। वाक् समवबेदानां प्रतीकोऽस्मिन् प्रकरणे। आयुर्वेदानुसारं दधनेन्द्रियशक्तिं वर्धते, मधुरसः पवीत्वीनां मनं च घृतं तेजः। ऐतरेयब्राह्मणे ८.२०। त्रीणि चेमानि वैदिकयुगस्य श्रेष्ठं भोजनम्। शतपथ ९. ० १. ११

शिशुं सम्बोध्य तदन्या गुरुजना आहुः—

अतिपिता बभूवातिपितामहो बभूव । परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन, य एवंविदो ब्राह्मणस्य पुत्रो जायते ।

आश्वलायनानुसारं दधिमधुघृतं प्राशयन् पिता शिशवे सुवर्णेन पूर्णाङ्गमकरोत् । ततः शिशोर्मेधाजननं कुर्वन् तस्य श्रवणसमीपं मुखमानीयाजपत्—

मेधां ते देवः सविता मेधां देवी सरस्वती ।
मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥

शिशोः स्कन्धं स्पृशन् पिताऽकामयत—

अश्मा भव, परशुर्भव हिरण्यमस्तृतं भव
वेदो वै पुत्रनामासि जीव शरदः शतमिति
इन्द्र श्रेष्ठानि द्रविणानि धेह्यस्मै
प्रयन्धि मघवन्नृजीषिन् ।

उपर्युक्तप्रक्रियायाः प्रत्यक्षस्वरूपमपि प्रदर्शितमासीत् । तद्यथाश्मा परशुर्हिरण्यं क्रमश उपर्युपरि निधाय तस्योपरि शिशुः प्रतिष्ठापितः । अनेन विधिना शिशोः सर्वोच्चत्वं प्रसाधितम् ।

केषुचिदभ्युदयशीलेषु कुलेषु शिशुं शताजीवपरायणं विधातुं जन्मदिने निरन्तरमग्निः प्रज्वालितः[1] । पुत्रजन्मोत्सवे पिता प्रायशो दानमकरोत् ।

## नामकरणम्

नाम्नोऽतिमहत्त्वमिति विदितं सर्वेषाम् । नाम्नो महत्त्वमधिकृत्य बृहदारण्यकोपनिषदि संवादोऽयं प्राप्यते—

याज्ञवल्क्येति होवाच—यत्रायं पुरुषो म्रियते किमेनं न जहातीति । नामेत्यनन्तं वै नामानन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ।[2]

जातकर्मसंस्कारे गुह्यं नाम कृतम् । जन्मतो दशमे द्वादशे वा दिने पुण्ये मुहूर्ते नक्षत्रे वा सर्वजनप्रकाशनीयं नामाक्रियत ।

नाम्नो मधुरध्वनिः स्पृहणीय एव । चतुरक्षरं द्व्यक्षरं वा घोषवदाद्यन्तस्थं पुंसाम्, ईकारान्तमयुग्माक्षरं च स्त्रीणामेव कृते नाम्नि, शुचि तत्कुलं भवतीति । द्व्यक्षरनाम्ना लौकिकैश्वर्यस्य, चतुरक्षरेण चाध्यात्मिकाभ्युदयस्य कामना प्रकटीकृता ।

बौधायनानुसारं पुत्राणां नामानि ऋषिदेवपूर्वजानां नामान्याश्रित्य भवेयुः ।

---

१. कुमारमन्त्रजाते

२. बृ० उ० ३ २ १२ । बृहस्पतिना नामाधिकृत्य प्रशंसितम्—

नामाखिलस्य व्यवहारहेतुः शुभावहं कर्मसु भाग्यहेतुः ।
नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म ॥

साक्षादेव देवाना नामानि न ग्रहीतव्यानि इति। केषुचिद्धर्मशास्त्रेषु विहितम् तद्यथा—ब्रह्मप्रकाश, शिवदास, देवदत्त इति शोभननामानि, न तु राम, विष्णु, सुरेन्द्रो वा पुरुषाणा नामानि भवेयु। स्त्रीणा नामान्यधिकृत्य मनुना निर्दिष्टम्—

स्त्रीणा सुखोद्यमक्रूर विस्पष्टार्थं मनोरमम्।
मङ्गल्य दीर्घवर्णान्तमाशीर्वादाभिधानवत्॥ २ ३३

विष्णुपुराणानुसार तु—

गुप्तदासात्मक नाम प्रशस्त वैश्यशूद्रयो।
नार्थहीन न चाशस्त नापशब्दयुत तथा॥
नामङ्गल्य जुगुप्स्य वा नाम कुर्यात्समाक्षरम्।
नातिदीर्घं नातिह्रस्व नातिगुर्वक्षरान्वितम्॥
सुखोच्चार्यं तु तन्नाम कुर्याद्यत्प्रवणाक्षरम्। ३ १० ९—११

नाम्ना देवाना महापुरुषाणा चोदात्तादर्शा मानवताया समक्ष प्रतिष्ठापिता।[१] नाम्नैवाभ्युत्थानाय प्रेरणा प्रथममेव ग्रहणीया भवेदिति शास्त्रकाराणा मतम्। येन केन प्रकारेण महता देवाना नामोच्चारणेन पुण्योदयस्य धारणा वतत। क्वचिन्मृतशिशूना पुत्रा भिक्षाचरादयो वा सज्ञिता। तत्तेषा जीवनार्थमासीत्। नाम्न प्राक् श्रीशब्दस्य योजन रीतिरासीत् प्राय।

## निष्क्रमणम्

जन्मनश्चतुर्थमासे शिशोर्गृहान्निष्क्रमणमभवत। मातुर्गर्भान्निष्क्रम्य प्रसवगृहे तत निष्क्रम्यान्येषु गृहेषु विचरन् शिशु सङ्कीर्णपरिधौ वसति। तस्मादपि निष्क्रम्य विश्वविभूतीना सग्रहणाय विश्वात्मक व्यक्तित्व सवर्धयेत् शिशुरित्युद्दिश्य सूर्यचन्द्रादीना दर्शनमकारि। सामाजिकसीम्नो निष्क्रम्य स ब्रह्मपथमनुसरिष्यतीति समीहितमुपयु क्तक्रमेण।

निष्क्रमणदिवसे तत्र सूर्यस्य दर्शन प्रथम समासादितम्। सूर्यस्तु भारतीयदृष्ट्या ज्ञानविज्ञानयो परम निधानमेव। आचार्य एव सूर्य सविता वा दिव्यज्ञानाय। सूर्यदर्शन कारयन्नेव विधानमत्—

तच्चक्षुर्देवहित पुरस्ताच्छुक्रमुच्चरत्।
पश्येम शरद शत जीवेम शरद शतम्।
शृणुयाम शरद शत प्रब्रवाम शरद शतम्।
अदीना स्याम शरद शत भूयश्च शरद शतात्॥

रात्रौ निष्क्रमणविधौ चन्द्रदर्शन कारितम्। एतासा दिव्यविभूतीना दर्शनस्य शिशो सर्वत सवर्धन हितकर प्रभावो जात।

---

१ चाण्डालानामपि नामानि शोभनानि बभूवु पुरेति राजतरङ्गिण्यां दृश्यते बहुश।

## अन्नप्राशनम्

शिशोर्जन्मकाले दधिमधुघृतानां प्राशनमभूत्। पश्चात् शिशोः षष्ठमासेऽन्नप्राशनं कृतम्।[1] आयुर्वेदानुसारं लघुहितमन्नं शिशवे दातव्यम्। अन्नस्य न केवलं जीवनधारणार्थमेव महत्त्वमपि तु व्यक्तित्वस्य विकासायान्नस्योपयोगिताभिमता। तद्यथा—

आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति।[2]

अस्यां दशायां स्पष्टमेव प्रतिभाति यत् शिशवे प्रदत्तं प्रथमं भोजनं व्यक्तित्वस्य विकासमुद्दिश्यैव निर्णीतमासीत्। सामान्यतोऽन्नप्राशनाय दधिमधुघृतमिश्रं भक्तमेव दत्तम्। भोजनग्रासं ददद्देव पिता 'भूर्भुवः स्वः' इत्युच्चारणमकरोत्। केचिद्धर्मशास्त्रकाराः समांसं भोजनमन्नप्राशनाय निर्दिशन्ति।[3]

भारतीयधारणानुसारमन्नं देवतारूपं वर्तते। अस्मिन् संस्कारे पदे पदेऽन्नदेवस्य स्तुतिर्विहिता।

कालान्तरेऽन्नप्राशनावसरे शिशोर्भाविजीवनस्य जीविकोपायस्य निर्णयः कृतः। देवानां सान्निध्ये बहूनां व्यवसायानां प्रतीकाः समुपस्थापिताः। तेषु यानि कानिचित् शिशुरचिनोत् तैरेव शिशोर्जीविका सम्भाविता।

## चूडाकरणम्

चूडाकरणं शिशोः प्रथमेऽब्दे तृतीये वा सम्पादितम्। केशानां कर्तनं विधाय शिरसि चूडा कृता। केशकर्तनस्य लाभा आयुर्वेदानुसारं सन्ति। यथा—

पापोपशमनं केशनखरोमापमार्जनम्।
हर्षलाघवसौभाग्यकरमुत्साहवर्धनम्॥
पौष्टिकं वृष्यमायुष्यं शुचिरूपं विराजनम्।
केशश्मश्रुनखादीनां कर्तनं संप्रसाधनम्॥ चरकसंहितायाम्

चूडाकरणात्प्रभृति शिखाग्रहणं भवति। आयुर्वेदानुसारं शिखाया महत्त्वं विद्यते। तथा हि—शिरसः शिखरे शिरासन्धीनां सम्मिलनं भवति। अस्य स्थानस्याधिपती रोमावर्तः। तत्र केनापि प्रहारेण शीघ्रमेव मृत्युर्भवति।[4] अस्य कोमलस्थानस्य रक्षा शिखया भवति।

---

१ षण्मासं चैनमन्नं प्राशयेल्लघु हितं च। सुश्रुते शारीरस्थाने १० ६४

२ छान्दोग्ये ७ २६ २। गीतायामपि समर्थनं दृश्यतेऽस्य मतस्य। गीता १७ ८ १०

३ षाण्मासिके शिशौ मांसभोजनस्य पाचनयोग्यता न विद्यते। कथं मांसभोजनमन्नप्राशनाय समर्थितमिति समस्या। पारस्करस्तु मांसभोजनं समर्थितवान्—भारद्वाज्या मांसेन वाक्प्रसारकामस्य। मत्स्यैर्जवनकामस्य। अन्यथा ब्रह्मवर्चसकामस्य। १ १९ ५ १३

४ सुश्रुते शारीरस्थाने ६ ८३

केशकर्तनस्य समारम्भं स्वयमेव पिताकरोत्। देवेभ्यः स्तुतिं कुर्वन् सोऽकामयत—शिशुर्दीर्घायुः यशस्वी सानन्दश्च भवतु। शिरसि कुलरीतिमनुसृत्य चूडा विहिता। तद्यथा—

'दक्षिणतः चूडा वसिष्ठानाम्। उभयतोऽत्रिकाश्यपानाम्। मुण्डा भृगवः। पञ्चचूडा अङ्गिरसः। केशपङ्क्तिमङ्गलार्थं, शिखिनोऽन्ये। यथाकुलधर्मं वा।'

चूडासङ्ख्या प्रायशो प्रवरसङ्ख्यासमा एवाभवत्।[1]

## उपनयनम्

आचार्येण ब्रह्मविद्याया अध्यापनाय विद्यार्थिनः शिष्यभावेन स्वीकरणमुपनयनम्।[2] ततः पञ्चविंशतिवर्षपर्यन्तं ब्रह्मचर्याश्रमस्य विधानम्। पिता स्वयमेव स्वपुत्रमाचार्यसमीपं नीत्वा तस्योपनयनाय प्रार्थयत। उपनयनसंस्कारे विद्यार्थी तस्याचार्यस्य पुत्ररूपेण पुनर्जायत। पुत्रीकरणस्येयं प्रक्रियाऽथर्ववेदे प्रथमं वर्णिता—

आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः।
तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः॥

वैदिककाले विद्यार्थी स्वयमेवाचार्यसमीपं गत्वा न्यवेदयत्—ब्रह्मचर्यमागामिति।

आचार्यो विद्यार्थिनमाह—

को नामासीति। प्रजापतिर्वै कः।

स तस्य हस्तं गृह्णाति।

*आचार्योऽभणत—इन्द्रस्य ब्रह्मचार्यसि। अग्निराचार्यस्तव। अहमाचार्यस्तव।* आचार्यः ताभ्यां देवताभ्यां विद्यार्थिनं परिददाति। पश्चात् स तं भूतेभ्यः, प्रजापतये, सवित्रे च परिददाति कथयति च—एते वै श्रेष्ठे वरिष्ठे देवते। एताभ्यामेवैनं श्रेष्ठाभ्यां वरिष्ठाभ्यां देवताभ्यां परिददाति। तथा ह्यस्य ब्रह्मचारी न कांचनार्तिमार्च्छति। पश्चात् स *विद्यार्थिनमद्भ्य ओषधीभ्यो द्यावापृथिवीभ्यां विश्वेभ्यो भूतेभ्यश्च परिददाति।*

पश्चादाचार्योऽवदत्—ब्रह्मचार्यसि। अपोऽशानेत्यमृतं वा। कर्म कुरु इति। वीर्यं कर्म। वीर्यं कुरु। समिधमाधेहीति। समित्स्वात्मानं तेजसा ब्रह्मवर्चसेन। मा सुषुप्थाः। मा सुषुप्थाः। आपोऽशानेत्यमृतं वा। तदेनमुभयतोऽमृतेन परिगृह्णाति। अथैनं सावित्रीमन्वाह।[3]

अनेन प्रकारेणोपनयनविधिर्वैदिककालेऽतिदीर्घ आसीत्। उपनिषदि सरलविधिः सत्यकामस्योपनयनप्रकरणे वर्णितः। उपनिषद्युगे गृहस्था अपि आत्मन उपनयनमकारयन्

---

१. प्रवरास्तु वस्तुतोऽपि कुलस्य महान्त एव। प्रवरैः कुलस्योच्चता परिचीयते। 'प्रवरसङ्ख्यासमा चूडा महर्षिसमा भवितुं प्रासादयन्तु' इति धर्मशास्त्रकाराणां मतं प्रतिभाति।

२. उपनयनस्यार्थं मामाचार्यकरणमास्ते। पाणिनि १.३.३६। स्वीकरणमेवोपनयनस्य यथार्थं। काशिका १.३.३६

३. शतपथब्राह्मणे ११.५.४

यदि कदापि तेषां मनसि ब्रह्मज्ञानं प्राप्तुमिच्छाजायत। तस्मिन् युगे प्रायो द्वादशवार्षिका बालका ब्रह्मचर्यार्थमाचार्यकुलवासिनोऽभवन्।

परवर्तियुगे तु सुदीर्घ एवोपनयनविधिर्विकसित। उपनयनाय योग्यकालो निर्धारित — वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं शरदि वैश्यम्। गर्भाष्टमे ब्राह्मणं गर्भैकादशेषु राजन्यं, गर्भद्वादशेषु वैश्यम्। विभिन्नवर्षेषूपनयनसम्पादनेन विविधानि काम्यानि साध्यानि स्युः। तद्यथा सप्तमे ब्रह्मवर्चसकामम्, अष्टमे आयुष्कामम्, नवमे तेजस्कामम्, दशमेऽन्नाद्यकामम्, एकादशे इन्द्रियकामम्, द्वादशे पशुकाममिति। मनुस्तूपनयनावस्थाया अल्पत्वमेव समीचीनममन्यत। तद्यथा—

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे॥ २,३७

उपनयनाय परमावस्थाऽपि निर्धारिता। मन्वनुसारम्—

आ षोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते।
आ द्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः॥ २ ३८

परिवर्तियुगे विस्तृतोपनयनविधेः प्रमुखाङ्गान्यधोलिखितानि—विद्यार्थिन उत्तरीयवासोधारणम्, मुण्डनम्, मेखलादण्डधारणम्, हवनम्, समिदाधानम्, सावित्रीशिक्षणं च। एषु विधिषु पदे पदे वैदिकमन्त्रैर्देवस्तुतिं व्रतानि सङ्कल्पाश्च कृतानि। पश्चादाचार्योऽवदत्—"मम व्रते हृदयं ते दधामि। मम चित्तमनुचित्तं तेऽस्तु। मम वाचमेकव्रतो जुषस्व। बृहस्पतिष्ट्वा नियुनक्तु मह्यम्।"

विद्यार्थिने ब्रह्मचर्यव्रतम्येदृशं विधानमाचार्यः प्रस्तुतवान्—"ब्रह्मचार्यसि। अपोऽशान, कर्म कुरु, दिवा मा स्वाप्सीः, आचार्याधीनो वेदमधीष्व" इति।

अस्मिन्नुपनयनविधौ विद्यार्थिनः मानसिकशुद्ध्यै सर्वोच्चज्ञानाय च सा योजना निहिता, या विद्यार्थिनमुच्चाभिलाषिणं तथा तस्य तपोमये त्यागपूर्णे च जीवने रसमानन्दं च गृह्णती। शिष्याचार्यसम्बन्धोऽत्र देवानां सान्निध्ये प्रतिष्ठापितः सन् गौरवान्वितोऽभूत्।

### यज्ञोपवीतम्

सूत्रनिर्मितस्य आधुनिकयज्ञोपवीतस्य वैदिककाले प्रचलनं नाभवत्। तदानीं यज्ञावसरे उत्तरीयं यज्ञोपवीतविधिना धृतम्। समग्रं जीवनं यज्ञ एवेति मत्वा सदैव यज्ञोपवीतोत्तरीयस्य परिधानं नियतम्।[1] सूत्रयुगे सूत्रनिर्मितयज्ञोपवीतस्य प्रचलनं प्रारभ्यत। उत्तरीयं तु प्रायशो मृगचर्मणा निर्मितम्। तस्य स्थाने सूत्रस्य यज्ञोपवीतस्य परिधानं शनैः शनैः

१ तथा हि मृच्छकटिके—
अमौक्तिकमसौवर्णं ब्राह्मणानां विभूषणम्।
देवतानां पितॄणां च भागो येन प्रदीयते॥ १०.१८

समवर्धत। अधुनाऽप्युपनयनविधौ प्रथमं मृगचर्मणो यज्ञोपवीतं ध्रियते, तत्प्रतीक एव प्राचीनयुगस्योत्तरीयस्य।

कन्यकानामुपनयनम्

वैदिककाले विद्यार्थिनीनां कन्यकानामुपनयनविधानं सुप्रचलितमासीत्। ईदृशीनां कन्यकानां सङ्ख्या तदानीमपि नितरामयमेव नोपोदबलिका। परवर्तियुगे तासां सङ्ख्या स्वल्पतरा बभूव। उपनयनमाचारमात्रमभवत्। कन्यकानामुपनयनं केवलं विवाहकाले धार्मिकविधानस्य पूर्तयेऽभवत्। बाणस्तु कादम्बर्यां तपस्विन्या महाश्वेतायाः वर्णने तस्याः शरीरे ब्रह्मसूत्रस्योल्लेखं करोति।

उपनयनस्य पश्चाद् गुरुः शिष्यं शौचमाचारमग्निकार्यं सन्ध्योपासनं च प्रथममशिक्षयत्। तत परं वेदस्याध्यापनं प्रायशः चतुर्विंशतिवर्षपर्यन्तमभूत्। पञ्चविंशे वर्षे विद्योपेतानां विवाहार्थिनां छात्राणां समावर्तनसंस्कारः आचार्येण सम्पादितः। आजीवनं ब्रह्मचर्यनिष्ठाः बृहद्व्रतधारिणो नैष्ठिकब्रह्मचारिणो वा विख्याताः। विवाहकामा निवेशार्थिन इति संज्ञिताः।

## समावर्तनम्

आचार्याश्रमेऽध्ययनं परिसमाप्य प्रायशो विद्यार्थिनः स्वगृहमागच्छन्। आश्रमाद् गृहागमनं समावर्तनम्। अस्मिन्नवसरे समावर्तनसंस्कारः सम्पादितः। समावर्तनसंस्कारे विद्यासम्पन्नस्य ब्रह्मचारिणो विधिवत्स्नानमभूत्। इदं परिलक्ष्य समावर्तनस्यापरनाम स्नानमेव। समावर्तनसम्बन्धि स्नानमिदं कृत्वैव स स्नातकोऽभवत्। पाणिनिस्तु स्नातकस्यापरपर्यायं स्रग्वीति निर्दिशति। इदं नाम तस्य मालाधारणमुद्दिश्य कृतम्। ब्रह्मचर्यकाले विद्यार्थी सर्वथा भोगविलासादिभ्यो विरक्तोऽभवन्। समावर्तनकाले स शरीरस्य प्रसाधनं कृतवान्। स्नातकस्य वेशविन्यासः गृहस्थानामिवाभवत्।

वैदिकयुगादारभ्य प्रायः सदैव स्नातकः समाजस्य सर्वोत्तमपुरुषोऽगण्यत। अथर्ववेदानुसारं— "स्नातो बभ्रुः पृथिव्यां बहु रोचते। समावर्तनकाले स्नातका आचार्यं प्रति कृतज्ञताभावं न्यवेदयन्। ते तमभिनन्दितवन्तः—"त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति।"[१] आचार्या अपि जीवनोपयोगिसनातनशिक्षामदुः—सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजतन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्याय-प्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि, तानि सेवितव्यानि, नो इतराणि। यान्यस्माकं सुचरितानि, तानि त्वयोपास्यानि, नो

१ प्रश्नोपनिषद् ६.८

इतराणि ।[1] बृहदारण्यकोपनिषदि 'द' अक्षरेण स्नातका उपदिष्टा —दाम्यत दत्त दयध्व चेति ।[2]

ब्राह्मणाय सदा देय ब्रह्म शुश्रूषवे तथा ।
भवतो बहुला सन्तु वेदो विस्तार्यतामयम् ॥
नापरीक्षितचारित्रे विद्या देया कथचन ।
न नियोज्याश्च वा शिष्या अनियोगे महाभये ॥
यथामति यथापाठ तथा विद्या फलिष्यति ।
सवस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ॥
वेदस्याध्ययन हीद तच्च कार्य महत्स्मृतम् ।

स्नातकास्तु —अयोन्य सविभाव्यैव सुप्रीतमनस पुन ॥
विज्ञापयन्ति स्म गुरुम् पुनर्वाक्यविशारदा ।
शैलादस्मान्महीं गन्तुम् काङ्क्षित नो महामुने ॥
वेदाननेकधा कर्तुं यदि ते रुचित प्रभो ।
व्यास —शिष्याणा वचन श्रुत्वा पराशरसुत प्रभु ॥
प्रत्युवाच ततो वाक्य धर्मार्थसहित हितम ।
क्षिति वा देवलोक वा गम्यता यदि रोचत ॥
अप्रमादश्च व कार्यो ब्रह्म हि प्रचुरच्छलम ।

स्नातकास्त व्यासेनानुज्ञाता तस्य प्रदक्षिण कृत्वा मूर्ध्नाभिवाद्य च जग्मु ।

कतिपयाश्चावाप्तविद्या छात्रा आचार्याय दक्षिणादानमर प्रथम वायमम य त राजान प्राप्य मान्र मपामुद्दयानभिमुत्रन ।[3] साधारणनस्तु दक्षिणा स्वल्पैवाभूत यथा मनु —

क्षेत्र हिरण्य गामश्व छत्रोपानहमन्तत ।
धान्य शाक च वासासि गुरवे प्रीतिमाहरन ॥ २ २४६

स्नातकास्तु त्रिविधा अभवन्–विद्यया स्नातीत्य । तथा व्रतनाष्टचत्वारिंशत्पारमाणन । विद्याव्रतेन चत्यक । वपु सर्वेषु स्नातकवृत्ति । स्नातकस्याचारव्यवहारो जीवन विद्याप्रवादास्तौ बभूवतु ।

स्नातकाना जीवनविधान मनुना निर्दिष्टम्—

क्लृप्तकेशनखश्मश्रुर्दान्त शुक्लाम्बर शुचि ।
स्वाध्याये चैव युक्त स्यान्नित्यमात्महितेषु च ॥ ४ ३५

---

१ अत्र द्रष्टव्या तैत्तिरीयोपनिषदि शिक्षावल्ली ११

२ बृ० उ० ५ २

३ रघुवंश की सम्य रघोः दक्षिणाप्राप्ति रम्या कथा वर्तते । पचमसर्गो द्रष्टव्य ।

उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।
उपवीतमलङ्कार स्रज करकमेव च ॥ ४ ६६

स्नातकस्तु सर्वैन मधुपर्केण सम्मानितोऽभवत् । प्रथममाचार्य एव तस्मै मधुपर्कसमर्पणमकरोत । तस्य जीवनविन्यास समाजायादर्श इति प्रमाणितम् ।

समावर्तनमनु स्नातकस्य गृहस्थाश्रमपरिपालनाय गृहिण्या अपेक्षाभूत् ।[१] सा तु विवाहसस्कारेण लभ्यासीत् ।

## विवाहः

विवाहस्तु सन्तानकामाय, प्राकृतिकसुखाय, धर्मसम्पादनाय चाभवत् । सस्कारस्यास्य सातिशय महत्त्वमस्ति ।

### वरवधूना योग्यता

वरवधूना योग्यताया परीक्षा बाह्याभ्यन्तर कृता । बाह्यत सौन्दर्यं पुरुषत्व नारीत्वमवस्था च दर्शनीयानि । आभ्यन्तरदृष्ट्या तयोर्विद्वत्ता चरित्र कुल च परीक्षणीयानि ।

पुरा वैदिकयुगे विवाहावस्था गृहस्थाश्रमस्य योग्यतामनु प्रमाणिता । सावस्था क्रमश वराय वध्वै च पञ्चविंशतिवर्षाणि षोडशवर्षाणि चाभिमता । स्मृतौ कन्यकाना विवाहावस्था स्वल्पीकृता । दशवर्षीया द्वादशवर्षीया वा कन्या परिणेयेति मतम् ।[२]

कामसूत्रानुसार तु वरकन्ययोरवस्थान्तर त्रिवर्षमात्रमेव भवेदिति मत समीचीन प्रतिभाति । स्वयवराणा वर्णनेन स्पष्ट स्यात् यत् पुरा वधूवराणा योग्यताविषये देशभेदो नासीद्विचारणीय । जातिभेदस्यापि महत्त्व स्वल्पतरमेवासीत् ।

बाह्यदृष्टितो गुणप्रकर्ष शारीरिकसौन्दर्यञ्चापेक्ष्येते । वैदिककालत एवास्मै प्रयोजनाय स्वयवरविधि प्रचलित । तस्मिन्युगे कन्यकाना सौन्दर्यनिरूपणाय शाश्वतमानदण्डा सुप्रतिष्ठिता आसन् । तद्यथा—

एवमेव हि योषा प्रशसन्ति पृथुश्रोणि विमृष्टान्तराम् । सा मध्ये सग्राह्या ।[३]

सूत्रयुगे लक्षणसम्पन्नान् स्वस्थान् पुरुषान्श्च वररूपेण चेतु विधान स्वीकृतम् । मनुस्तु कन्यकाया सौन्दर्य [illegible] मन्यते । 'कन्यारत्न दुष्कुलादपि ग्रहणीयम् ।' कामसूत्रानुसार तु रूपशीललक्षणसौन्दर्यस्वास्थ्यै सम्पन्नस्य वरस्यैद्दशैर्गुणै सम्पन्नाया कन्याया विवाहो भवितुमर्हति ।

---

१ भारतीयधारणानुसारम्—न गृह गृहमित्याहुर्गृहिणी गृहमुच्यते । सा [illegible] अर्धाङ्गिनी । पत्नी भूत्वा सा यज्ञकर्मणि सहायाभूत् । तस्या पुत्र प्राप्य पुरुष पूर्णोऽभवत् । पुत्रलाभेन पितृणामृणाद् मुक्तिसम्भाविता । 'आत्मा वै जायते पुत्र' इत्यात्मजननायापि, पत्न्या महती वर्तते आवश्यकता ।

२. वसिष्ठस्मृतौ १४, महाभारतस्यानुशासनपर्वणि ४४ अध्यायत । ब्रह्मपुराणे १.५, वैखानसे १,६, पराशरस्मृतौ ७ ८—९

३ शतपथे १ २.५ १६ ।

भरद्वाजस्तु तदेव समर्थयन्नाह—

यस्यां मनोऽनुरमते चक्षुश्च प्रतिपद्यते ।
तां विद्यात्पुण्यलक्ष्मीकां किं ज्ञानेन करिष्यति ॥

भासस्तु वरस्य वरणीयगुणानुल्लेखयन् मनुं समर्थयति प्रतिज्ञायौगन्धरायणे—

कुलं तावच्छ्लाघ्यं प्रथममभिकाङ्क्षे हि मनसा
ततः सानुक्रोशे मृदुरपि गुणो ह्येष बलवान् ।
ततो रूपे कान्तिर्न खलु गुणतः स्त्रीजनभयात्
ततो वीर्योदग्रं न हि न परिपाल्या युवतयः ॥ २ ६

अनुलोमविवाह एव प्राचीनयुगे सम्मत आसीत् । अनया रीत्या ब्राह्मणक्षत्रियवैश्यवराणां क्रमशः चतुस्त्रिद्विवर्णोत्पन्नाभिः कन्याभिर्विवाहा योग्याः । सगोत्रसपिण्डसप्रवरविवाहानां निषेधोऽभवत् । भागवतानुसारं तु

ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः ।
तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥

विवाहभेदाः

पुरा विवाहस्याष्ट भेदा आसन्—ब्राह्मः, दैवः, आर्षः, प्राजापत्यः, आसुरः, गान्धर्वः, राक्षसः, पैशाचश्च । अस्मिन् प्रकरणे विवाहशब्दस्यार्थो विशिष्ट एव । गार्हस्थ्यसम्पादनाय पतिगृहे वहनाय कन्या येनोपायेन प्राप्ता तमेवोपायमुद्दिश्य विवाहप्रनिर्दिष्टः । अस्मिन्प्रकरणे विवाहः संस्कारद्योतको नास्ति । उपर्युक्तविधिभिः कन्यां सस्वविनिश्चित्य होमविधिः परिणयश्च विहितौ । दक्षेणैतदर्थद्वयं निर्दिष्टम्—

प्राप्तेपूर्वं विवाहेषु विधिर्वैवाहिकः स्मृतः ।
कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥

पुरा भारते बहुविधेषु सांस्कृतिकस्तरेषु विविधवर्णा जना बभूवुः । तथा ब्रह्मपरायणा वेदवादिनो वा ब्राह्मणाः, देवपरायणा यज्ञवादिनो वा ब्राह्मणाः, मन्त्रऋषयः, प्राजापत्यपरायणा मानवाः,[2] समृद्धिशालिन आर्येतरा असुराः, भोगलालित्यपरायणा गन्धर्वाः, बलशालिनो युद्धपरायणा राक्षसाः, छलपरायणा पिशाचाः स्ववर्गस्य वैशिष्ट्येन विवाहार्थं कन्याग्रहणं तेषु तेषु वर्गेषु प्रचलितम् । ब्राह्मणा मानवाश्चार्यवर्गीया बभूवुः । आर्यवर्गीया द्विजा ब्रह्मचर्यव्रतेन स्नातका भूत्वा शास्त्रोपायैर्विवाहार्थं कन्यां प्राप्नुवन् ।

---

१ तद्ये ह वै तत्प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं सत्यं प्रतिष्ठितम् । प्रश्नोपनिषद् १ १५

२ पञ्चदशवर्गेषु चत्वार आद्या आर्या बभूवुः । अपरे आन्तरा आसन् । आर्या द्विजा प्रायशो ब्राह्मणाः क्षत्रिया वैश्याश्च बभूवुः । असुरराक्षसाः प्रायः सर्वे क्षत्रिया वैश्या वा बभूवुः, ये ब्राह्मणा बभूवुः । गन्धर्वा अपि राजन्याः क्षत्रियाः प्रायः वैश्याः शूद्रा वा बभूवुः । सर्वे पिशाचाः शूद्रतां प्रतिपन्नाः । अनुलोमप्रथा प्रतिलोमाश्च वर्णविधिरन्यतमः । क्षणेषु वरणं नापेक्ष्यते ।

ब्राह्मविवाहे वेदविदे ब्राह्मणायालङ्कृता कन्या प्रदेयासीत्। बौधायनानुसारम् 'श्रुतशीले विज्ञाय ब्रह्मचारिणेऽर्थिने कन्या देया स ब्राह्म'। अस्मिन्विवाहे वरस्य वेदवित्त्व महत्त्वपूर्णमासीत्। दैवविवाहे यज्ञस्य ऋत्विजे दत्ता कन्या दक्षिणारूपैवासीत्। ब्राह्मदैवविवाहो ब्राह्मणस्यैव, नतरेषाम्। ब्राह्मणानामृषिवर्गे वरात् गोमिथुनस्य ग्रहणं कृत्वैव तस्मै कन्याप्रदानस्य प्रचलनमभवत्। तस्मिन्युगे गोमिथुनस्य मूल्यमत्यल्पमेकरूप्यकादपि न्यूनमभवत्। तस्या स्थितौ गोमिथुनस्य ग्रहणं शुल्करूपं नासीत्, अपितु साम्प्रदायिकरीतिरेवासीत्। आर्षविवाहोऽपि ब्राह्मणवर्गे एव प्रचलित आसीत्।[1] सामान्यतो ब्राह्मणा एव ऋषयः आसन्।

प्राजापत्यविवाहः आर्यवर्गे प्रायः सर्वाधिकलोकप्रिय आसीत्।[2] स्नातका अस्नातका सर्वेऽपि गार्हस्थ्यधर्मनिर्वहणाय समयबन्धनं कृत्वा प्राजापत्यरीत्या परिणीता। आसुरविवाहस्तु प्रथममसुरवर्गेषु पश्चात् क्षत्रियवैश्यवर्गेषु प्रचलितः। विवाहेऽस्मिन् कन्याया सौन्दर्यातिशयं प्रतिष्ठापयन्नेव वरस्तस्या ज्ञातिभ्यो धनमदात्।[3] गान्धर्वविवाहस्य प्रचलनं प्रथमं गन्धर्ववर्गेषु पश्चात् राजन्यवैश्यशूद्रवर्गेषु चाभवत्। गान्धर्वे तु वरकन्ययोः परस्पराकर्षणमात्रेण समागमप्रवृत्तिरुद्भूता। परस्पराकर्षणं तु सौन्दर्यं नृत्यसंगीताभिनयकौशलमपेक्षते। वरकन्ययोः परस्परमेलनं गन्धर्वेषु सुप्रचलितमासीत्।[4] कामिना कृते गान्धर्वविवाहोऽनुरागसवर्धनादनुत्तमोऽनुमतः। राक्षसविवाहः प्रथमं राक्षसवर्गेषु पश्चात् क्षत्रियेषु प्रचलितः। अस्मिन्विवाहे बलप्रयोगेण कन्याप्राप्तिरभवत्। राक्षसाः क्षत्रिया वा बलशालिनो बभूवुः। बलशालिना कन्याहरणं प्रतिष्ठाद्योतकमेवाभवत्। तेषां विवाहस्यापरं नाम क्षात्र एव। पैशाचविवाहः प्रथमं पिशाचेषु पश्चात् शूद्रेषु प्रचलितोऽभवत्। मन्वनुसारम्—

सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति।
स पापिष्ठो विवाहानां पैशाचः प्रथितोऽष्टमः॥ ३.३४

उपर्युक्तविवाहास्तु वृत्तिद्योतका एव। सर्वेषु वर्गेषूच्चाधमप्रवृत्तयो जना वर्तन्ते। तथा न केवलं विवाहोऽपितु सर्व एव जीवनविन्यास आत्मप्रवृत्त्यनुरूपो भवति। एभिर्विवाहोपायैः कन्याया वरणमभूत पश्चात संस्कारविधिः सम्पादितः।

---

१ वैदिककालीना सायणस्याभिमतेन सुविदितैव ऋग्वेदे—६.८१, ११९.१, ६, १२३। समुद्रमथनावसरे तेर्न रत्नं स्वीकृतम्।

२ मनुस्तु प्रजापति शतपथ० १३.४.३.३, १४, तस्य नाम्ना प्रचलितोऽयं प्राजापत्यो विवाहः। मनुस्य गृहस्थाश्रमस्य सर्वाश्रमात्श्रेष्ठत्वं च मूलाधारं मानितवान्—प्रजनाय स्त्रियः सृष्टाः सन्तानार्थं च मानवा इति।

३ वाण्डौविवाहार्थं मादा मौल्यमीत्स ओषेण।

४ तारुण्यकामास्तु गन्धर्वाः। रामायणे किष्किन्धा० ५९.६।

## विवाहसंस्कारविधि

वैदिककाले विवाहसंस्कारस्य विधि सरलोऽभूत् । स्नातक इष्टमित्रै सम्बन्धिभिश्च सह कन्याया गृहमागच्छत्, तत्र सर्वेषा च तथा सत्कार सुस्वादुभोजनादिभि कृत । [1] कन्याया पाणिग्रहणकाले वरोऽगायत्—

गृभ्णामि ते सौभगत्वाय हस्त मया पत्या जरदष्टिर्यथास ।
भगोऽर्यमा सविता पुरन्धिर्मह्य त्वादुर्गार्हपत्याय देवा ॥

पिता देवाना विशेषतश्चाग्ने समक्ष कन्यादानमकरोत् । सबन्धा उपस्थितजना आशी र्वचन ददु —

इहैव स्त मा वि यौष्ट विश्वमायुर्व्यश्नुतम् ।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥
इमा त्वमिन्द्र मीढ्व सुपुत्रा सुभगा कृणु ।
दशास्या पुत्राना धेहि पतिमेकादश कृधि ॥
सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वा भव ।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥

पतिगृहे गमनस्यावसरे वधूपहारस्य, वध्वा वस्त्र तस्या दुकूलस्य च वर्णन कृतमासीत् ।

रामायणकाले वैवाहिको विधि सरलतर आसीत् । [2]

परवर्तियुगे आर्यवर्गस्य विवाहविधौ आर्येतरवर्गाणा विवाहविधीनामपि समन्वयोऽभूत् । अस्या दशाया भारतस्य विविधभागेषु स्थानीयविधीना समवायात् विभिन्नरूपा सस्कार-विधय समजायन्त । इद परिलक्ष्याश्वलायनो निर्दिष्टवान्—

अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च । तान् विवाहे प्रतीयात् । यत्तु समान तद्वक्ष्याम —

पश्चादग्नेर्दृषदमश्मान प्रतिष्ठाप्योत्तरपुरस्तादुदकुम्भ समन्वारब्धाया हुत्वा तिष्ठन् प्रत्यड्मुखो वर प्राड्मुख्या कन्याया आसीनाया गृभ्णामि ते सौभगत्वाय हस्तमित्य-ड्गुष्ठमेव गृह्णीयात् यदि कामयीत पुमास एव मे पुत्रा जायेरन्निति । अड्गुलीरेव स्त्री-काम । रोमान्ते हस्त साड्गुष्ठमुभयकाम ।

प्रदक्षिणमग्निमुदकुम्भ च त्रि परिणयञ्जपति—'अमोहमस्मि सा त्व सा त्वमस्य मोह द्यौरह पृथिवी त्व सामाहमृक् त्व ताविह विवहावहै । प्रजा प्रजनयावहै सुप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरद शतमिति ।

वर परिणीय परिणीयाश्मानमारोहयति—इममश्मानमारोहाश्मेव त्व स्थिरा भव । सहस्व पृतनायतोऽभितिष्ठ पृतन्यत इति ।

---

१ ऋग्वेद १० ८५, १० ७० १, ४ ३८.१ । अथर्ववेदे ६.६०, १४ २ ५५

२. वाल्मीकि रामा० बाल० सर्ग ७२, ७३

वध्वञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विर्लाजानावपति । त्रिर्जामदग्न्यानाम् । प्रत्यभिघार्यं हविरावपति । अवत्तं च प्रतिघार्यावपति । एषोऽवदानधर्मः । पश्चात् वरो हवनं कुर्वन् प्रार्थयते—

'अर्यमणं नु देवं कन्या अग्निमयक्षत । स इमां देवोऽर्यमा प्रेतो मुञ्चातु नामुतः स्वाहा ।

वरुणं नु देवं कन्या अग्निमयक्षत । स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः स्वाहा ।

पूषणं नु देवं कन्या अग्निमयक्षत । स इमां देवः पूषा प्रेतो मुञ्चातु नामुतः स्वाहा ।' इति

अविच्छिन्दत्यञ्जलिं स्रुचेव जुहुयात् कन्या । अपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थं (हवनम्) ।

ओप्योप्य ह एके लाजान्परिणयन्ति । तथोत्तमे आहुती न संनिपतत । अथास्यै शिखे विमुञ्चति यदि कृते भवतः ।

ऊर्णास्तुके केशपक्षयोर्बद्धे भवतः । 'प्र त्वा मुञ्चामि वरुणस्य पाशात्' इति । उत्तरा मुत्तरया ।

अथैनामपराजितायां दिशि सप्तपदान्यभ्युत्क्रामयति—इषे एकपदी । ऊर्जे द्विपदी । रायस्पोषाय त्रिपदी । मायोभव्याय चतुष्पदी । प्रजाभ्यः पञ्चपदी । ऋतुभ्यः षट्पदी । सखा सप्तपदी भव । सा मामनुव्रता भव । पुत्रान्विन्दावहै बहून् । ते सन्तु जरदष्टय इति ।

आचार्य उभयोः संनिपात्य शिरसी उदकुम्भेनावसिञ्चति ।

ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगारे एकां रात्रिं वसेत् । ध्रुवमरुन्धतीं सप्तर्षीनिति दृष्ट्वा वाचं विसृजेत—जीवपत्नी प्रजां विन्देयेति ।

प्रयाण उपपद्यमाने—पूषा त्वेतो नयतु हस्तगृह्येति । यानमारोहयेत् ।

अश्मन्वतीरीयते संरभध्वमित्यर्धर्चेन नावमारोहयेत् ।

उत्तरेणोत्क्रमयेत् ।

जीवं रुदन्तीति रुदत्याम् ।

विवाहाग्निमग्रतोऽजस्रं नयन्ति ।

कल्याणेषु देशवृक्षचतुष्पथेषु 'मा विदन्परिपन्थिन' इति जपेत् ।

'वासे वासे सुमङ्गलीरियं वधू' ईक्षकानीक्षेत ।

'इह प्रियं प्रजया मे समृध्यताम्' इति गृहं प्रवेशयेत् ।

विवाहाग्निमुपसमाधाय पश्चादस्य आनडुहं चर्मास्तीर्य प्राग्ग्रीवमुत्तरलोम तस्मिन्नुप

त्रिष्टाया समन्वारब्धायाम्—आ नः प्रजां जनयतु प्रजापतिरिति चतसृभिः प्रत्यृचं हुत्वा 'समञ्जन्तु विश्वेदेवाः' इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वानक्ति हृदये ।

### स्वयंवरः

भारतीयसाहित्ये स्वयंवरस्य प्रचुरवर्णनं प्राप्यते ।[1] स्वयंवरेषु निमन्त्रितानां वरण्यानां कस्यचिदेकस्य रूपसौन्दर्येण, गुणातिशयेन पराक्रमौदार्येण वा जिता सती कन्या स्वयमेव जयमाल्या वरमलंकुर्वाणा तस्यैवाभूत् । चित्रद्वारापि पुरा स्वयंवरोऽभवत् । कादाचित् कन्यका योग्यवरान्वेषणाय सुरक्षिता सत्य परिभ्रमन्ति स्म । केषुचित् स्वयंवरेषु बुद्धिपरीक्षापि नियोजिता । कालिदासस्य विवाहकथा तादृशी वर्तते । पुरा कतिपयकन्यका स्वयंवरेभ्योऽपहृता । ईदृशेषु स्वयंवरेषु युद्धावसरः स्वाभाविक एव । अस्मात्कारणादेव स्वयंवरस्य प्रचलनं विलुप्तप्रायमेव ।

रामायणानुसारं रामस्य विवाहः स्वयंवरविधिनाभवत् । रामः शिवस्य धनुषो भङ्गं कृत्वैव सीतां प्राप्तवान् । सीतास्वयंवरमधिकृत्य जनकस्य प्रतिज्ञासीत्—

यद्यस्य धनुषो रामः कुर्यादारोपणं मुने ।
सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ॥ बाल० ६६ २६

प्रतिश्रवानन्तरं पितृकार्यं च, वरस्यार्थे सुखोदयं गोदानादिकं च सम्पादितम् ।

विवाहार्थं प्रपामध्ये वेदिः निर्मिता, समन्ततः गन्धपुष्पैरलङ्कृता च । तत्र सुवर्णपालिकानां साङ्कुराणां छिद्रकुम्भानामङ्कुराढ्यानां शरावाणां सधूपकानां धूपपात्राणां शङ्खपात्राणां स्रुवाणां स्रुचामर्घ्यपूरितपात्राणां लाजपूर्णानां पात्राणां संस्कृतानामक्षतानां च स्थापना समायोजिता । वेदिदर्भैरास्तृता । यथा मन्त्रपुरस्कृतमग्निमाधाय वसिष्ठमुनिर्जुहाव । ततः सर्वाभरणभूषिता सीता समानीता । तामग्नेः समक्षं संस्थाप्य रामाभिमुखं जनकोऽब्रवीत्—

इयं सीता मम सुता सहधर्मचरी तव ।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥
पतिव्रता महाभागा छायेवानुगता सदा । बाल ७३ २७,२८

इत्युक्त्वा जनको मन्त्रपूतं जलं प्राक्षिपत् । ततोऽग्निप्रदक्षिणा कृता । अस्मिन्नवसरेऽप्सरसां नृत्यं गन्धर्वाणां गायनं चाभूताम् ।

कुमारसम्भवे पार्वतीपरिणयः स्वयंवरविधिना घटितो वर्तते । पार्वतीतपसा प्रीणितः शिवो निवेदितवान्—

'अद्यप्रभृत्यवनताङ्गि तवास्मि दासः, क्रीतस्तपोभिः' इति ।

ततः सप्तर्षयः पार्वतीपितुः समीपे शिवार्थं कन्यायाचनाय गतवन्तः । कालिदासानुसारं विवाहसम्बन्धस्थापने स्वेच्छाचारस्तु न श्लाघ्यः, अपितु—

---

१ पद्मपुराणानुसारं सुलोचनायाः स्वयंवरो दृश्यते । स्वयंवरेऽस्मिन् सर्वे देवाः समागताः । वेशमाना विजयस्त्रामादर्शित्वस्य ।

प्रिये स्वाध्यायप्रवचने भवत. । युक्तमना भवति, अपराधीनोऽहरहरर्थान् साधयते, सुख स्वपिति, परमचिकित्सक आत्मनो भवति, इन्द्रियसयमश्च एकारामता च प्रज्ञावृद्धि यशो लोकपक्ति, प्रज्ञा वर्धमाना चतुरो धर्मान् ब्राह्मणमभिनिष्पादयति, ब्राह्मण्य प्रतिरूपचर्या यशो लोकपक्तिम्, लोक पच्यमानश्चतुर्भि धर्मैर्ब्राह्मण भुनक्ति—अर्चया च दानेन चाज्येयतया चावध्यतया च ।[1]

उपनिषत्सु ब्रह्मज्ञानेन ब्रह्मत्वप्राप्ति सन्दिष्टा ।[2] त्रयो धर्मस्कन्धा —यज्ञोऽध्ययन दानमिति ।[3] ब्रह्मचर्यरहितास्तु ब्रह्मबन्धव इति धिक्कृता । अविद्वासो नरके पतन्तीति भयकारणमेवाज्ञान मतम् । विद्यया देवलोको जय्य । देवलोको वै लोकाना श्रेष्ठ । तस्माद्विद्या प्रशसन्ति ।[4]

महाभारतानुसार तु

यो विद्यया तपसा जन्मना वा वृद्ध स पूज्यो भवति द्विजानाम् आदि ८४ २

मनु वेदाध्ययनेनैव ब्राह्मणत्व प्रतिपादयति । तथा हि—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वय ॥ २ १६८

वेदाध्ययन समर्थयन् मनु प्राह—

स्नातकस्तु मनुना समाजस्य सर्वोच्चपुरुषो मत । तदनुसार ब्रह्मभूता एव जीवन काले ब्रह्मतत्त्वज्ञा —

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् ।
इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते ॥ १२ १०२

भागवतानुसार शूद्रोऽपि ब्रह्मचर्यनिष्ठया परब्रह्म प्राप्तु शक्नोति ।[5]

पुरा तु विदुषा समक्ष धनस्य लौकिकप्रतिष्ठायाश्च महत्त्व तृणवदासीत्। दिग्विजयिनो राजानोऽपि यदा विदुषा चरणरजसात्मान पावयन्ति स्म तदा लोकवैभवस्य कापवार्ता-द्विद्वत्स्य ।

राजानस्तु विदुषामाश्रया एव सम्मानार्थं तेभ्योऽग्रहारादिक, गृह, धन, वेतन च ददति स्म । राज्ञा समक्षमपि कतिपयकवयश्छत्रधारणाधिकृता बभूवु । बहवो राजानोऽपि सिंहासन परित्यज्याचार्यशरणमुपजग्मुरित्यतो नास्ति ज्ञानस्य प्रतिष्ठाया अपर पर प्रमाणम् ।

---

१. शतपथे ११.५ ७ १
२ मुण्डके ३ २.९
३ छान्दोग्य १.२३ १
४. बृहदारण्यके ४.४ ११, १ ५.१६
५. भाग० ९ २ ९—१४

## अध्ययनविधिः

वैदिकयुगे द्वादशवर्षाद्विद्याध्ययनं प्रारब्धम्। प्रायश्च चतुर्विंशतिवर्षपर्यन्तं वेदाध्ययनं कृतम्। कतिपयब्रह्मचारिणस्तु समस्तजीवनमेवाध्ययनाय विनियोजितवन्तः। भरद्वाजस्तु त्रिभिरायुर्भिः ब्रह्मचर्यमुवास। तं ह इन्द्र उपव्रज्योवाच—यत्ते चतुर्थमायुर्दद्यां किमेतेन कुर्या इति। ब्रह्मचर्यमेवैतेन चरेयमिति होवाच।[1] वैदिकयुगे प्रत्येकं—वेदस्याध्ययनाय द्वादशवर्षावधिर्निश्चितः। अतः द्वादश, चतुर्विंशतिः, षट्त्रिंशत्, अष्टचत्वारिंशत् वर्षाणि वेदाध्ययनाय नियतानि।[2] मनुस्तु त्रयाणां वेदानामध्ययनार्थं षट्त्रिंशद्वर्षावधिं निश्चित्य विकल्पान् प्रस्तुतवान्—

षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम्।
तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा॥ ३.१

ब्रह्मचर्यव्रतायोपनिषद्युगे गृहस्था अपि स्वीकृता। यदा कदा पिता स्वपुत्रेण सह कस्यचिदाचार्यस्य शिष्यो भूत्वा ब्रह्मचर्यमुवास।[3]

### विद्याधिकारिणः

पुरा योग्यविद्यार्थिना समागमाय गुरवः सदैव प्रयत्नशीला बभूवुः। प्रतिभाशालिन्या शिष्यपरम्परया आचार्यः परिश्रमेणार्जितं स्वज्ञाननिधिमक्षुण्णं कर्तुमियेष। कालिदासानुसारं तु—विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति।

वैदिककाले विद्याप्राप्तिसमर्थां प्रतिभां दृष्ट्वैवाचार्यः विद्यार्थिनं स्वीकरोति स्म। निष्प्रतिभास्तु गुरुगृहं परित्यज्य कृषिकर्मणि वस्त्रनिर्माणे वा नियोजिताः।[4] विद्यार्थिनो मनोवृत्तिं परीक्ष्यैव व्यवसायनियोजनमक्रियत।[5] शास्त्रतोऽप्ययं सिद्धान्तो विद्यादानमधिकृत्य मनुनोद्घुष्टः —

विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना।
आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत्॥
विद्या ब्राह्मणमेत्याह शेवधिष्टेऽस्मि रक्ष माम्।
असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा॥
यमेव तु शुचिं विद्यान्नियतब्रह्मचारिणम्।
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने॥२ ११३-११५

१ तैत्तिरीयब्राह्मणे ३ १० ११।
अनेन नैष्ठिकब्रह्मचर्येण ब्रह्मविष्टपानि प्राप्यत इति भागवते ११.१७.३०.
२ गोपथब्राह्मणे २ ५
३ बृहदारण्यके ६ २.४ छान्दोग्ये ५ ११।
४ ऋग्वेदे १०.७१ ६।
५ ऋग्वेदे ९.११२ १।

विष्णुस्तु परीक्षितमेवाध्यापयितुमादिदेश ।[1] अयोग्यविद्यार्थिनो नोपनेया इति हारीतेन समादिष्टम्—

यो वै धीरः शुश्रूषुरध्यायवृत्तो यस्मिन् शोचेन्न व्यथेन्नापि धर्मः ।
तस्मै ज्ञानं श्रद्धया सर्वेयं नान्तर्दुष्टे दुःखशीले कत्थने ॥

उपनिषत्सु विद्यार्थिनां स्वीकरणात्प्राक् तेषां परीक्षणस्य वृत्तानि सन्ति । प्रथमं तावद् गुरुभिः सह सलापात् प्रागेव तपसो विधानमासीत् ।[2] पिप्पलादस्तु कौशल्यस्य ब्रह्मिष्ठत्वं ज्ञात्वैव त प्राणविद्याया दानाय स्वीचकार ।[3] कठोपनिषदि नचिकेतसः परीक्षाया वर्णनं वर्तते ।

## शूद्राणां विद्याधिकारः

वैदिकयुगे शूद्रा अपि वेदाध्ययनाय स्वीकृता । बहवस्तत्रार्येतरा विद्वांसो वेदमन्त्राणां रचयितारो बभूवु । आश्वलायनगृह्यसूत्रे शूद्राणां समावर्तनस्य विधिर्वर्णित ।[4] जातकेषु बहुशः शूद्रचाण्डालानां दार्शनिकज्ञानस्योत्कर्षो निदर्शित । महाभारते आदिमचातुर्वर्ण्यप्रवृत्तिर्निर्दिष्टा—

इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ।
विहिता ब्रह्मणा पूर्वं लोभादज्ञानतां गताः ॥ शा० १८१.१५

अधुना द्विजादिभिः सुगृहीता या काश्चिच्छिल्पविद्या इति प्रथिता तासामध्येतारः शिष्याश्च प्रायशः शूद्रा एव बभूवुर्न ब्राह्मणादयः । मनुनापि शूद्राचार्या उल्लिखिता । तेषां शिष्यास्तु अशूद्रा अपि बभूवु ।

शूद्रा अपि बौद्धसंघे प्रविष्टा सन्तो ज्ञानिनो बभूवु । जैनसंस्कृतौ चाण्डालानामपि विद्याधिकार । शिल्पकलादिषु श्वपाकानां शूद्राणां च परमं प्रावीण्यमासीदेव ।

## स्त्रीणां विद्याधिकारः

सुकुमारीणां नारीणामध्ययनापेक्षितं तपोमयजीवनं सामान्यतो भवितुं नार्हति । वेदाध्ययनाय स्वल्पा एव नार्यो वैदिककालेऽपि समुत्सुका आसन्, किन्तु वेदाध्ययनं तस्मिन् युगे वर्जितं नासीत् । लोपामुद्रा, विश्ववारा, अपाला, आत्रेयी, काक्षीवती घोषा च ऋषिका बभूवु । ताभिः दृष्टानि सूक्तानि संहितासु सगृहीतानि वर्तन्ते ।

अथर्ववेदानुसारं तु—ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् ।[5] उपनिषत्सु मैत्रेयी

१. विष्णुधर्मसूत्रे २९ ९.८।
२. छान्दोग्ये ८ ७ ३
३ छान्दोग्ये ४ ४
४ आ० गृ० ३.८
५. अथर्व० ९ ५ १८

गार्गी वाचक्नवी च प्रातःस्मरणीया विदुष्यो वर्णिता । तस्मिन्काले विदुषी कन्यका पुत्रीरूपेण प्राप्तुं गर्भाधाने विशेषायोजनानि कृतानि ।[१]

कालान्तरे स्त्रिय आचार्या उपाध्यायाश्च बभूवुः ।[२] स्त्रीछात्रास्तु 'अध्येत्री माणविका चेति' विख्याताः । छात्रा वेदाध्ययनमपि कृतवत्यः । ऋग्वेदस्य बह्वृचः शाखाया विद्यार्थिभ्यो बह्वृच्य सम्बोधिताः । कतिपयस्त्रियोऽस्त्रशस्त्रविद्यासु शिक्षिता अभवन् । तासां सर्वासां समावर्तनविधिः आश्वलायनगृह्यसूत्रे निर्दिष्टः ।[३]

महाभारतानुसारं स्त्रियो ललितकलासु शिक्षिताः । राजकुलदास्यश्चतुष्षष्टिविद्याविशारदाः, नृत्यादिकुशलाश्च बभूवुः । राजकुमारीणां शिक्षणस्योल्लेखाः सुविदिता एव । स्त्रियः स्वाध्यायं कुर्वन्ति स्म—

अपि चैताः स्त्रियो यान्ति स्वाध्यायमधिकुर्वते अर० ३४ ७*

रामायणे स्त्रीणां ब्रह्मचर्यं वर्णितमेव ।[४]

महाभाष्ये कुमारश्रमणा, कुमारप्रव्रजिता, कुमाराध्यापिका, कुमारतापसी, कुमारपण्डितेति पदानां प्रचलनं पतञ्जलिः स्त्रीणां प्रशिक्षणं प्रकटयति ।

परवर्तियुगे स्त्रीणां काव्यरचना सुसमृद्धा वर्तते । गाथासप्तशत्यां कवयित्रीभी रचिताः पञ्चाशत्प्राया गाथाः सन्ति ।[५] राजशेखरस्तु स्त्रीविद्याप्रवृत्तिं निदर्शयन्नाह—पुरुषवत् योषितोऽपि कवयित्र्यो भवेयुः । संस्कारो ह्यात्मनि समवैति । न स्त्रैणं पौरुषं वा विभागमपेक्षते । श्रूयन्ते दृश्यन्ते च महामात्यदुहितरो गणिकाः कौतुकिभार्याश्च शास्त्रप्रहतबुद्धयः कवयः ।[६] शङ्करमण्डनमिश्रयोः विवादे मिश्रस्य पत्नी निर्णायिका नियुक्तेति विदितचरम् ।

भारतीयधारणानुसारं सरस्वती पार्वती च विद्याया देव्यौ स्तः, अतएव कथं नाम स्त्रीणामध्ययनं वर्जितं स्यात् ?

## विद्यालयाः

विद्यालयस्तु भारते शाश्वतरूपेणाचार्याणां गृहमभवत् । तस्मिन्नाचार्यगृहे विद्यार्थिन आचार्यपुत्रैः सह निवसन्तः पठन्ति स्म । ब्राह्मणे सर्वेषां विदुषां ब्राह्मणानामध्यापनमेव

१ बृहदारण्यके ६.४ १७

२ पाणिनिसूत्र ४ १ ४९, ३ ३ २१ अधिकृत्य काशिका

३ आश्वलायन० ३ ८ ११

४ बाल० ७७ १३

५. परवर्तिकवयित्र्य शीलभट्टारिका, देवी, विजयाङ्का, मधुरवाणी, अभिरामकामाक्षी, तिरुमलाम्बा, मनोरमा, कमला, सुन्दरी, प्रियंवदा, वैजयन्ती, लक्ष्मीराज्ञी, ज्ञानसुन्दरी, रामम्म, क्षमादेवी च बभूवु ।

६ काव्यमीमांसायां दशमाध्याये । अर्थशास्त्रस्य गणिकाध्यक्षप्रकरणानुसारं वेतनं वाञ्छन्तीनां ललनानां गीत-वाद्य-नृत्य-प्रसाधनविषयकशिक्षायाः प्रबन्धः राजभिः स्वयमेव कृतः । एतदेव समर्थितं कामसूत्रे १.३ १२ दशकुमारे च ।

नित्यकर्म मनुना निर्णीतम्।[१] ईदृशाना महर्षीणामाचार्याणा च गृहा प्राय वनेषु ग्रामेषु वा स्थिता । तपामवस्थान नगरेषु नासीत् । ईदृशेषु स्थलेषु वनपर्वतोपनदप्रदेशेषु च ग्रीष्मर्तौ सन्तापो नासीत् । आचार्यकुलस्य गवार्थं शस्य प्रचुरमविद्यत, हवनाय समिध समजायन्त, विद्यार्थिना स्नानाय सरोवरा नद्यो वाऽऽसन् । उतनिषत्सु ब्रह्मचर्यमरण्यवासस्य पर्याया मत । अरण्येषु वसतामृषीणा समीपमध्ययनाय विद्यार्थिन समुपागता ।[२]

महाभारते कण्वव्यासवसिष्ठभरद्वाजपरशुरामादीनामाश्रमाणा स्थितिर्वर्णिता । कण्वाश्रमम्नु मालिनीनद्या. समीपमवस्थित । तद्यथा—

मन प्रह्लादजननं दृष्टिकान्तमतीव च ॥
शीतमारुतसयुक्त जगामान्यन्महद्वनम् ।
सर्वर्तुकुसुमवृक्षं सुखच्छायं. समावृतम् ॥
प्रेक्षमाणो वन तत् तु सुप्रहृष्टविहङ्गमम् ।
आश्रमप्रवर रम्यं ददर्श च मनोरमम् ॥आदि० अध्याय६४ स
नदीं चाश्रमसश्लिष्टा पुण्यतोया ददर्श स ।
सर्वप्राणभृता तत्र जननीमिवाधिष्ठिताम् ॥

व्यासाश्रमो हिमालये प्रतिष्ठित आसीत् । भरद्वाजस्याश्रमो गङ्गा द्वारे आसीत् । आश्रमेऽस्मिन् धनुर्वेदोऽपि शिक्षित. । परशुरामस्याश्रमो महेन्द्रपर्वतेऽवस्थित । वसिष्ठस्याश्रमो मेरुगिरौ बभूव ।

रामायणानुसार प्रयागे गङ्गायमुनयो सङ्गमप्रदेशे भरद्वाजस्याश्रम आसीत् । मुनिभि मह तत्र मृगपक्षिणामावासोऽभवत् । छात्राणामावासाय पर्णशाला निर्मिता । हवनस्याग्नयो वृक्षा मृगपक्षिणश्च लसन्ति स्म । आश्रमकुशल 'शरीरेऽग्निषु शिष्येषु वृक्षेषु मृगपक्षिषु' पृच्छ्यते स्म ।

रामायणयुगे दण्डकारण्येऽगस्त्यस्याश्रमोऽभवत् । तस्य नैसर्गिकी शोभा शान्तिश्चास्य मनोरमे आस्ताम् ।

महाभारतयुगे तक्षशिलाविश्वविद्यालये भारतस्य विभिन्नप्रदेशेभ्यो विद्यार्थिन उच्चशिक्षणस्य प्राप्तये समागता ।[३] पाणिनि कौटल्यश्च सम्भवतो विद्यालयेऽस्मिन् शिक्षितौ । विद्यालयस्य रम्यविहृयनदप्रदेशेऽभवत् विद्यालयभवनानि च गिरिप्रस्थे निर्मितानि बभूवु ।

जातकसाहित्यानुसार हिमाद्रिप्रस्थे बहव शिक्षणाश्रमा अवस्थिता । नैष्ठिकब्रह्मचारिणा महर्षीणा च विद्यालयास्तत्राभवन् । केषुचिद्विद्यालयेषु विद्यार्थिना सख्या पञ्चशतप्रायाभूत् ।

---

१. अध्यापनं ब्रह्मयज्ञ । मनुस्मृतौ ३ ७०
२ मुण्डक १.२.११—१० छान्दोग्य ८ ५ ३
३. सुसीमजातके सुसमजातके च ।

पाणिनेर्जन्मभूमिः शालातुरी वैयाकरणाचार्याणामावासभूमिरभूत्। ह्वेनसांगमहोदयानुसारं नगरेऽस्मिन् व्याकरणज्ञानं परम्परानुसारं सातत्यमभजत। अध्ययनशीला अनुसन्धानपरायणाश्च ब्राह्मणा अस्य नगरस्य परमविख्याता बभूवुः।[1]

उपर्युक्तयुगे वाराणसीपुरी वैदिकसाहित्यस्याध्ययनाध्यापनाभ्यां परां प्रसिद्धिं गता। बोधिसत्त्वेन प्रतिष्ठापिते काशीविद्यालये शतराष्ट्रेभ्यः समागता विद्यार्थिनो ब्राह्मणाः क्षत्रियाश्चाध्ययनपरायणा बभूवुः।[2]

गौतमबुद्धस्य युगे मगधकोमलादिषु देशेषु ब्रह्मदेयग्रामेषु वेदाध्यापनं समायोजितमासीत्। मनसाकटनामके ब्राह्मणग्रामे ब्रह्मविद्याध्यापिना।

परवर्तियुगे महर्षीणामाश्रमप्रदेशे देवमन्दिराणां निर्माणमकारि। अग्निपुराणानुसारं तु—

तीर्थे चायतने पुण्ये सिद्धक्षेत्रे तथाश्रमे।
कर्तुरायतनं विष्णोर्यथोक्तात् त्रिगुणं फलम्॥ ३८.१५

आचार्याणां विद्यालयास्तु मन्दिरैः सम्बद्धा आसन्। मन्दिराणां विद्यालयस्वरूपं ह्वेनसांगमहोदयस्य अधोलिखितोद्धरणेन प्रमाणितम्—

Beside the capital and close to the Ganges was the I—lan—na mountain, the dark mists of which eclipsed sun and moon; on this an endless succession of Rishis had always lodged and their teachings were still preserved in the Deva temples [3]

मन्दिरेष्वध्यापनं पुण्यात्मकमभवत्। अधुनाऽपि धारानगर्यां सरस्वतीमन्दिराणि विराजन्ते, येषु महाराजभोजस्य काले विविधविद्यानामध्यापनमकारि।

ह्वेनसांगमहोदयस्तु निजभारतयात्रावर्णनप्रसङ्गे विद्यालयानां विवरणं प्रस्तुतवान्। तस्यानुसारम्—असमप्रदेशे कामरूपं वैदिकविद्याया महाकेन्द्रमभूत्। विद्यालयोऽयं राज्ञा भास्करवर्मणा स्थापितः। काशीकलिङ्गोज्जयिनीचित्तौडादिभ्यः प्रदेशेभ्यः विद्यार्थिनस्तत्रागताः। तस्मिन् युगे काश्यां विंशतिर्देवमन्दिराणि बभूवुः। मन्दिरसमीपे सर्वत्र वृक्षपुञ्जानां छायाऽऽसीत्, तेषां मध्ये निर्मलजलप्रस्रवाः प्रवाहिताः। भारतस्य विविधप्रदेशेष्वोदृशानां विद्यामन्दिराणां संख्या स्वगण्यैवासीत्।

गुप्तयुगस्य रघुवंशे वसिष्ठस्य कादम्बर्यां जावालेराश्रमाणां काव्योचितवर्णनेन तेषां रमणीयताद्यनापि हृदयेऽङ्किता भवत्येव। हर्षचरिते बाणेन विन्ध्यवनाधिष्ठितस्य दिवाकरमित्रस्याश्रमस्य वर्णनं कृतम्। आश्रमेऽस्मिन् विभिन्नसम्प्रदायानां धर्माचार्याणां च परस्पर-

१. ह्वेनसांगे वाटर्सकृते प्रथमे भागे पृ० २२२।
२. नंगलीसजातके कोसियजातके च।
३. वाटर्स—ह्वेनसांग द्वितीयभागस्य पृ० १८८।

विवादेन ज्ञानं समवर्धत । बाणस्तु स्वयमेव चतुर्दशवर्षाणि गुरुकुलेष्वपठत । तेषां विषये तेनालोचितम्—'शुकसारिकारब्धाध्ययनदीयमानोपाध्यायविश्रान्तिसुखानि साक्षात् त्रयीतपोवनानि बान्धवानां भवनानि भ्रमन् सुखमतिष्ठत् ।' तत्र गुरुकुलेषु सदैव वेदपाठोऽभवत्, यज्ञाग्निः प्रज्वलितोऽभूत् हवनं कृतं च ।

खीष्टस्य पश्चात् दशशताब्दादारभ्य मन्दिरेषु प्रतिष्ठितानां शिक्षणसंस्थानां प्रायश ऐतिहासिकोल्लेखाः प्राप्यन्ते । बीजापुरजनपदस्य सलोत्गीग्रामे राष्ट्रकूटराजस्य कृष्णस्य मन्त्रिणा नारायणेन प्रतिष्ठापितस्य त्रयीपुरुषमन्दिरस्य प्रधानकक्षेऽध्यापनं कृतम् । विद्यार्थिनामावासार्थं सप्तविंशतिच्छात्रालया निर्मिता । एकादशशताब्दे 'एन्नारियम्' नगरे वैदिकविद्यालयोऽर्काटप्रदेशे स्थापितः । विद्यालयेऽस्मिन् वेदानां सूत्राणां वेदाङ्गानां दर्शनानां चाध्यापनाय षोडशाध्यापका नियुक्ताः । विद्यालयेऽस्मिन् चत्वारिंशदधिकत्रिशद्विद्यार्थिनो विविधविषयाणां शिक्षां गृहीतवन्तः । ईदृशा विद्यालयाः चिंगलीपुटे वेंकटेश्वरस्य मन्दिरे हेब्बालनगरे भुजब्बेश्वरस्य मन्दिरे च स्थापिताः । काश्मीरेषु बहुषु मठेषु मन्दिरेषु आचार्यगृहेषु चाध्यापनमभवत् ।[1] कल्हणो राजतरंगिण्यां यशस्करस्य राज्ञो मठस्य वर्णनं कृतवान्—'भूभुजा दानशौण्डेन पैतृके स्थण्डिले कृतः, छात्राणामार्यदेश्यानां तेन विद्यार्थिनां मठः' ॥ इति ।

दशमशताब्देऽग्रहारशिक्षणसंस्थानां विशेषाभ्युदयोऽभवत् । अग्रहारास्तु राजभिः समृद्धिमद्भिर्वा विद्वद्भ्यः प्रदत्ताः । अग्रहारभोगिनो विद्वांस आचार्यरूपेण समाजस्याभ्युदयं कुर्वन्ति स्म । अग्रहारसमकक्षाः संस्थाः घटिका ब्रह्मपुरी च तस्मिन्युगे प्रचलिता आसन् । ईदृशीनां संस्थानां दक्षिणभारते प्राचुर्यमासीत् ।

राष्ट्रकूटराजवंशे दशमशतके धारवाडजनपदे 'कदियुराग्रहार' द्विशतब्राह्मणेभ्यो दत्तः । अस्मिन्नग्रहारे वेदकाव्यशास्त्रव्याकरणतर्कपुराणराजनीतीनामध्यापनमभवत् । विद्यार्थिभ्यो निःशुल्कभोजनमपि तस्याग्रहारस्यार्थे प्रदत्तम् । सर्वे ब्राह्मणाः सर्वज्ञा एवाभवन् । उत्तरप्रदेशे बिहारे वङ्गे चाग्रहारसमाः संस्थाः टोलनाम्ना विख्याता आसन् । नागरिकाणां भूदानैरर्थसाहाय्येन च तत्रत्याचार्याणां विद्यार्थिनां च वृत्तयो दत्ताः । आचार्या अपि विद्यार्थिनामावश्यकतापूर्त्यर्थं प्रयत्नं चक्रुः ।

खीष्टस्य पश्चात् नवमे शतके शङ्कराचार्यो वैदिकशिक्षणाय विश्वविद्यालयानां स्थापनां कृतवान् । तस्य विश्वविद्यालया मठा इति ख्याता बभूवुः । तेषामवस्थितिर्भारतस्य चतुःसीमान्तप्रदेशेऽभवत् । तेन मठाः पुरीकाञ्चीद्वारकाबदरीषु प्रतिष्ठापिताः ।

## बौद्धविद्यालयाः

बौद्धविद्यालयानामादिप्रवर्तको गौतमबुद्धो बभूव । एषु विद्यालयेषु जीवनपर्यन्तं दशशिक्षापद-पञ्चशीलादिग्रहणस्यायोजनं कृतम् । अनेन प्रकारेण गौतमस्योपक्रमो वैदिक-

[1] राज० ३१, [illegible] १०० । मन्दिरेषु मूर्तयो भवन्ति, न मठेषु । मठमन्दिरे उभे छात्राणां चारित्रिकविकासाय प्रतिष्ठिते । तत्राचार्या महापण्डिताश्च नियोजिताः ।

सम्प्रति नैष्ठिकब्रह्मचर्यवत् प्रतिभाति । यद्यपि बौद्धसम्प्रदायेऽरण्यवासस्य महत्त्वं सुत्तनिपाते स्वीकृतमेव, किन्तु भिक्षार्थं नगरसमीपमेव निवसनं समीचीनं सम्मतम् । गौतमस्य जीवनकालादारभ्य प्रायः नगराणां समीपमेव विहाराणां निर्माणं क्रियते स्म पुरा समृद्धिमन्तः । श्रीमन्त आरामस्थानार्थमसंख्यविहाराणां रचनां कृतवन्तः । विहारास्तु प्रायः सदैव निर्मातु-र्गृहस्थपरिग्रहस्य मनुष्यात्र वसन्तु । वास्तुविधानानुसारं स्वाम्यप्रद सुमङ्गलस्य विहाराणां विन्यासोऽभवत् ।

श्रावस्त्यां जेतवनविहारे विद्यार्थिकक्षभवनान्यासन् । विहारेऽस्मिन्नुपदेशाय, समाजाय, भोजनाय स्नानाय च विभिन्ना शाला अभवन् । चोरशाल्या पुस्तकालया अध्ययन-कक्षाश्च पृथक्पृथक् निर्मिताः । विहारपरिधौ स्थित जलाशय परितो मनोरमा छायासीत् । विहारोऽयं प्राकारैः परिवेष्टित आसीत् । विहारस्य पुस्तकालये वैदिकसाहित्यैरपि शिल्प-विज्ञानादिविषयाणाञ्च पुस्तकानि संगृहीतानि । सर्वेषां धर्माणामनुयायिनोऽस्मिन् विहारे आवासमकुर्वन् । गौतमेनादिष्टम्—'विहारभूमौ वृक्षारोपणं कुरु, राजमार्गमपि वृक्षा-च्छादितं भवतु' इति ।

गौतमेन सह सहस्राधिकविद्यार्थिनोऽपि परिभ्रमन्तः भिक्षां लब्धवन्तः । परिभ्रमन्नेव बुद्धो विहारेषु समागम्य शिक्षणमारब्धवान् । सर्वेषां विहाराणामनुशासनपूर्णव्यवस्था गौतमस्यैव भार आसीत् ।

विहारेषु जीवनस्य सामान्यतोऽपेक्षितानि सर्वाणि वस्तूनि समगृह्यन्त । स्नानागाराणि वास्तुकौशलेन विरचितानि । जलाशयेषु जलस्य बहिर्निःसरणाय नवजलस्यागमनाय च नालिका निर्मिता । मानवस्वास्थ्यार्थं पर्याप्तानि तेषु विहारेषु सन्ति ।

गौतमस्य पश्चात् बौद्धभिक्षूणां श्रेष्ठनिर्माणकौशलोऽभवत् । तदानीन्तना विहाराः कथिताः । ख्रीष्टपूर्वानन्तरं गुहाविहाराणामध्ययनार्थं रचना समारब्धा । ख्रीष्टस्य पश्चादष्टशतकपर्यन्तं तत्र विहाराणां रचना बभूव । तेषां विहाराणां चित्रालङ्करणं मूर्तिशिल्पं चातीव मनोरमे । अजन्ताया प्राकृतिकशोभेयं भारतेऽप्रतिममेव प्रतिभाति । ईदृशी गुहाविहारा दक्षिणभारतेऽनेकत्र समलङ्कृतमिदानीमपि दृश्यते ।

फाह्यानानुसारम्—कश्यपबुद्धस्य सङ्घाराम पञ्चतलगुहाविहार आसीत् । प्रथमतल हस्त्याकारमासीत् । अस्मिन् तले पञ्चशतगुहागृहा आसन् । द्वितीय तु सिंहाकारं चतु शत-गृहसमायुक्त तृतीयमश्वाकारं त्रिशतगृहयुक्तं चतुर्थं वृषभाकारं द्विशतगृहसमन्वित पञ्चम तु कपोताकार शतगृहैरनिरुद्धमासन् । विहारस्योपरिभागतो जलप्रपात सङ्घारामस्य द्वार-समीप वक्रमार्गेणायात । सर्वेषु गृहेषु गवाक्षा निर्मिता । अधस्तादुपरि गन्तु सोपान-व्यवस्थासीत् । फाह्यानानुसारं तस्मिन्युगे भारते सहस्राधिकविहारविद्यालया आसन् ।

ख्रीष्टस्य पश्चात् सप्तमे शतके चीनदेशात् ह्वेनसाग इति ख्यातनामा भारतीयविद्याभिला-षुकोऽस्माकं देशे समागतः । स तु भारतस्य विविधप्रदेशेषु परिभ्रम्य विदुषां साहाय्येन

स्वीय ज्ञाननिधि समवर्धयत । स्वयात्रावर्णने ह्वेनसांगो विशेषरूपेण सांस्कृतिकानां शैक्षणिकानां च संस्थानां वर्णनमकरोत् । ह्वेनसांगानुसारं तदा भारते षट्सहस्राधिकविहाराः सार्धद्विलक्षभिक्षुविद्यार्थिनः तेषामाचार्याश्चासन् ।

पञ्चमशतकादारभ्य कतिपयविहाराः विश्वविद्यालयरूपेण विकसिताः । नालन्दाया वलभ्यविक्रमशिलायाश्च विश्वविद्यालयाः समस्तेशियामहाद्वीपे प्रख्याता बभूवुः ।

नालन्दाविश्वविद्यालयः

नालन्दासमीपमेका लघुनदी प्रवहति । प्राचीनयुगे तस्मिन्प्रदेशे वनराजेरपूर्वा शोभासीत् । अधुना तत्र शस्यश्यामला रमणीयता विराजते । नालन्दाया नातिदूरं गिरीणां स्रोतसां च शोभा मनो हरति ।

नालन्दा गौतमस्य प्रमुखशिष्यस्य सारिपुत्रस्य जन्मभूमिरासीत् तत्रत्याम्रवणे कतिपयदिनान्युषित्वा गौतमः शिष्येभ्यः सदाचारस्य विनयस्य च शिक्षामदात् । अशोकस्तु नालन्दायां विहारस्य निर्माणमकारयत् । खीष्टस्य पञ्चमशतकादारभ्य शक्रादित्य बुद्धगुप्त-तथागत नरसिंह गुप्तवज्रादयो बहवो राजानस्तत्र विहारान् कारयामासुः । वैदेशिका राजानोऽपि नालन्दायां विहारान् कारितवन्तः । सुमात्रायाः राजा बालपुत्रो नवमे शतके तत्र विहारं रचयामास स्वमित्रेण राज्ञा देवपालेन चास्मार्थं पञ्चग्रामाणां दानं च कारितवान् ।

राजभिः कृता विहाराः तेषां राजपदयोग्या बभूवुः । ह्वेनसांगस्य समक्षं महाराजेन हर्षवर्धनेन तत्र कांस्यमन्दिरं रचितम् । चैत्येषु तेषु गौतमबुद्धस्य धातुनिर्मितमूर्तयः प्रतिष्ठापिताः ।

नालन्दाविश्वविद्यालयस्य घनवनकुञ्जेषु ह्वेनसांगस्य मनोऽरमत । मनोरमेषु कासारेषु च तत्र नीलोत्पलानां विकासोऽभवत् । काननवृक्षैस्तत्रत्यशोभा द्विगुणिता । तेषां रक्तकुसुमानां स्तबकैः सर्वेषां मनांसि हृतान्येव । तत्रत्याम्रमञ्जरीभिर्हरितपत्रैश्च नयनयोः सुखमजायत । विद्यालयस्य समीपमेव दश स्नानागाराणि निर्मितानि । तत्रत्यभवनानामुच्चतां सौन्दर्यं च वर्णयन् ह्वेनसांगो लिखति—मानमन्दिरं प्रासादशिखरेषु लीनं भवति । उपरिभूमयः प्रासादानां मेघैरुपलक्षिता भवन्ति । पर्वतसमोच्चभूमिषु ललितकलानां शिक्षा दीयते । प्रसाधनकक्षं च सर्वेषां भवनानामतीव मनोहरं वर्तते ।

नालन्दाविश्वविद्यालयस्य ध्वंसावशेषा उत्खनिता एवाधुनापि दर्शनीया वर्तन्ते । भवनानां विन्यासः कलात्मकविधिना कृतः । व्याख्यानाय विशालकक्षा वर्तन्ते । विश्वविद्यालयीयजीवनविन्यासस्य सर्वाङ्गीणपरिचयो ध्वंसावशेषैः प्राप्यते । खीष्टस्य पश्चात् द्वादशशताब्दे यवनाक्रान्तोऽयं विश्वविद्यालयः परिध्वस्तो विनष्टश्च ।

नालन्दाविश्वविद्यालये दशसहस्रविद्यार्थिनः शिक्षां लब्धवन्तः । प्रतिदिनं शतप्रायाणि व्याख्यानानि बभूवुः । तत्र बौद्धेतरविषयाणां व्याकरणतर्कसाहित्यादीनामपि शिक्षा दीयते

स्म, वेदवेदान्तसांख्यादिविषयाश्च शिक्षिता । विद्यार्थिनस्तु चीन-कोरिया-तिब्बत तोखार जापानादिविदेशेभ्य समायाता ।

## वलभिविश्वविद्यालय

काठियावाडप्रदेशे स्थितोऽयं विश्वविद्यालयोऽष्टमशताब्दपर्यन्त प्रावर्तत । मदयैव राजकुमार्या दुद्दया प्रतिष्ठापिता । शनै शनै विहाराणा सख्या समवर्धत । ह्वेनसांगस्य युगे तत्र शताधिकविहारा बभूवु विद्यार्थिनश्च तेषु षट्सहस्रपर्यन्ता आसन् । गुणमति स्थिरमतिश्च तत्र प्रसिद्धावाचार्यौ बभूवतु । वलभे स्नातका सर्वत्र सम्मानिता बभूवु । विश्वविद्यालयस्यास्य प्रमुखद्वारे श्वेताक्षरै सर्वोत्कृष्टविदुषामाचार्याणा च नामान्युल्लेखितेषा-मादरोऽकारि ।

## विक्रमशिलाविश्वविद्यालय

ख्रीष्टस्य पश्चादष्टमशताब्दादारभ्य त्रयोदशशतकपर्यन्त विश्वविद्यालयोऽयं प्रावर्तत । तस्य स्थापना पालवशस्य राजा धर्मपाल उपगङ्ग गिरिप्रस्थे कृतवान् । अपरेऽपि पाल-वशीया राजानो भवनानि निर्माय्यास्य सवर्धन कृतवन्त । अस्य विनाशो बख्तियारेण यवनाक्रमणकारिणा कृत । विश्वविद्यालयोऽयं बख्तियारेण दुर्गं इति स विभ्रान्तोऽभवत् ।

विक्रमशिलाविश्वविद्यालये भारतस्य सर्वोच्चविद्वास आचार्या बभूवु । फलत स एशियामहाद्वीप सर्वत्र प्रख्यातोऽभवत् । तत्र तिब्बतप्रदेशस्य छात्राणा विशेषाकर्षो नियत । द्वादशशतके विश्वविद्यालये त्रिसहस्रसख्यका विद्यार्थिनोऽभवन् । प्रारम्भावस्थायामष्टाधिक-शताचार्या तत्र नियुक्ता । प्रमुखद्वारे दीपङ्करातिशादीना चित्राणि दर्शितानि । तस्य षड्-द्वारेषु तत्र द्वारपण्डिता विराजन्ते स्म । तै परीक्षिता अनुमताश्च विद्यार्थिन सस्थाया प्रवेशमलभन्त ।

ओदन्तपुरस्यान्तिमभागे बङ्गमगधयो राजा रामपाल रामावतीनगर्यां जगद्दल-विहार रचयामास । सोऽपि नालन्दा विक्रमशिलाविश्वविद्यालयाभ्या सहैव विध्वसित । तत्र प्रमुखा आचार्या —विभूतिचन्द्र दानशील मोक्षाकरगुप्त शुभङ्करश्च बभूवु । तिब्बत-देशादपि विद्यार्थिनोऽत्रागता ।

ओदन्तपुर्यां विहारोऽपि अस्मिन् युगे समवर्धत । विहारेऽस्मिन सहस्रभिक्षवोऽवसन् । मगधाचार्यं स्थाक अस्मिन्नत्र विहारेऽशिक्षयन् । पालवशीयराजैरस्या सस्थाया सम्पा दण कृतम ।

## जैनविद्यालया

प्रारम्भिकयुगेऽनगाराणा दिगम्बराणा जैनाचार्याणा विद्यालया भवनेषु नाभवन् । आचार्यै सह तदा विद्यार्थिन पर्यटन कृतवन्त । परवर्तियुगे चिरकालमेव गणधरै सह विद्यार्थिना पर्यटनरीतिरनुगुणाभूत् । शनै शनै कालान्तरे तेषा कृते गुहासु तीर्थेषु च

मन्दिराणां विहाराणां च निर्माणमक्रियत ।[1] निर्माणव्यवस्था प्रायो वैदिकबौद्धसंस्थानुरूपाभवत् ।

## अध्ययन-विषया

भारतोपमहाद्वीपे आदिकालेऽध्ययनस्य विषयाणां स्वरूपं किमासीदिति सुनिश्चितं नास्ति । सिन्धुसभ्यताया ध्वंसावशेषैः तदानीन्तनभारतीयानां शिल्पकलाविज्ञानधर्मादिषु विषयेषु प्रावीण्यं प्रतीयते । तेषां विषयाणां शिक्षा प्रचलितासीत् । विद्यार्थिनस्तत्र लेखाभ्यासं कुर्वन्ति स्मेति तत्रत्यमेतत् निश्चितं प्रतिभाति । योगाभ्यासप्रवृत्तयोऽपि तेभ्यः प्ररोचन्ते स्म ।

### वैदिकाध्ययनविषया

वैदिकयुगे विद्यार्थिनो वागर्थयोः शब्दब्रह्मणश्च प्रतिपत्तिं कर्तुं तपोमयसाधनां कृतवन्तः । वैदिकसाहित्यमृषिभी रचितम् । तेषामृषीणां परम्परया विद्यार्थिभ्यो मन्त्ररचनाकौशलं शिक्षितम् । वेदाङ्गानि शिक्षाकल्पनिरुक्तछन्दोज्योतिषव्याकरणानि विद्यार्थिनः शिक्षन्ते स्म नित्यमाचार्याणां निर्देशने मन्त्ररचनाभ्यासं कुर्वाणा विद्यार्थिनः स्वयमेव ऋषयो बभूवुः । सामान्यत एव काव्यरचनाकौशलाय पूर्वसूरीणां काव्यानां कण्ठाग्रकरणमपेक्षितमासीत् । आचार्यपरम्पराभिः कथामुखेन विद्यार्थिषु धर्म-दर्शन-काव्य-पुराणेतिहासानां सूक्तरचनोपयोगिनां विषयाणां ज्ञानं न्यासीकृतम् । ऋग्वेदकालेऽपि कतिपयविद्वद्भिर्भूगोल-ज्योतिषविद्या-वायुविज्ञानादिकमधीतमित्यधोलिखितेन मन्त्रेण प्रतीयते—

> वेदा यो वीनां पदमन्तरिक्षेण पतताम् ।
> वेदा नावः समुद्रियः ॥१.२५.७॥

शनैः शनैः वैदिकसाहित्यं समवर्धत । तस्मिन्युगेऽन्ये विषयाः—अनुशासन-विद्या-वाकोवाक्येतिहास-पुराण-गाथा-नाराशंस्यादयो विशालतरा बभूवुः ।[2] तेषामध्ययनमध्यापनं चावश्यमेवाभवताम् ।

ब्राह्मणयुगे यज्ञविद्याया अध्यापनं महत्त्वपूर्णमासीत् । तत्र पुराणेतिहासाख्यान-सृष्टिविज्ञानादीनां विषयाणां व्याख्यानं सहायीभूतम् ।[3]

उपनिषद्युगे वैदिकसंहितानां वेदाङ्गानां यज्ञविद्यानां चाध्यापने प्रचलिते सत्यपि ब्रह्मविद्याया सर्वोच्चं महत्त्वमासीत् । वेदवेदाङ्गादिषु निष्णाता विद्यार्थिनः परां विद्यां (ब्रह्मविद्याम्) शिक्षितुमागताः । परा विद्या तु कदापि सर्वसामान्या नासीत् । तस्मिन् युगेऽपि

---

1. ख्रीस्ताष्टमे शतके श्वेताम्बराणां दिगम्बराणाञ्च चैत्यवासः सम्प्रवर्तितो दृश्यते । परम्परावादिनो मुनयश्चैत्यवासस्य विरोधका आसन् तत्र शिथिलाचारस्य सम्भावनायाः कारणात् ।
2. अथर्ववेद १५.६.११-१२, ११.७.२४, शतपथे ११.५.६.८ ।
3. शतपथानुसारं देवजनविद्या, मायावेदः इतिहासः, पुराणानि च विद्याः सन्ति । शत० १३.४.३

सर्वसाधारणविषया —चत्वारो वेदा इतिहासपुराणं वेदानां वेदः ( व्याकरणं ), पित्र्यः राशिः, दैवः, निधिः, वाकोवाक्यम्, एकायनं, देवविद्या, ब्रह्मविद्या, क्षत्रविद्या, नक्षत्रविद्या, सर्पविद्या, देवजनविद्या अध्याप्या आसन् ।

खीष्टात् प्राक् पञ्चमशतके कस्मिंश्चिद्विषये विशेषज्ञानार्जनस्य रीतिरासीत्, यथा याज्ञिका वैयाकरणा आग्निष्टोमिका वाजपेयिकादयः क्रमशः यज्ञशास्त्रे व्याकरणे अग्निष्टोमे वाजपेये च निष्णाता बभूवुः । सूत्रसाहित्यस्याभिनवमध्ययनं प्रारब्धम् । पाणिनिः कल्प-भिक्षुनटसूत्राणामुल्लेखं करोति । परवर्तियुगे रामायणभारतादयोऽध्यापनविषया बभूवुः ।

पौराणिकयुगे चतुर्दशविद्यानामध्यापनं प्रचलितम् । षडङ्गवत् पुराणादीनामपि वेदार्थज्ञानोपयोगि विद्यास्थानत्वं याज्ञवल्क्येन स्मर्यते—

पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति,
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । इति च ।

एभिः चतुर्दशविद्यास्थानैः सह चतुर्णामुपवेदानां संग्रहेण विद्यानां संख्याष्टादशाभवत् ।[1]

### बौद्धाध्ययनविषयाः

बौद्धाध्ययनविषयास्तु सर्वप्रथमं गौतमस्योपदेशा बभूवुः । प्रारम्भावस्थायां गौतमो लोकेभ्य आचरणस्य शिक्षां दत्तवान् । तेषां जीवनदर्शनस्य परिशोधनमुद्दिश्य स यथार्थसुखस्य पर्यालोचनं कृतवान् ।

गौतमस्य जीवनकालेऽध्ययनविषयाः —अट्ठकवग्गिकानि, सुत्तनिपाताः, विनयो, धम्मो च बभूवुः । इमानि सर्वाणि गौतमस्योपदेशानां सङ्कलनानि सन्ति । शनैः शनैः त्रिपिटकानां समाहारोऽजायत । कतिपयविद्यार्थिनस्तु त्रिपिटकधारिणो बभूवुः ।[2] समाधियोगयोः शिक्षा सदैव प्रचलितासीत् ।

गौतमस्य पश्चादपि त्रिपिटकानामध्ययनमध्यापनं च महत्त्वपूर्णं बभूवतुः । परवर्तियुगे त्रिपिटकं समाश्रित्याभिनवग्रन्था विरचिताः । तेषामध्यापनं त्रिपिटकैः सह प्रारभ्यत ।

खीष्टात् पश्चात् सप्तमशतकस्याध्यापनविषया ह्वेनसाङ्गस्य लेखेभ्यो ज्ञाता भवन्ति । तदनुसारं तु विहारेषु वैदिकसंस्कृते प्रामाणिकग्रन्थाः पाठिताः । पाणिनेर्व्याकरणे महती रुचिरासीदाचार्याणाम् । नालन्दाया विश्वविद्यालये वेदवेदान्तसांख्यादीनां शिक्षा दीयते स्म ।

ह्वेनसाङ्गः दीपाक्षनविहारे भिक्षुः नगरजनविहारे सौत्रान्तिकानां विभाषां नालन्दायां

---

1 उपवेदाः —आयुर्वेदः, धनुर्वेदः, गन्धर्ववेदः, अर्थशास्त्रं च ।

2 त्रिपिटकेन 'अभिधर्मविनयसुत्तानां' बोधो भवति ।

योगशास्त्रं चापठत्। अनेन प्रकरणेन सुनिश्चितं प्रतिभाति यदनुसन्धानपरायणा विद्यार्थिनो ज्ञानस्य विशिष्टक्षेत्रेषु शिक्षां लभन्ते स्म।

## जैनाध्ययनविषया

जैनानामध्ययनविषयाणां नियतं स्वरूपं महावीरस्य पश्चादेव प्राप्यते। महावीरस्योपदेशा तस्य जीवनकाले वाचा विद्यार्थिभ्यः शिक्षिता। तस्य पश्चात् तेषां सङ्ग्रहाऽङ्गग्रन्थेषु कृतः। अङ्गसाहित्यमाश्रित्य परवर्तियुगे विपुलसाहित्यं तत्सम्बन्धिधर्मदर्शनादीन् विषयानधिकृत्य विरचितम्। तेषां ग्रन्थानामध्यापनं जैनविद्यालयेषु कृतम्। तत्र समाधियोगयोः शिक्षा सुगृहीतासीत्।

ज्योतिषायुर्वेद-व्याकरण-कोशच्छन्दोऽलङ्कार-गणितराजनीत्यादिविषयाणां ग्रन्थानां शिक्षणं जैनविद्यालयेष्वभवत्। काव्य-पुराणेतिहासादीनां शिक्षा गृहस्थाश्रमवासिभ्यो मुख्यतोऽभवत्।

## शिल्पकलानामध्यापनम्

भारते प्राचीनतमशिल्पकलानामादर्शाः सिन्धुसभ्यताया अवशेषेषु प्राप्यन्ते।[1] तत्रार्यपरम्परया नृत्यसंगीतवाद्यादीनां ललितकलानां चित्रमूर्तिवास्त्वादीनां शिल्पानां च विकासः सहस्रवर्षं यावदभूत्। एषां शिल्पकलानामध्यापनाय विद्यालया अभवन्न वेति सन्दिग्धो निष्कर्षः। भारते सदैव शिल्पाचार्यैः सह निवसतां नवयुवकानां शिल्पेषु प्रावीण्यप्राप्तेः रीतिः प्रावर्तत। सा रीतिर्वैदिककाले सिन्धुसभ्यताया युगे चासीत्।

शिल्पानां शिक्षणाय प्रथमं सुप्रसिद्धविद्यालयं तक्षशिलायामभवत्। तत्राष्टादशशिल्पाः शिक्षिताः। एषु शिल्पेषु गीतवाद्यनृत्यचित्रादिकैः सह व्यावसायिकविद्या अपि अन्तर्गणिताः।[2] जातकयुगे राजकुमाराः संगीतवीणावादनमूर्तिरचनाभ्यञ्जनकर्ममालाग्रन्थनादिकौशलेषु शिक्षिताः। महाभारतानुसारं गान्धर्वविद्यालयेषु नृत्यगीतवाद्यादीनां शिक्षा दीयते स्म। अर्थशास्त्रानुसारं राजभिः गीतवाद्यपाठ्यनृत्तनाट्याक्षरचित्रवीणावेणुमृदङ्गपरचित्तज्ञानगन्धमाल्यसंयूहनसंपादनसंवाहनवैशिककलादीनां शिक्षणाय व्यवस्था कृता।[3] नाट्यशास्त्रेऽपि नाट्याचार्यैर्नाट्यसम्बन्धिकलानां शिक्षणस्योल्लेखो विहितः। भरतमुनिः स्वयमेव ईदृश्याः संस्थाया आचार्योऽभवत्। राज्ञ आश्रित्य शिल्पकलानां संवर्धनस्य बहुश उल्लेखा

१. पुरा शिल्पं विद्यात्वेन सर्वं शिल्पमिति केचिदाचार्या मन्यन्ते। यथा विष्णुपुराणे १.१९.४१।
तदेतन्निज न पुष्करोक्ता विद्याश्चतुर्दशैवोक्ता वेदाध्यात्मतदर्थिषु। चित्रे दृष्टाऽनुरूपाच्चा उत्क्विया मतं हिता॥ १६॥ कलानां संख्या चतुःषष्टिरिति प्रसिद्धमेव वात्स्यायनानुसारं चतुःषष्टिकलासु शिल्प पुरुषाणां दुर्गमा अभूत्। कामसूत्रे १.३.२०–२१।
२. ललितविस्तरे ३८७, धम्मपदट्ठकथायां ६१, चुल्लधम्मपालजातके ३७४।
३. अर्थशास्त्रे २.२७।

काव्यग्रन्थेषु विद्यन्ते। कामसूत्रानुसारं तु नागरिकाणां सुरुचिः प्रधानत्वेन कलाभिरभूत्। कलानां शिक्षा च उच्चसंस्थासु दीयते स्म। यः कवित्वकाम काव्यविशेषविद्याग्रहणाय गुरुकुलान्युपास्ते, स विद्यास्नातकोऽभवत्।[1]

न केवलं साधारणजनाः कलाप्रावीण्यं प्राप्नुवन्, अपितु ब्राह्मणकुमारा अपि वेदवेदाङ्गैः सह कलानामध्ययनं कृतवन्तः। बाणस्य पूर्वजाः नृत्यगीतवादित्रेष्वबाह्या बभूवुः। हर्षस्य भगिनी राज्यश्रीर्नृत्यगीतादिषु विदग्धासीत्। मन्दिरेषु देवार्चनाय नृत्यगीतवाद्याभिनयादीनां प्रतिष्ठासीत्। अतएव तासां ललितकलानामुच्चवर्गेषु समादरोऽजायत। एकादशशतके 'तञ्जोरियम्' मन्दिरे स्थापत्यकारस्य (चित्रमूर्तिवास्तूनाम्) शिक्षणमभवत्।

बौद्धविहाराणां रचनाविज्ञानस्य पर्यवेक्षणाय कतिपयभिक्षवः वास्तुकलायाः शिक्षां नवकर्मिका भूत्वा गृहीतवन्तः। विहारेषु चित्रमूर्त्यादीनां रचनां कतिपयैर्भिक्षुभिः कृता। विदेशेषु गत्वा तत्रापि भारतीयशिल्पानां शिक्षा बौद्धभिक्षुभिः दत्ता।

जैनसम्प्रदायेऽपि कतिपयशिल्पादीनां शिक्षणं महत्त्वपूर्णमभिमतम्। हस्तलिखितजैनग्रन्थानां प्रान्तभागेषु बहुविधानि चित्राणि लेखकानां पाठकानां च कलापूर्णरुचिं निदर्शयन्ति।

नृत्यगीतवाद्यादीनां शिक्षणं वैदिकेतरसंस्कृतिषु नात्यधिकं सम्मानितमिति तासां वैराग्यपरायणत्वेन निःसन्दिग्धमेव। तथापि सुरुचिपरायणाः जैनगृहस्थाः नृत्यादीनां सर्वतोभावेन समुन्नतिं विदधुरित्यपि निःसन्दिग्धमेव।

रणशिक्षा

सैन्यशिक्षणं राज्यसंस्थया सह प्रादुर्भवति।[2] क्षत्रियास्तु क्षत्रविद्यायाः उत्कृष्टाः विज्ञाः। महाभारतानुसारं तु महर्षीणामाश्रमेषु वेदैः सह धनुर्वेदस्य शिक्षा ब्राह्मणाचार्यैर्दत्ता। भरद्वाजद्रोणपरशुरामाद्याः प्रमुखाः ईदृशाः आचार्याः बभूवुः। धनुर्वेद, अश्वपृष्ठ, गदायुद्धम्, असिचर्म, गजशिक्षा, नीतिशास्त्रं च पुरा पाठितानि।[3] द्रोणाचार्यस्तु तदानीन्तनराज्येभ्य आगतेभ्यो राजकुमारशिष्येभ्यो बहुविधां युद्धविद्यामशिक्षयत्। विद्यार्थिनः हस्त्यश्वरथधनुर्वेदयन्त्रागारसम्बन्धीनि सूत्राणि नियमांश्चाशिक्षन्त। तक्षशिलानिवासिनश्चाचार्यस्य ब्राह्मणकुमारा अपि वेदानामध्ययनेन सह धनुर्वेदं पठितवन्तः।

धनुर्वेदानुसारं शूद्राणां कृतेऽपि सैन्यशिक्षणं प्रावर्तत। तथा हि—
'ब्राह्मणाय धनुर्दद्यात् खड्गं वै क्षत्रियाय च। वैश्याय दापयेत् कुन्तं गदां शूद्राय दापयेत्।'

---

1. कामसूत्रे यात्राप्रकरणे पञ्चमाध्याये।
2. रणशिक्षायां रथेन, अश्वेनाश्वेन भूमौ वा बाहुयुद्धशिक्षा समायोजिता। आदिप० १२३.७।
3. एतस्य बहुविस्तारः आसीत्। तथा हि चतुष्पादं दशविधं धनुर्वेदमधिगतवान्। पृ० २१३.६४-६६।

दर्शनविषयकज्ञानाय परिषत्सु विद्यार्थिना पृच्छा प्रोत्साहितासीत् । तस्या उदाहरण- मृग्वेदे वर्तते—

पाक पृच्छामि मनसा विजानन्देवानामेना निहिता पदानि ।
वत्से बष्कयेऽधि सप्त तन्तून्वि तन्तिरे कवय ओतवा उ ॥

शतपथब्राह्मणानुसारं गुरुशिष्ययो. प्रश्नोत्तरस्य रूपमीदृशं वर्तते—

प्रश्नः—किं स्विद्विद्वान्प्रवसत्यग्निहोत्री गृहेभ्य. । कथं स्विदस्य काव्यम् । कथ सन्तोऽग्नि-भिरिति । कथ स्विदस्यानपप्रोषितम्भवति ।

उत्तरम्—यो अविष्ठो भुवनेषु । स विद्वान्प्रवसन्न्विदे तथा तदस्य काव्यं तथा सन्ततोऽग्नि-भिरिति मन एवैतदाह मनसैवास्यानपप्रोषितम्भवतीति ।[1]

यज्ञविद्यासम्बन्धिव्याख्यानानि ब्राह्मणग्रन्थेषु प्रायशो वर्तन्ते । तेषु व्याख्यानेषु प्रक्रियात्मकस्पष्टीकरणं रहस्यानि च विद्यन्ते ।

उपनिषत्सु महर्षीणामाचार्याणा च विद्यार्थिभ्य. प्रदत्तानि व्याख्यानानि वर्तन्ते । व्याख्यानमाध्यमस्योल्लेख ईशोपनिषदि विद्यते—

अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे

प्रश्नोत्तरमुखेनोपनिषद्युगेऽपि शिक्षण प्रायोऽभवत् । यथा केनोपनिषदि शिष्य पृच्छति-

केनेषित पतति प्रेषित मन केन प्राण प्रथम. प्रैति युक्त ।
केनेषितां वाचमिमां वदन्ति चक्षु. श्रोत्रं क उ देवो युनक्ति ॥

अत परमाचार्यो ब्रह्मविद्या व्याख्याति ।

कश्चिद्विद्यार्थी याचत आचार्यम्—उपनिषद भो ब्रूहीति ।
व्याख्यान्ते प्रोवाचाचार्य —उक्ता त उपनिषद् । ब्राह्मीं वाव ते उपनिषदमब्रूमेति ।

तस्मिन्युगे व्याख्यानविषयस्य गरिमापि निदर्शित । केनोपनिषदि भाषणान्ते ब्रह्मज्ञान- माहात्म्यमधिकृत्य प्रोक्तम—यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति ।

कठोपनिषदि यमाचार्य 'ओ३म्' पदस्य व्याख्या कृत्वाह—

एतद्ध्येवाक्षर ब्रह्म एतदेवाक्षर परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥
एतदालम्बनं श्रेष्ठमेतदालम्बन परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥

ईदृशैर्वचनै विद्यार्थिनामुत्साह संवर्धित' ।

---

१. शतपथे ११.३ १.२-३ । पारस्कर गृह्यसूत्रेऽपि समर्थितम्— विधिर्विधेयस्तर्कश्च वेद' इति । २ ६.५

ब्रह्मज्ञानस्य रहस्यानि बोधगम्यानि कृतान्युपमाद्वारेण । बुद्धिशरीरात्मना परस्परं सम्बन्धं विवेचयता प्रोक्तमाचार्येण—

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥

यदा कदाचार्याः वस्तुपरिकल्पनायाः प्रयोगं कुर्वन्ति स्म । यथा—आचार्यशिष्ययोः संवादः—

न्यग्रोधफलमत आहरेति । इदं भगव इति । भिन्द्धीति । भिन्नं भगव इति । किमत्र पश्यसीति । अण्व्य इवेमा धाना भगव इति । आसामङ्गैकां भिन्द्धीति । भिन्ना भगव इति । किमत्र पश्यसीति । न किंचन भगव इति ।

यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति ।

विविधोदाहरणैराचार्य इमं विषयं दृढतरमबोधयन् ।

उपर्युक्तेन व्याख्यानेन स्पष्टं प्रतीयते यदाचार्याणां वाणी मधुरासीत् ।[1] शिष्यस्य सम्बोधने वै सौम्यपदस्य प्रयोगं कृतवन्तः । शिष्यास्तु भगवत्पदेनाचार्यं समबोधयन् ।

शिष्यस्योत्साहसंवर्धनायाचार्यस्य सन्देश आसीत्—उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत । प्रवचनस्यारम्भे स शिष्यं प्रत्याह—सह नौ यशः । सह नौ ब्रह्मवर्चसम् । सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु । मा विद्विषावहै ।

शिक्षणकर्म तपसो नियोजनमासीत् । भृगुर्वारं वारं तपः कृत्वैव ब्रह्मणः स्वरूपमजानात् ।

आचार्याः प्रश्नं पृष्ट्वा विद्यार्थिना दुर्बोधपदमशुद्धं मतं च ज्ञात्वा विषयप्रतिपादनमकुर्वन् । आचार्याणां व्याख्यानेभ्यो बोधं प्राप्य विद्यार्थिनो मनननिदिध्यासनाभ्यां तस्य परिपोषणं कृतवन्तः ।[2]

ज्ञानस्य स्थिरीकरणाय शिष्या अनेकाचार्येभ्योऽधीयन्त । भागवते सत्यमेव प्रतिपादितम्—

न ह्येकस्माद् गुरोर्ज्ञानं सुस्थिरं स्यात् सुपुष्कलम् ।

मनुस्मृतिपुराणस्य शिक्षाविधिरनुकृतेरपि श्लोके परिचीयते—

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥

---

१. महाभारतेऽपि प्रमाणीकृतम्—
मधुरं कथ्यते सौम्य श्लक्ष्णाक्षरपदं त्वया ।
प्रीयामहे भृशं तात पितेवेदं प्रभाषसे ॥ आदि १४२ ॥

२. श्रुतेः शतगुणं विद्यान्मननं मननादपि । निदिध्यासं लक्षगुणमनन्तं निर्विकल्पकम्—विवेकचूडामणी-३६५ ।

ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरो: सदा ।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥
अध्येष्यमाणं तु गुरुर्नित्यकालमतन्द्रितः ।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् ॥
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यति ॥
प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः ।
प्राणायामैस्त्रिभिः पूतस्तत ॐ कारमर्हति ॥ २ ७०–७५

अध्ययनारम्भे ओङ्कारविधिरनुपेक्षणीय इति प्रतिपादयन्नापस्तम्बो लिखति—ओङ्कारः स्वर्गद्वारं तस्माद् ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत । विकथां चान्यां कृत्वैवं लौकिक्या वाचा व्यावर्तते ब्रह्म ।[1]

गुरुणा मधुरा वाणी प्रयोज्येति मनुना निर्दिष्टम्—

अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम् ।
वाक्चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥ २ १५९

यस्यां स्थितावाचार्यः, तस्यां स्थितौ भूत्वैव शिष्यस्तं प्रश्नान् पृच्छेदिति नियम आसीत् । आचार्ये उत्तिष्ठति, उपविशति, चलति, शयानेवा स्वयमेवोत्तिष्ठन्, उपविशन्, चलन्, शयान एव शिष्यः पृच्छति स्म ।[2] उपर्युक्तशिक्षणविधौ विद्यार्थिनां संख्या नाधिका प्रकल्पनीया । महाभारतानुसारमायोदधौम्यस्य त्रयः शिष्या आसन् आरुणिः, वेदः, उपमन्युश्च । वेदस्यापि त्रय एव शिष्या बभूवुः ।

सूर्यसिद्धान्तानुसारं तु ज्योतिषविषयस्याध्यापनार्थं परिलेखाः, चित्राणि यन्त्राणि च यथायोगमुपायुज्यन्त । ग्रहकक्षाणामवबोधाय सिद्धान्तशिरोमणेर्गोलबन्धाधिकारे यन्त्रयोग उपकल्पितः । प्रायोगिकशिक्षणे भरतस्तु ग्रहणं, धारणं, ज्ञानं प्रयोगश्चेति चत्वारि अङ्गानि निर्दिशति ।[3]

अध्यापनसत्रम्

वैदिकसंस्कृतौ श्रावणमासस्य पूर्णिमातिथावुपाकर्मविधिनाध्यापनारम्भोऽभवत् । तदाप्रभृति पञ्चमासानध्ययनमक्रियत । पौषपूर्णिमायामुत्सर्जनविधिनाध्यापनं समाप्यते स्म ।

१. आपस्तम्बे १ १३.६—८ ।
२. दीर्घनिकाये अम्बट्ठसुत्ते ।
३. नाट्यशास्त्रे १.२२ ।
४. अविमारके चतुर्थाङ्के ।

अवकाशे सति छात्राः क्वचित् स्वगृहं गतवन्तः ।[४] अनध्यायदिवसाना संख्या नासीत् स्वल्पा । साधारणेऽपि विक्षोभे, अशौचे, वियोगे, संयोगे, धार्मिकप्रयोजने सति अनध्यायः प्रवर्तितः । तथा हि भूकम्पे, उल्कापाते, सहचारिणा विप्रवासे च सति यज्ञभोजनादिषु, अमावस्याया पौर्णमास्या वानध्यायो घोषितः ।[१]

## बौद्धशिक्षणविधिः

बौद्धशिक्षणविधिर्गौतमेन प्रवर्तितः । स तु प्रायशो व्याख्यानपरः । गौतमस्तु सर्वजनबोधसुबोधवाक्यप्रयोगेण सुग्राह्यविचाराणां परम्परया निगूढमपि तत्त्वमनायासेनैव बोध्यं कर्तुं समर्थतम आचार्योऽभवत् । तस्य व्याख्यानानि प्रभावोत्पादकानि बभूवुः । स्वकीयां शिक्षणपद्धतिं पर्यालोचयन् स प्राह——यथा सागरस्य गाम्भीर्यं शनैः शनैः वर्धते, तथैव धर्मशिक्षापि शनैः शनैरवगन्तव्या । पदं पदमेव गच्छन्नर्हन् भवितुं योग्यः । शिक्षा मानुनापथा ग्रहणीयेति गौतमस्य घोषः ।

पारस्परिकविमर्शेन विहारेषु भिक्षुणा ज्ञानं अर्जितम् । शिष्यास्तु परस्परं शिक्षका बभूवुः । कथं व्याख्यानं दातव्यमिति उद्दिश्य भिक्षवो शिक्षिताः । यथाकालं व्याख्यातारो बभूवुः ।

अध्ययनकर्मणि तर्कबुद्धिः सर्वत्र प्रयोज्येति गौतमादेशः । तेनोपदिष्टम्——पुस्तकेषु प्राप्यते, आचार्यः कथयति, लोके प्रतिष्ठितेयं परम्परा——इत्युदीर्यमाणोऽर्थं कस्यापि वचनस्य ग्राह्यत्वं न विद्यते । श्रुतमिदमनवद्यमिदं सुखमिदं हितमिदं वा, एतद्विनाय किमपि वस्तु तत्र जानीहि ।

मौखिकशिक्षायाः प्रचलनमासीत् । विद्यार्थिनस्तु प्रश्नोत्तरेणात्मनः शङ्कानां परिहारं कुर्वन्ति स्म । आचार्यस्य ब्रह्मस्वरः प्रशंसितः । ब्रह्मस्वरस्तु स्पष्टो, विज्ञेयो, मञ्जु, श्रवणीयो, बिन्दुः, क्रमानुकूलो, गम्भीरो, निनादश्चेत्यष्टविधो भवति ।[२]

'शिक्षां सम्प्राप्य शिष्या उपदेशने, आख्याने, प्रज्ञापने, प्रतिष्ठापने, विवरणे, सरलीकरणे, आक्षेप-निराकरणे च समर्था भवेयुः' इति आचार्याणां प्रयासोऽभवत् ।

## जैनशिक्षणपद्धतिः

जैनशिक्षणपद्धतिः प्रथमं विरक्तानां कृतेऽभवत् । इयं प्रायशो बौद्ध-शिक्षणपद्धतिसमाना वर्तते । महावीरस्वामी जैनसंस्कृतेः सुप्रसिद्धः प्रथमाचार्यो बभूव । तस्मादेव जैनशिक्षणपद्धतेः प्रवर्तनमभूत् । महावीरानुसारं तु शिष्येभ्यस्तथैव शिक्षा दातव्या, यथा पक्षिणः शावकेभ्योऽन्नं ददति । व्याख्यां कृत्वैव स्वप्रवचनस्य ग्राह्यता संवर्धनीयेति महावीरस्य मतम् ।

---

१. गौतमधर्मसूत्रानुसारम् ।

२. दीघनिकाय २.५ ।

परवर्तियुगे शास्त्राणां पाठस्य प्रचलनं प्रवर्तितम्। सूत्राणां वृत्तिः पुनः पुनः पृष्ट्वा बोधनीयेति विधानमासीत्। कण्ठाग्रकरणस्य विधिः सर्वसाधारण आसीत्। पठितस्य मननं चिन्तनं करणीयमासीत्। जैनशिक्षणस्य पञ्चाङ्गानि सन्ति—वाचना, पृच्छना, अनुप्रेक्षण (मननम्), आम्नाय (कण्ठाग्रकरणम्) तथा धर्मोपदेश इति।

सर्वासु शिक्षणपद्धतिषु शिष्याणामाचार्याणाञ्च समाजेन सम्पर्कः प्रसाध्यते स्म। महाभारतानुसारं व्यास एतदर्थं शिष्यैः सहितो जनमेजयस्य यज्ञे विवेश। बौद्धा जैनाश्च भिक्षव आचार्याश्च समाजस्य हितं पुरस्कुर्वाणा उपादिशन्।

## ब्रह्मचारिनियमाः

पुरा सदैव विद्यार्थिजीवनं तपोमयमासीत्। तपसा त्यागेन च विद्यार्थिना चित्तवृत्तयो ध्ययनमुख्यो भवतीति भारतीयानां शाश्वतधारणा। सांसारिकबन्धनानि खलु भोग-विलासमनोरञ्जनादीनि नाम विद्याप्राप्तिमार्गे बाधा। ब्रह्मचर्यशब्दः तस्यैव तपोमय जीवनस्य प्रतीकोऽस्ति। ब्रह्मचर्यं तु ब्रह्मणः (पराविद्यारूपस्य वेदस्य) प्राप्तये चर्यं (जीवनविधिः) कथ्यते।[2] तपसा ब्रह्म विजिज्ञासस्वेति सिद्धान्तः। तपो ब्रह्मेति।[3] विष्णुपुराणानुसारं तु—

स्वाध्यायसंयमाभ्यां स दृश्यते पुरुषोत्तमः।
तत्प्राप्तिकरणं ब्रह्म तदेतदिति पठ्यते॥ ६.६.१

वैदिकयुगस्यादिकालतः विद्यार्थिजीवने तपस आवश्यकत्वं निर्धारितम्। तदा ब्रह्मचारी धरातले शेते स्म, न तूच्चासने। स संगीतनृत्यपरिभ्रमणादिभ्यो दूरोऽभवत्। स्यातिनिद्राक्रोधारम्भप्रशंसासौन्दर्यसुगन्धादिभिः स कदापि न वशीकृतः।[4]

उपनिषद्युगे ब्रह्मचर्यं तु तपसः मौनस्यानाशकायनस्यारण्यायनस्य स्वरूपमेव सम्मतम्।[5] भृगुस्तु ब्रह्मज्ञानाय वारं वारमतप्यत।[6] कतिपयविद्यार्थिनो गुरोर्गवां चारणं कृतवन्तः।[7]

वैदिकयुगस्य पश्चात् ब्रह्मचारिजीवनस्य विस्तृतनियमाः सूत्रस्मृतिषु दृश्यन्ते। ते नियमा ब्रह्मचारिणो भोजनमावासं वस्त्रं शयनं तपः शौचं स्वभावं चाधिकृत्य निर्मिताः।

१ दीघनिकायब्रह्मा० २ ३

२ ब्रह्म वेदः, तदध्ययनार्थं व्रतमप्युपचाराद् ब्रह्म। ब्रह्म चरितुं शीलमस्य यद्वा ब्रह्म तपः ज्ञानं वा चरति अर्जयत्यवश्यम् इति ब्रह्मचारिशब्दस्य व्याख्या।

३. तैत्तिरीयोपनिषदि भृगुवल्ल्यां २

४ गोपथब्राह्मणे २.१—७, २.१ ९

५. प्रश्नोपनिषदि १.२, छान्दोग्ये ८.५

६. तैत्तिरीयोपनिषदि भृगुवल्ल्याम्

७. छान्दोग्ये ४.४५

महाभारतानुसारं तु

आहूताध्यायी गुरुकर्मस्वचोद्यः पूर्वोत्थायी चरमं चोपशायी ।
मृदुर्दान्तो धृतिमानप्रमत्तः स्वाध्यायशील सिध्यति ब्रह्मचारी ॥ आदि प० ८६ २

### भोजनम्

ब्रह्मचारी भिक्षान्नं भुक्तवान् । स भिक्षान्नादार्यनिर्दिष्टानि वस्तून्येवाखादत् भोजनपात्रे स किंचिदपि नात्यजद् भुक्त्वा च पात्रममार्जयत् । स क्षारलवणमधुमांसभोजनं न कृतवान् । भोजनकाले मौनं निर्लोभत्वं चावश्यकविधानमासीत् । बौधायनस्तु विद्यार्थिभ्यो यथेष्टभोजनमात्राया व्यवस्था कृतवान् ।

### आवास

विद्यार्थी आचार्यगृहे वसति स्म । अन्यत्र निवासस्य व्यवस्था नासीत् । रात्रौ ब्राह्ममुहूर्ते उत्थाय स आचार्यपादान् प्रणमति स्म । दिवा नाशेत । रात्रौ शयनात् प्रागेव गुरो चरणौ स धावति स्म । तेनाऽऽसः स शयनाय गतवान् । तस्याथ शय्या भवति स्म ।

### वस्त्रम्

विद्यार्थिनो द्वे परिधाने—उत्तरीयं वासश्च गृह्णन्ति स्म । आरम्भिकयुगे विविधवर्णानां विद्यार्थिनामुत्तरीयं विभिन्नपशूनां चर्मणा निर्मितम् । उत्तरीयं यज्ञोपवीतवद् धृतम् । वाससा कटिप्रदेशादधोभाग आच्छादितः । ब्रह्मचारिणां वस्त्राणि शरीरालङ्करणाय नाभवन्निति स्पष्टमेव ।[1] शरीरसंस्काराय स नित्यमेवास्नात् । राजकुमारा अपि महाभारतानुसारं धनुर्वेदशिक्षणकाले कौरवाजिनवाससो बभूवु ।[2]

### तप

ब्रह्मचारिणस्तपोविषये मनुना निर्दिष्टम्—

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥ २. १६४
मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटः ॥ २ २१९

हारीतानुसारं विद्यार्थी जटी दीर्घनखरोमा भवतु ।

### स्वभाव

ब्रह्मचारी क्षमाशीलो जितेन्द्रियो विनयी परिश्रमशील कर्तव्यपरायणो कर्मण्य आत्मविजयी स्फूर्तिशीलो क्रोधरहित ईर्ष्यारहितश्च भवेत् । कदापि तेनात्मप्रशंसा परनिन्दा

---

१. कथं स्यात् शरीरालङ्करणं यतो यमेन निर्दिष्टम्—
दण्डं कमण्डलुं चैव मौञ्जीं च रशनां तथा ।
धारयेद् ब्रह्मचर्यं च भैक्षाशी गुरौ वसन् ॥

२. सभापर्वणि ४. २८ ।

कटुभाषणं वा न कर्तव्यम् ।[1]

ब्रह्मचारिजीवनविधिमनुशासतापस्तम्बेन निर्दिष्टम्—न प्रेक्षेत नग्नां स्त्रियम्। ओषधिवनस्पतीनामाच्छिद्य नोपजिघ्रेत । उपानहौ छत्रयानमिति च वर्जयेत् । न स्मयेत । नोपजिघ्रेत् स्त्रियं मुखेन । न हृदयेन प्रार्थयेत । नाकारणादुपस्पृशेत् ।[2]

महाभारते विद्यार्थिनस्तपोमयं जीवनं निर्दिष्टम् । यथा—

सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम् ।
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत् सुखम् ॥

## विनय आचार्यसेवा च

पूर्ववर्तियुगे महाभारते आरुणि-वेदोपमन्यूनामादर्शचरितगाथा वर्णिता । आरुणिर्गुरोः कृषिकर्मणि सहायतामकरोत् । वेदो विविधकष्टान्यनुभूयापि गुरुसेवां प्रसन्नमना अकरोत् । उपमन्युस्तु गुरुपरीक्षापीडितोऽन्धः सञ्जातः कूपे पतितश्च । कथस्तु शुक्रस्य गा अचारयत् ।[3] गुरूणां सेवार्चनं तु महत्तममासीत् शिष्याणामिति महाभारतीयं मतम् । तथा हि—

ऋतस्य दातारमनुत्तमस्य निधिं निधीनां चतुरन्वयानाम् ।
ये नाद्रियन्ते गुरुमर्चनीयं पापाल्लोकांस्ते व्रजन्त्यप्रतिष्ठाम् ।

आदिप० ७६ ५१

अपराधी विद्यार्थी दण्डनीय आसीत्, किन्तु दण्डविधानं कठोरं नाभवत् । गौतमस्तु कठोरदण्डदायिनमाचार्यमेव दण्डनीयं मन्यते ।

## बौद्धानुशासनम्

गौतमबुद्धो विद्यार्थिजीवने कष्टस्वविधानं मध्यमप्रतिपदा परिहार्यमिति घोषितवान् । तदनुसारं जीवनविधिर्नातिसुखमयो न दुःखमयश्च । तेन निर्धारितानि दश शिक्षापदानि संक्षेपेणैव भिक्षूणामनुशासनपूर्णजीवनविधिं निदर्शयन्ति । यथा—

( १ ) पाणातिपाता वेरमणी ( २ ) अदिन्नादाना वेरमणी ( ३ ) अब्रह्मचरिया वेरमणी ( ४ ) मुसावादा वेरमणी ( ५ ) सुरामेरयमज्जपमादट्ठाना वेरमणी ( ६ ) विकालभोजना वेरमणी ( ७ ) नच्चगीतवादितविसूकदस्सना वेरमणी ( ८ ) मालागन्धविलेपनधारणमण्डनविभूसनट्ठाना वेरमणी ( ९ ) उच्चासयनमहासयना वेरमणी ( १० ) जातरूपरजतपटिग्गहणा वेरमणी ।

---

१. तथा महाभारते—
अधीयानः पण्डितं मन्यमानो यो विद्यया हन्ति यशः परेषाम् ।
तस्यान्तवन्तश्च भवन्ति लोका न चास्य तद् ब्रह्मफलं ददाति ॥ आदिप० ८५.११

२. आपस्तम्बे १. ७. ९—११ ।

३. दशपरिच्छेदे पद्मपन्ने निर्दिष्टम्—
विद्या गुरुविनयवृत्त्यातिविषमा ।

बौद्धसंस्कृतौ भिक्षुविद्यार्थिनः समाजे विचरन्ति स्म। तेषां जीवनविधिर्गौतमेन प्रकाशमय उदात्तश्च व्यवस्थापितः। स्वकीयं प्रशस्तनीयैराचरणैः समाजे प्रतिष्ठां प्राप्य तस्य समाजस्य मार्गप्रदर्शनं भिक्षूणामपि कर्तव्यं निर्धारितम्।

विहारे भिक्षूणां जीवनं सांघिकमासीत्। ईदृशे जीवनविधौ परस्परमादान-प्रदानवृत्तिः, सहिष्णुता सहानुभूतिः सहायमावना गुरूणां सेवा नितान्तमपेक्षिता भवन्ति। विहारजीवन-स्यादर्शव्यवस्था गौतमेन सर्वां स्थितीं पर्यालोच्य कृता। येन विहारेषु भोजनवस्त्रावा-सस्नानादिकानां समुचितः प्रबन्धः कृतः। भिक्षुसंघेषु जलाशयवर्त्मभिः प्रशान्तिदश विरराजतुः।[1]

फाह्यान-ह्वेनसाङ्गादीनां लेखैर्ज्ञायते यत् परवर्तियुगेऽपि विहारेषु भिक्षूणामनुशासनं जीवनविन्यासश्चानुकरणीये अभवताम्।

## जैनानुशासनम्

जैनशिक्षणविधौ तपसोऽतिमहत्त्वमासीत्। तत्र तपस्तु प्रायः कष्टकरमस्ति। दिगम्बरा अनागारा वस्त्रहीना आसीत् प्रथमाचार्यस्य महावीरस्य जीवनवृत्तिः। शरीरस्य शुद्धिरपि नापेक्षिता। उपर्युक्ताभ्यां तु प्रारम्भकयुगं आसीत्।

परिवर्तियुगे मानवकानां शिक्षणाय तेषां साधारणतः सुखप्रदव्यवस्था प्रादुर्भूता। माण-वकास्तु भिक्षावृत्त्या ग्रासं वस्त्रं धृतवन्तः। भिक्षुणीभ्यः चत्वारि वस्त्राणि निर्धारितानि। भोजनाय विद्यार्थिनो भिक्षया वा याचनां कुर्वन्ति स्म।

## आचार्याणां व्यक्तित्वम्

वैदिकशिक्षणविधौ देवानां व्यक्तित्वानुरूपमाचार्यस्य व्यक्तित्वं व्यवस्थापितम्। इन्द्रा-ग्निसविता रो दवा आचार्या एव। एषां देवानां सर्वज्ञत्वं चेतनाप्रदानत्वं तमसोऽपाकरणं बुद्धिवर्धनं सत्यस्थापनं च वैदिकसाहित्ये प्रायशो वर्णितानि। आत्मगुणैः तेषां देवानां समाना एवाचार्या अभवन्। आचार्यास्तु मन्त्रद्रष्टारः ऋषयो बभूवुः। ते पुरुप्रिया आसन्। ऋग्वेदानुसारमेव—

■ धीरास कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त ॥ ३८४

प्रथमाचार्यः पितैवाभवत्। ऋषयस्तु गृहस्थाः स्वयमेव स्वपुत्रानपाठयन्। पुत्रैः सह बहवो ग्रामीणबालका अपि तत्रागत्य पठन्ति स्म। स ऋषिर्न केवलं स्वपुत्राणामपितु सर्वेषां बालकानां पिता बभूव। इदमेव परिलक्ष्य धारणा समभवत्—

---

[1]. अनातपान् संतरन् प्रशान्ति दृष्ट्वैव
स्वपुत्र तत्र प्रवेशयामास। दीघनिकाये सीहस धम्मत।

आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः ।
तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः ॥[1]

अनेन प्रकारेण मातृत्वमपि सिद्धमाचार्यस्य । तदनुसृत्य पुत्रवदेवाचार्यनाम्ना शिष्यो विख्यापितः । तद्यथा सौन्दरनन्दे—

एकपित्रोर्यथा भ्रात्रोः पृथग्गुरुपरिग्रहात् ।
राम एवाभवत् गार्ग्यो वासुभद्रोऽपि गौतमः ॥ १.२३

आचार्यः स्वयमेव ब्रह्मचारी बभूव । बहूनामाचार्याणां जीवनं तपोमयमभवत् ।[2]

आचार्यस्तु वेदाध्यापनं धनप्राप्तये नामन्यत । सूर्यो यथा प्रकाशं ददाति, नदी जलं ददाति तथैवाचार्यो विद्यार्थिभ्यो ज्ञानं ददाति । कथितं च शतपथे—प्रिये स्वाध्यायप्रवचने भवतो युक्तमना भवत्यपराधीनोऽहरहरर्थान् साधयते सुखं स्वपिति ।[3]

उपनिषत्सु बहूनामाचार्याणां व्यक्तित्वं निर्दिष्टम् । पिप्पलादस्तु नाम्नैव तपस्वी । तस्य जीवनविधौ वैभवानां स्थानं नासीत् । सत्यनिष्ठ आसीत्स आचार्यो यः शिष्यमशिक्षयत्—

सत्यं वद धर्मं चर । स्वाध्यायान्मा प्रमदः । यान्यनवद्यानि कर्माणि तानि सेवितव्यानि, नो इतराणि ।

शिक्षा इमास्तेनाचार्येण निजव्यक्तित्वे प्रतिष्ठापिता इति निश्चतमेव । कश्चिदाचार्यो निजव्यक्तित्वस्य विश्लेषणमेव कुर्वन्नाह—

'आ मा यन्तु ब्रह्मचारिणः । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासम । शरीरं मे विचर्षणम । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । श्रुतं मे गोपाय । आवहन्ती । वितन्वाना । कुर्वाणाऽचीरमात्मनः । वासांसि मम गावश्च । अन्नपाने च सर्वदा ।'

यथापः प्रवता यान्ति । यथा मासा अहर्जरम् ।
एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः ॥
प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व । तै० उप० शिक्षावल्ली ४

शिष्याचार्ययोर्दृढैकत्वं प्रकटीकृतमनेन वाक्येन—

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु ।

छात्रशब्दस्य यथायोग व्युत्पत्तिरपि वैयाकरणैर्निदिष्टा । तद्यथा—गुरुश्छत्रम् । गुरुणा

---

१ अथर्ववेदे ११ ५ ३

२ अथर्ववेदे ११ ५ १७, शतपथे १४ १ १ २८

३ शतपथे ११ ५ ७ १

शिष्यश्छत्रवच्छाद्य । शिष्येण च गुरुश्छत्रवत् परिपाल्य ।[१]

रामायणमहाभारतानुसारं प्रख्याताचार्याणा—भरद्वाजागस्त्य-वसिष्ठ वाल्मीकि-व्यास-द्रोण-परशुरामादीना व्यक्तित्व तु विदितं खलु सर्वेषाम् । अगस्त्यमधिकृत्य रामायणे निगदितम्—

अगस्त्य इति विख्यातो लोके स्वेनैव कर्मणा ।
दक्षिणा दिक् कृता येन शरण्या पुण्यकर्मणा ॥
तत्र शिष्यैः परिवृतो मुनिरप्यभिनिष्पतत् ।
औदार्येणावगच्छामि नियतं तपसामिमम् ॥

रामोऽपि महर्षीणा दर्शनेनात्मान बहु मन्यते स्म ।

अर्जुनो द्रोणो भीष्मो विश्वामित्र परशुरामश्च रणविद्याया महाभारतीया श्रेष्ठा आचार्या अभवन् । आचार्या शिष्याश्च सहचारिणो बभूवुरिति सलक्ष्य महाभारते प्रोक्तम्—

अनुगम्यमान शुशुभे शिष्यैरिव गुरुः प्रियै ।

सूत्रस्मृतिपरम्परानुसारमाचार्यस्य व्यक्तित्व पूर्ववदुच्चतर प्रतिभाति । आचार्यस्तु शिष्याणामध्यापनायात्यधिक श्रम करोति स्म । तस्य जीवन-विधिर्ब्रह्मचर्यनिष्ठ सन् विद्यार्थिभ्य आदर्श आसीत् । स स्वशरीरमलङ्कृत भूषित वा न कृतवान् । स्वयमप्यर्ध-रात्रत उत्थाय स्वाध्यायमकरोत् । ब्राह्ममुहूर्ते सोऽध्यापन कृतवान् । पश्चादपि नाशेत । सोऽधमपुरुषै सह सम्बन्ध नाकरोत् । व्यर्थकार्याणि तृणभञ्जनादीनि नाकरोत् ।[२]

परवर्तिप्राचार्याणा वर्णन रघुवशे कादम्बर्या च वर्तते । वाल्मीकिवसिष्ठादीनामादर्श सर्वैवाचार्याणा समक्षमवियत ।

खीष्टस्य पश्चादष्टमे शतके शङ्कराचार्य प्रादुरभवत् । शङ्करस्य प्रतिभाऽप्रतिमा-सीत् । अष्टमे वर्षे एव स वेदादिषु परमप्रावीण्य प्राप्तवान् । बाल्य एव स प्रव्रजित । तत पर जीवनपर्यन्त स कर्मयोगी बभूव । अद्वैतवेदान्तस्य प्रकाशस्तम्भरूपा महामठा भारतस्य चतसृषु दिक्षु तेन प्रतिष्ठापिता । तस्य दिग्विजय सुविदित एव । तस्य शास्त्रविवादा दर्शनग्रन्थाना भाष्याणि च प्रख्यातानि सन्ति ।

बौद्धाचार्याणा व्यक्तित्व बुद्धस्य व्यक्तित्वानुरूपमेवासीत् । गौतमेऽदम्य उत्साह, कल्पनातीता कर्मण्यता, आर्जवम्, प्रत्युत्पन्नबुद्धि, शङ्कासमाधानस्यातिशयक्षमता चाव-र्तन्त । राजकुमार आसीत् बुद्ध । तस्य सान्निध्येन सर्वे प्रभाविता सन्तो विचारयितुमार-भ्यवन्त —कीदृशमिद ज्ञान येन गौतमेनेदृश्युच्चता भव्यता वारमसात्कृता ।

---

१ अष्टाध्यायी ४ ४ ६२

२ गौतमबुद्धानुसार प्राच्यानामृषीणमेतद्

शुभलक्षणं कालान्तरे क्वचिदलुप्यत । दीघनिकाये

अम्बट्ठसुत्ते १ ३ । महाभाष्यानुसारं कति पयाचार्या वेतनग्राहिणो बभूवु ।

मानवता प्रति गौतमस्यापरिमेया सहानुभूतिरासीत्। स सर्वजनीनहितायाऽस्यान् शिष्यान् देशेषु विदेशेषु च प्रेषितवान् दानादिशच्च—'विश्वस्य सर्वस्य प्राणिभ्यो दया भाव धारयत। सर्वेषा कल्याणाय, लाभाय, मङ्गलाय च चेष्टध्वम्। तदेव जीवन दर्शन विज्ञापयत यदादौ मध्येऽवसाने च कल्याणमय वर्तते।'

सन्यासिनामपि बौद्धाचार्याणा भिक्षुशिष्यान् प्रति पितृभावो बभूव। अथ किम्, विहारेषु नियम आसीत्—सचे अन्तेवासिको गिलानो होति, यावजीव उपट्ठातब्बो वुट्ठानमस्स आगमतेब्ब ति।'[1]

गौतमस्य वाणी मधुरासीत्। धीर एव विकारहेतौ सति चित्तविक्रिया नान्वभवत्। शत्रवोऽपि स्निग्धा सन्तस्तस्य शरण ययु। इत्य मूर्तेऽपि तस्यानुशासनमतिसफलमासीत्। स तु भिक्षुणा सर्वोच्चविकासात् प्राड्मरणमपि नैच्छत्।[2]

परवर्तियुगेऽपि बहवो बौद्धाचार्या चरित्रज्ञानयशोबलेन च सर्वत्र प्रतिष्ठिता बभूवु। तेषा व्यक्तित्वप्रभयैवाकृष्टा विद्वासो ज्ञानपिपासवो विदेशेभ्योऽपि समागता।

जैनाचार्याणा व्यक्तित्व महावीरस्य व्यक्तित्वानुरूप विकसितम्। सर्वेषा हिताय ते प्रयत्नशीला बभूवु। सरलजीवन तै स्वीकृतम्। उपाध्याया सम्यग्ज्ञान-दर्शन-चरित्रे प्रख्याता बभूवु। आचार्या समाज दर्शनज्ञानवीर्यचरित्रतपोभिश्च सन्धारयितु नियुक्ता आसन्।

इमे आचार्या न केवल शिक्षका आसन्, अपितु तेषु बहवो महाप्र-पकारा बभूवु। भारतीयराष्ट्रस्य चरित्र निर्माण कथ स्यादिति चिन्तयोदग्रोत्साहा इमे आचार्या अहर्निश प्रायतन्त। एतेषा शङ्कराचार्य प्रामुख्य भजते।

## गृहस्थाश्रमः

विवाहसंस्कारस्य पश्चात् स्नातका गृहपतयो गृहस्था बभूवु। वैदिककालत एव गृहस्थाना जीवनविधिर्विविधप्रकारैर्भरै पूर्णो विद्यते। प्रथमं तावत्पञ्चमहायज्ञाना परिपालनमस्ति। एषा द्वारेण गृहस्था देवता मानवता च प्रति कर्तव्य सम्पादितवन्त।[1] तथा हि महाभारतानुसार

पञ्च यज्ञांस्तु यो मोहान्न करोति गृहाश्रमी।
तस्य नाय न च परो लोको भवति धर्मत ॥ शा० १३४.२६

## महायज्ञाः

यज्ञस्तु त्यागवाचक शब्द। महायज्ञेषु सर्वेषा पोषणाय विविधप्रकाराणा त्यागादीना

१. महावग्ग १.१.२
२. महापरिनिब्बाने २.१

विधानमभिन् । अस्मै प्रयोजनाय ब्रह्मचर्याश्रमे गृहीतानि विद्या आचार स्वास्थ्यबल च साफल्यमानि बभूवु । एभिरेव गृहस्थोऽधिकाधिक धन प्राप्नोत्, तेन च यज्ञादिक कर्म कृतवान् ।

महायज्ञाना सक्षिप्तस्वरूप वर्णितम्—

पाठो होमश्चातिथीना सपर्या तर्पण बलि ।
एते पच महायज्ञा ब्रह्मयज्ञादिनामका ॥

मनुना प्रोक्तम्—

अध्यापन ब्रह्मयज्ञ पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥

ब्रह्मयज्ञ

ब्रह्मयज्ञेन स्वाध्यायप्रवचनयोर्निर्देश । ब्रह्मचर्याश्रमप्रकरणेन स्पष्ट प्रतिभाति यत् सर्वैराचार्यैर्नि शुल्कमेव वेदवेदाङ्गाना शिक्षा दत्ता । तथा ब्रह्मयज्ञस्याध्यापनपर स्वरूप वर्णितम् । स्वाध्यायपरा एवाचार्या आसन् । अनेन प्रकारेण तदा दीनहीनानामपि विद्यार्थिना शिक्षा सम्भवत् । ब्रह्मयज्ञसम्पादनार्थमेवाचार्या विद्यार्थिसमूह समीहन्ते स्म । शतपथानुसार ब्रह्मयज्ञेन स्वर्गप्राप्तिर्भवति । सर्वोच्चोऽय यज्ञ । देवा ब्रह्मयज्ञेन प्रीणिता स्वाध्यायिभ्यो विविधानभ्युदयान् ददति । स्वाध्यायविषयास्तु वेदवेदाङ्गे-तिहासपुराणादय आसन् । ब्रह्मयज्ञे व्यक्तिगताभ्युदय समष्टिकल्याण चान्तर्भूते ।

न केवलमार्या, अपि त्वार्येतरा अपि स्वाध्याय कुर्वन्ति स्म । रामायणानुसार यातु-धानाना स्वाध्याय प्रसिद्ध । ब्रह्मयज्ञस्य प्रतीकोऽधुना सन्ध्याविधौ गायत्रीमन्त्रपाठ एव वर्तते ।

देवयज्ञ

देवयज्ञे देवप्रीत्यर्थं स्तुति हवनादिका यज्ञरूप सम्पाद्येत । वैदिका आर्या देवा-नामनुग्रहेणैवाऽऽत्माभ्युदय मन्यन्ते स्म । यज्ञमुखेन ते देवाना सान्निध्यमनुभूतवन्त । देव-सान्निध्येन मानवाना व्यक्तित्वविकासस्य सम्भावनासीत् । वैदिकधारणानुसार देवास्तु धर्मण्या सत्यपरायणा उदारा पराक्रमसम्पन्ना सहायशीलाश्च सन्ति । मानवा अपि देवसान्निध्येनैव गुणानात्मसात् कर्तुमुत्सहन्ते ।[1]

वैदिकगृहेषु साय प्रात हवनमग्निहोत्रविधानेनाकारि । हवन पायसोऽन्न स्तुति कृता । मध्याह्ने सामयज्ञ सम्पादित । अन्येभ्यो देवेभ्यो विविधा यज्ञा विहिता ।

---

१ यश्चिदपि मानवश्चतुर्भि ऋणै सह जायते । महाभारतानुसारमानृण्यार्थं तु—
'यज्ञैश्च देवान् प्रीणाति स्वाध्यायतपसा मुनीन् ।
पुत्रै श्राद्धै पितॄश्चापि आनृशंस्येन मानवान् ॥ आदि १११·१४

पितृयज्ञः

पितरस्तु देवा एव परमोदारा । तेभ्यस्तर्पणस्य विधानं वर्तते । शतपथब्राह्मणानुसारं पितॄणां परितृप्तये स्वधया सह सोमहविर्जलादिकं समर्पणीयम् । पितृयज्ञेन स्वर्गलाभस्य सम्भावनाभिमता ।[२] पुरा पितृभ्यो वंशजानां रक्षासहायतादेराशासीत् ।

पुराणेषु प्रतिदिनमन्नजलदुग्धफलमूलादिभिः श्रद्धया श्राद्धकरणं विहितम् ।[३] अयं नित्यश्राद्धविधिः । पितृयज्ञमुखेन पितॄणामुच्चादर्शः ओरउाहृनायैव मङ्गोऽयसन्दिग्धमेव । पितृकल्पनया मरणाद्भयं दूरमभवत् ।

पितृयज्ञस्यौचित्यप्रशंसा च बन्दीभूतो मुगलसम्राट् शाहजहाँ प्रामाणयत् ।[४]

भूतयज्ञः

'सर्वे सुखिनः सन्तु' इति हिन्दूनां धारणा सनातनी विद्यते । भूतयज्ञेन सर्वेषां प्राणिनां परितृप्तये नित्यमेव बलिर्दीयते ।[५] उपनिषत्स्वग्निहोत्रमुखेन सर्वेषां प्राणिनां भरणपोषणयो: योजना सम्पादिता ।

मनुर्बलिवैश्वदेवद्वारा सर्वेषां परितृप्तये बलिविधानं निर्दिशति । भूतयज्ञस्य माहात्म्यं निष्कर्षयता मनुना प्रोक्तम्—

शुनां च पतितानां च श्वपचां पापरोगिणाम् ।
वायसानां कृमीणां च शनकैर्निर्वपेद् भुवि ॥
एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति ।
स गच्छति परं स्थानं तेजोमूर्तिपथर्जुना ॥ ३.९२-९३

भूतयज्ञस्य दार्शनिकः पक्षो यजमानमुखेन निर्दिष्टः—

भूतानि सर्वाणि तथाहमेतदह च विष्णुर्न ततोऽन्यदस्ति ।
तस्मादहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम् ॥
चतुर्दशो भूतगणो य एष तत्र स्थिता येऽखिलभूतसंघाः ।
तृप्त्यर्थमन्नं हि मया विसृष्टं तेषामिदं ते मुदिता भवन्तु ॥

भागवतपुराणे भगवतो मुखेन प्रोक्तम्—

सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् ।
भूरात्मा सर्वभूतानि भद्रपूजापदानि मे ॥ ११ ११ ४२ ।

---

१ तथा शतपथे—यद्देवा असुरं स्तत्करवाणि । ६ ३.२६। एतदेव समर्थयति जीमूतवाहनो नागानन्दे—स्वर्गं तु भवति पूज्य , यतो हि नाम तस्य किरणाः प्राणदानं कुर्वन्ति ।

२. पितृयज्ञन सुवर्गं गमयति । तै० ब्रा० १.६ ८

३. स्वस्थमेनापि देवपित्रादीनां तृप्तिर्भवेदिति महाभारते—
देवान् वाग्भिः पितॄनद्भिस्तर्पयित्वा जगाम ह ॥ आदि० ४ ६

४. आफरी बाद हिन्दु औ बरबाद मुर्दाहा मी दिहन्द दायम् आब ।
ए पिसर तू अजब मुसल्मानी, जिन्दःरा न आब तरसानी ॥

५ पुरुष इति नाम्ना सार्थकता सर्वेषां पोषकत्वेन जायते । पूरयति सर्वमिति पुरुषः । पुं पिपर्ति इत्यर्थ।

अतिथियज्ञ

वैदिककालादेव सर्वेषामतिथियज्ञो लोकप्रियोऽभवत्।[1] ऋग्वेदानुसार 'केवलाघो भवति केवलादी।' पुरुषास्तु सहस्रपोष्या भवितुमिच्छन्ति स्म। अतिथिपूजनस्योत्कृष्टत्वमथर्ववेदस्येभिर्वाक्यैरवगम्यते—

यो विद्याद् ब्रह्म प्रत्यक्षम्। यद्वातिथिपतिरतिथीन्प्रतिपश्यति देवयजनं प्रेक्षते। स य एवं विद्वान् न द्विषन्नश्नीयान्न द्विषतोऽन्नमश्नीयान्न मीमांसितस्य न मीमांसमानस्य। इष्टं च वा एष पूर्तं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति—पय, रस, ऊर्जा, स्फाति, प्रजा, पशु कीर्ति, यश, श्रिय, सविद च गृहाणामश्नाति य पूर्वोऽतिथेरश्नाति। एष वा अतिथिर्यच्छ्रोत्रियस्तस्मात् पूर्वो नाश्नीयात्। प्रिय. प्रजानां भवति। ज्योतिष्मतो लोकान् जयति य एवं वेद।[2]

उपनिषत्सु पूर्ववदतिथिसत्कारो बहुमत। कठोपनिषदनुसार तु—

आशाप्रतीक्षे सङ्गत सूनृता चेष्टापूर्ते पुत्रपशूंश्च सर्वान्।
एतद् वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे॥

महाभारतानुसारमतिथियज्ञस्य पञ्चाङ्गिनी दक्षिणा—

चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम्।
अनुव्रजेदुपासीत स यज्ञ पञ्चदक्षिणः॥

महाभारतानुसार श्वश्रूणा नववध्वा आशीर्वाद आसीत्

अतिथीनागतान् साधून् बालान् वृद्धान् गुरूंस्तथा।
पूजयन्त्या यथान्याय शश्वद् गच्छन्तु ते समा॥ १९१८

शिलोञ्छवृत्तिरपि ब्राह्मणोऽतिथियज्ञ कुर्यादिति मनुना निर्दिष्टम्। अतिथि काले ऽकाले वागच्छेत् तस्मै भोजन दातव्यमेव। यत —धन्य यशस्यमायुष्य स्वर्ग्यं चातिथिपूजनम्। मनुस्तु सर्ववर्णानामतिथीनर्चितुमादिदेश—

आसनाशनशय्याभिरद्भिर्मूलफलेन वा।
नास्य कश्चिद्वसेद् गेहे शक्तितोऽनर्चितोऽतिथि॥ ४ २९

मनुनातिथ्यस्वरूप विधिवत् निर्धारितम्। तद्यथा—

आसनावसथौ शय्यामनुव्रज्यामुपासनाम्।
उत्तमेषूत्तम कार्यं हीने हीन समे समम्॥ ३ १०७

समृद्धिशालिनस्तु अतिथीनां मनोरञ्जनमप्यायोजयन्। महाभारतानुसार कृष्णोऽर्जुनमतिथि सम्प्राप्य रैवतक पर्वतवन विहारार्थमनयत्। तत्र नटनर्तकादयोऽभिनय

---

१. ऐतरेयब्राह्मणानुसारं शिरो वा एतद् यज्ञस्य यदातिथ्यम्। १ २५। श्रीहर्षानुसार यावदर्हकरणं किल साधो प्रत्यवायविधुतय न गुणाय। नैषध ५ ९।

२ अथर्ववेद ९।६

चक्रुः । राजभिरवारिसातिथयो मठा निर्मिता परवर्तिकाले ।[1]

सर्वेषां कृते महावाक्यं विद्यते—

अदत्त्वा विषमश्नुते वि० पुराण ३.११ ७२

बौद्धसंस्कृतावपि सविशेषं महत्त्वमतिथिसत्कारस्य विहितम् । विहारेषु नित्यमेवातिथयो भिक्षवः समागताः । तेषां सत्कारार्थं विधानानि गौतमेन स्वयमेव रचितानि । बौद्धधर्मानुयायिनो गृहस्थाः पुण्यलाभायापि भिक्षूणामातिथ्यं कुर्वन्ति स्म । जैनसंस्कृतावपि सामान्यतोऽतिथिसत्कारस्य विधानं पूर्ववत् प्राप्यते ।

अतिथियज्ञेन सांस्कृतिकमभ्युत्थानं प्रतिपालितम् । असंख्या विद्वांसो महर्षयश्च भोजनवस्त्रावासादीनां चिन्ताभ्यो विनिर्मुक्ता ज्ञानविज्ञानदर्शनयोगादिप्रवृत्तिषु सर्वदा संलग्ना बभूवुः । गृहस्थानामतिथयो भूत्वा ते सर्वाणि वस्तूनि सादरं प्राप्नुवन् । गृहस्था अपि स्वल्पदिनानां श्रमेणार्जितानि वस्तूनि प्रदाय तेभ्यो महर्षिभ्यश्चिरकालतपोभिरर्जितज्ञानदर्शननिधिं प्राप्तवन्तः । आश्रमव्यवस्थाया मूलस्तम्भोऽयमतिथियज्ञ एव ।

एतत्सर्वं विष्णुपुराणे समासितम्—

वेदाहरणकार्याय तीर्थस्नानाय च प्रभो
अटन्ति वसुधां विप्राः पृथ्वीदर्शनाय च ।
अनिकेता ह्यनाहारा यत्र सायंगृहाश्च ये
तेषां गृहस्थः सर्वेषां प्रतिष्ठा योनिरेव च ॥ ३ ९ १३

ब्रह्मयज्ञेन ज्ञानस्य धारा प्रवर्तिता, देवयज्ञेन देवानां पराक्रमपरोपकारौ स्वायत्तीकृतौ पितृयज्ञेन तपसां गवेषणं कृतम्, भूतयज्ञेन सर्वभूतात्मैक्यं सम्प्रतिष्ठापितम्, तथा चातिथियज्ञेन सर्वजनसम्मानश्च प्रसाधितेति महायज्ञानां गुणगरिमा धन्य एव । एवं [illegible] पञ्चमहायज्ञविधानं प्रशस्तम्—

विचारमननध्यानज्ञानरूपसमाधिकान् ।
कुर्यात् पञ्च महायज्ञान् नित्यं ब्राह्मण्यसिद्धये ॥

## गृहस्थस्य सदाचारः

गृहस्थस्तु रात्रेरन्तिमप्रहरे ब्राह्ममुहूर्ते वा जागरणं चकार । ततः प्रभृति तस्य दिनस्यारम्भोऽभवत् । ब्राह्ममुहूर्ते स पवित्रविचारैर्मानसशुद्धिमकरोत् । तस्य पश्चात् शौचदन्तधावनस्नानसन्ध्यातर्पणपञ्चमहायज्ञाग्निहोत्राणि कृतवान् । मध्याह्ने भोजनमकरोत् । पश्चात् जीविकोपार्जनाध्ययनानि सम्पादितवान् । सन्ध्यासमये सन्ध्यादानशयनेभ्य आसीत् । इदमेवाह्निकमधिकृत्य देशकालानुसारं नियमा विहिताः ।

प्रातः सच्चिन्तनेनाभिनवोत्साहस्य संवर्धनं भवति । गृहस्थस्तु धर्मार्थौ चिन्तितवान् । आध्यात्मिकप्रवृत्तिषु चित्तस्याभिनिवेशाय जगतो जन्ममरणात्मकानि कष्टानि प्रतिदिनं

[1] राजतरंगिणी ८.२४२०

प्रातःकाले चिन्तनीयान्येव निर्णीतानि ।[१]

## शौचम्

मुखशुद्धये दन्तधावनं निर्धारितम् । सूर्योदयात्प्रागेव दन्तधावनं विधेयमिति व्यवस्था वर्तते । भोजनस्य पश्चादपि दन्तधावनेन मुखशुद्धेर्वैज्ञानिकं विधानं वर्तते ।

दन्तधावनस्य पश्चात् स्नानं करणीयम् । स्नानं विना न किमपि धार्मिकं कृत्यं सम्पादनीयमिति व्यवस्थासीत् । स्नानकाले वैदिकमन्त्राणां पाठः कृतः । एवमेव जले स्थित्वा देवर्षिपितृभ्यः तर्पणं विधेयमासीत् । स्नानेनापि स्नानस्य दुरितानि प्रवाहयन्तीति वैदिकधारणा । तद्यथा ऋग्वेदे—

> इदमापः प्रवहत् यत्किं च दुरितं मयि ।
> यद् वाहमभिदुद्रोह यद् वा शेप उतानृतम् ॥ १ २३ २२

पर्यटनाद् गृहागमनकाले प्रथमं पादप्रक्षालनं करणीयम् ।

## सन्ध्यादिकम्

स्नानस्य पश्चात् सन्ध्याकर्म सम्पादितम् । ततः परं सायंप्रातः हवनविधानमासीत् । पश्चात् स्वाध्यायः प्रारब्धः । स्वाध्यायः यावत् कार्यं दिवसस्य प्रथमप्रहरे समापनीयमासीत् । पश्चात् मध्याह्नपर्यन्तं जीविकोपार्जिता । अपराह्णे महायज्ञाः समारब्धाः । अतिथिभ्य आश्रितजनेभ्यश्च भोजनं प्रदाय गृहस्थः स्वयमेव भुक्तवान् । भोजनेऽल्पे सति च स्वयमेव पत्न्या पत्यैश्च सह निराहारौ वर्तताम्, किन्तु दासेभ्यो भोजनं दद्यात्वेवेति नियम आसीत् ।

## भोजनविधि

प्रसन्नमना प्रक्षालितहस्तपादमुखादिरप आचम्य गृहीतशोभनासनः पवित्रे रमणीये च वातावरणे भोजनं कुर्यादिति विधानम् । भोजनविधिमधिकृत्य धर्मशास्त्रेषु बहुला व्याख्या वर्तते तद्दिङ्मात्रनिर्देशो यथा—

> पात्रेष्वर्थानुरूपेषु पुत्रभृत्यात्मजैः सह ।
> भूमौ पात्रं प्रतिष्ठाप्य मौनेनान्नं तु भोजयेत् ॥
> दृष्ट्वा हृष्येत प्रसीदेच्चाप्यभिनन्देच्च सर्वशः ॥ मनु २ ५४
>
> अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् ।
> लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्तथा ॥
> प्रागद्रवं पुरुषोऽश्नीयान्मध्ये तु कठिनाशनः ।
> अन्ते पुनर्द्रवाशी च बलारोग्ये न मुञ्चति ॥
>
> विष्णुपुराणे ३ ११ ८५-८६

---

१ मनुस्मृतौ ४ ९२

न भुञ्जीताधृतं नित्यं गृहस्थो भोजनं स्वयम्।
पवित्रमथ हृद्यं च सर्पिराहुरघापहम्॥
एकवस्त्रो न भुञ्जीत कपाटमपिधाय च।
भूमौ चान्तरीकृत्य भिन्नपात्रे न चाशनम्॥
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम्।
आयुः सुवर्णकारान्नं यशश्चर्मावकर्तिनः॥ मनु० ४ २१८
लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च।
अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च॥ मनु ४ ५
न पापान्नं खादेत्, यतो हि नाम
सत्यमन्नजनितो जनदेह॥ मैप० ५.९४

विज्ञानबलेन शुद्धान्नस्य महत्त्वं निश्चयम्।[१]

रात्रिकृत्यम्

शयनसम्बन्धिनो वैज्ञानिकनियमा विष्णुपुराणे निर्दिष्टाः —

कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही।
गच्छेच्छय्यामस्फुटितामपि दारुमयीं नृप॥
नाविशालां न वा भग्नां नासमां मलिनां न च।
न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम्॥
प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप॥ ३ ११.१०८-११०

## कर्मण्यता तपस्विता च

वैदिकसम्भ्रमिपरायणा जना श्रमस्य सर्वसाधनस्य विज्ञाय तं प्राशंसन्। तद्यथा—

न ऋते श्रान्तस्य सख्याय देवाः।
कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
नानाश्रान्ताय श्रीरस्ति।
कलिः शयानो भवति संजिहानस्तु द्वापरः।
उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरन्॥

उपनिषद्युगे गृहस्थानां जीवनं न्यायपितृत्वसमन्वितमासीत्। तद्यथा—कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः।[२] तदा गृहस्थस्य कामनासीत्—स मेन्द्रो मेधया स्पृणोतु। अनुग्

---

१ अन्नानुरूपा तनुरूपबुद्धिः कार्यं निदानं हि गुणानपीतः। नैषध० ३ १०
शरीरमन्नं स्मरनेकमरहस्या दृतात्मपूर्णं।
भावानुरूपं हृदि वक्ता नाम्नैव पश्य भोजने॥ विष्णु० १४५०
२ छान्दोग्ये ८ १५

देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । कुर्वाणाऽचीरमात्मनः । वासांसि मम गावश्च । अन्नपाने च सर्वदा ।[1] ईशोपनिषदि च 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' निदिष्टम् ।

महाभारते गृहस्थजीवनस्य समृद्धिशालिता प्रशस्ता ।[2] गीतायां कर्मयोगस्यादर्शं मानवता कर्मपरायणा निर्मातुमेवोपदिष्टं । तदनुसारं 'कर्म ज्यायो ह्यकर्मणः' ।

मनुना चतुर्विधा गृहस्था निदिष्टा—ज्ञाननिष्ठा, तपोनिष्ठा, स्वाध्यायनिष्ठा, कर्मनिष्ठाश्च । तेषु ज्ञाननिष्ठा एव मनुना सर्वोच्चे प्रतिष्ठापिता । मनुस्तु ब्राह्मणानां जीविकोपार्जनार्थं कञ्चिदपि श्रमं व्यवसायं वा समीचीनं न मन्यते । पौरोहित्यं विगर्हितमेव । कृषिपशुपालनादिकं न स्वीकरणीयम् । अयाचितदानमेव गृहस्थैर्ग्राह्यम् । यदि ते दानं न प्राप्नुयुः तर्हि शिलोञ्छवृत्त्या जीविकोपार्जनं कुर्युः । मनुना ब्राह्मणेभ्यः ऋतामृतादीनां वृत्तीनां निर्देशः कृतः । तथाहि—

अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिस्तां समास्थाय विप्रो जीवेदनापदि ॥
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम् ॥
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥
ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा ।
सत्यानृताभ्यामपि वा न श्ववृत्त्या कदाचन ॥[3]

मनुस्मृतौ ३ २-५

ब्राह्मणगृहस्थस्तु स एव सर्वश्रेष्ठो योऽश्वस्तनिकः ।[4] अनेन प्रकारेण मनुर्गृहस्थाश्रममपि तपोमयमेव कर्तुमियेष ।[5]

उपर्युक्तनिदर्शनेन प्रतिभाति यत् मनुना प्रणीतायां गृहस्थजीवनविधायां नास्ति स्पृहणीयं । अस्मिन् जीवने सन्तोष एव परमं धनं विद्यते । अयं मनुमार्गो वैदिकसंस्कृतिपथात् दूर एव वर्तते । मनुमार्गः परवर्तियुगेऽपि सिद्धान्तेन सर्वदा प्रतिष्ठितः, किन्तु वैदिकजीवनविधिर्जनतायाः सम्पन्नः सन् कदापि न परित्यक्तः । पौराणिकमतानुसारमिह भारते गृहस्थानां तपस्विजीवनविधिः समृद्धजीवनविधिश्चापि सदा प्रचलितौ । अस्यां दशायां

---

1. तैत्तिरीय शिक्षावल्ल्याम् ४ १
2. शान्तिपर्वणि ८ १४ । आदिपर्वणि कस्यचित् जनकस्य श्रेष्ठत्वं विवेचयन् कवि आह—
दीयतां भुज्यतां चेति वाचोऽश्रूयन्त सर्वशः ॥ १०२ १४
3. सत्यानृतं तु वाणिज्यम् । सेवा श्ववृत्तिः ॥ मनुस्मृतौ ३. ६
4. मनुस्मृतौ ३ ७, भागवते ७ ११ १९
5. तदधिकृत्य पञ्चतन्त्रे गौणरूपेण प्रोक्तम्—मृत मैथुनमप्रजम् । २ १०१

पुराणेषु स्थाने स्थाने धनसमृद्धेर्निन्दा वर्तते । अन्यत्र च धनस्य धर्मसम्पादकत्वमधिकृत्य प्रशंसा कृता । भागवतानुसारम्—

यदृच्छयोपपन्नेन शुक्लेनोपार्जितेन वा ।
धनेनापीडयन् भृत्यान् न्यायेनैवाहरेत् क्रतून् ॥ ७. १७ ५१

यदि शिलोञ्छवृत्त्या जीविका न भवेत्तर्हि यजनाध्यापनैः धनार्जनं ग्राह्यम् ।

भारतेऽस्य विचारो महर्षिभिः कृतः—

अनर्थो ब्राह्मणस्यैष यद्वित्तनिचयो महान् ।[1]

जीवनस्य किमुद्देश्यमिति भागवतकारो निर्दिशति—

योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम् ।
नाचिनोति स्वयं कल्पः स वाच्यः शोच्य एव सः ॥

## गृहस्थाश्रमस्य श्रेष्ठत्वम्

आदर्शगृहस्थजीवनं पुरस्कुर्वाणो गौतमबुद्धः प्राह—

पतिरूपकारी धुरवा उट्ठाता विन्दते धनं ।
सच्चेन कित्तिं पप्पोति ददं मित्तानि गन्थति ॥

सुत्तनिपातस्य आळव॰ सुत्ते ७

तथापि गौतमानुसारं—'सद्धीध वित्तं पुरिसस्स सेट्ठं' इति पारम्परिकधारणमवधारणीयम्।

भारते सुदर्शनाख्यानप्रसङ्गे एव गृहस्थाश्रमस्य वैदिकसाहित्ये श्रेष्ठत्वं सम्मतम् । मनुः गृहस्थस्य इतराश्रमाणां भरणपोषकत्वं परिलक्ष्य प्राह—

यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थेनैव धार्यन्ते तस्माद् ज्येष्ठाश्रमो गृही ॥

वसिष्ठोऽपि मनुं समर्थयन्नेव प्रोक्तवान्—

यथा नदीनदाः सर्वे समुद्रे यान्ति संस्थितिम् ।
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षवः ॥

कालिदासः गृहस्थाश्रमस्य प्रशंसां रघुवंशे प्रस्तुतवान् यत् 'सर्वोपकारक्षम आश्रमो ज्यायम्' इति ।

भागवतानुसारं गृहस्थोऽपि निष्कामकर्मयोगेन परमपदं तथैव प्राप्तुं शक्नोति यथा

---

१. महाभारतेऽनुशासनपर्व ६१ १० ।

स यासी । इद सर्वश्रेष्ठत्व सिद्धमस्ति केवल तादृशा गृहस्थाना येषा गृहस्थधर्म सन्यासादपि कठिनतर । अन्यथा भागवते प्रोक्तम्—

'यन्मैथुनादि गृहमेधिसुख हि तुच्छ कण्डूयनेन करयोरिव दुःखदुःखम ।
तृप्यन्ति नेह कृपणा बहुदु खभाज कण्डूतिवन्मनसिज विषहेत धीर ॥'

गृहमेधिनामीदृशी स्थिति विचार्य बहवो जना ब्रह्मचर्याश्रम न त्यक्तुकामा नैष्ठिकब्रह्मचर्य स्वीकृतवन्त । गृहस्था भूत्वाऽपि यथाशीघ्र गृहस्थाश्रम परित्यज्य पुरातनया विद्वासो वानप्रस्था एवाभवन् ।

## वानप्रस्थाश्रम:

गृहस्था वार्धक्ये समुपस्थिते सर्वस्व ब्राह्मणसात्कृत्वा वानप्रस्था बभूवु । इद तु जीवनस्य पर सार्थक्यमिति प्रमाणयता केनचित् कविना प्रोक्तम्—

पूरयित्वार्थिनामाशा प्रिय कृत्वा द्विषामपि ।
पार गत्वा श्रुतौघस्य धन्या वनमुपासते ॥

गृहस्थाश्रमस्य श्रेष्ठत्वे सत्यपि कथ तस्य त्यागो विधेय इति साम्प्रतिकोऽय प्रश्न । मानवजीवनस्योद्देश्य मोक्ष एव । तस्य सिद्धये गृहस्थाश्रमस्य साधकत्व सन्देहास्पद मत मनीषिभि ।[1] यथा पूर्वमेव कथित गृहस्थाश्रमोऽन्येषा भरणाय श्रेष्ठ किन्तु तस्मिन्नाश्रमे गृहस्थस्यात्मविकासायावसरोऽपूर्ण एवासीत् ।

बुद्धमतानुसार तु गृहस्थेषु स्वभावत एवामयान्या क्रोध , मिथ्याभाषण, वञ्चना, मित्रद्रोह कृपणता अभिमान , ईर्ष्या, तृष्णा, विचिकित्सा, पश्चात्ता, लोभ , दोष , मद , मोहश्च सन्ति । तेषा परित्यागेन अर्थात् गृह परित्यज्यैवाभ्युदय कामयेदिति ।

## गृहस्थाश्रमस्य त्याग:

गृहस्थजीवने वैदिकमहर्षिभि कोऽपि दोषोऽभावो वा दृष्टो यतस्ते वेदस्यारण्यकभाग नगरे ग्रामे वा न पठन्ति स्म । गृहस्था अपि तेषा स्वाध्यायान्निवारिता । केवलमरण्यवासिन एवारण्यकाध्ययनस्याधिकारिणोऽभिमता । अनेन प्रकरणेन स्पष्ट प्रतिभाति यत् कस्यापि विशिष्टविषयस्यावगमाय वनवासस्य महत्व स्वीकृतम्, ग्राम्यजीवनस्य हीनत्व च प्रतिपादितम ।

---

१ पुरुषस्य वय सुखानि भुक्त्वा
रमणीयो हि तपोवनप्रवेश ॥ बुद्धचरिते ५ ३३

२ मुण्डकोपनिषदि १ २.१२

कालान्तरे स्वर्गादपि गरीयान् मोक्ष प्रमाणीकृत । वैदिकसंस्कृते प्राच्यकाले स्वर्गकामा जना यज्ञै स्वाभीप्सित स्वर्गादिक प्राप्नुवन्ति स्म । मोक्षप्राप्तये यज्ञाना साधकत्व नास्तीति विदित सर्वेषाम् । मोक्षाय केवल ब्रह्मज्ञानमनुत्तम साधनमिति प्रसिद्धम् । मोक्षकामा जना शीघ्रमेव गृहस्थाश्रम परित्यज्य गुरुशरण गच्छन्ति स्म । यद्यथा—

परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृत कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणि श्रोत्रिय ब्रह्मनिष्ठम् ॥

याज्ञवल्क्यस्य वैराग्यकथा सुविदिता । स सर्व गृहार्थं परित्यज्य मोक्षार्थी सन् भैक्षचर्या स्वीकृतवान् ।

गृहस्थजीवनस्य कष्टानि प्रायशोऽतिरञ्जितान्येव । तद्यथा—विना परिश्रमं कदापि गार्हस्थ्य न सम्भवति । धनस्य विना कुतो गार्हस्थ्यम् ? दण्डेनापकारेण विनाऽपि गृहस्थाश्रमो न भवति । ईदृश छिद्रै पूर्ण कठिन गार्हस्थ्य क स्वीकुर्यात् ?[१]

प्राचीनयुगे बहवस्तत्रासन् महाविद्यालया येषु केवल प्रव्रजिता एव प्रवेशमर्हन्ति स्म । तेषु विद्यालयेषूच्चशिक्षालाभाय बहवो गृहस्था प्रव्रजिता बभूवु ।[२]

वृद्धावस्थायामिन्द्रियशैथिल्ये सति सर्वेषा हृदि विरागभावना स्वभावतो जागर्त्येव । प्राच्ये मानसिके सन्निवेशे किमप्यद्भुत जीवनदर्शनमेवासीत् येन केशे पलिते प्रव्रज्याकाल आयात इति वनवासाय चित्तमुदग्र सञ्जातम ।[३] राजाऽपि प्रव्रज्याग्रहणमेव वर्त य मन्यते स्म । प्रव्रज्यापद्धतिस्स्मावत् प्रकाशमयो बभूव । पर्वतप्रदेशे इमे प्रव्रजिता विद्यार्थिसममेवात्मविकास नियुक्ता बभूवु ।

महाभारते तु गृहस्थजीवनस्य दुर्दशा वर्णिता । तथाहि—मानवस्तु गृहस्थाश्रमे वसन् व्याधिभिर्वृद्धावस्थया, कालेन, कामनाभिश्च विवशीकृत सुखमनुभवन् तिष्ठति ।[४] एतद् व्यर्थमेव । तथा हि—

इद तु दुष्कर कर्म कुटुम्बमभिसंश्रितम् ।
दानमध्ययन यज्ञ प्रजासन्तानमार्जवम् ॥
यद्येतदेव कृत्वापि न विमोक्षोऽस्ति कस्यचित् ।
धिक् कर्तार च कार्यं च श्रमश्चाय निरर्थक ॥

शान्ति० १९९ ९५-९९

भागवतानुसार तु शूद्रा अपि गृह परित्यज्य वानप्रस्था एव ब्रह्मलोकमगमन् ।[५] गृहाश्रमिणस्तु पतनस्य कारणमिति प्रतिपादित—

---

१ वच्छनखजातके २३५, निमिजातके ४८८
२ महाउम्मग्गजातके ३३६, सेतकेतुजातके ३७७
३. मखादेवजातके ९
४ स्वारघ्नि २, ६, ७ अध्याया
५. भागवत० ९.७ ९-१४

५. प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम्।
गृहेषु खगवत् सक्तस्तमारूढच्युतं विदुः॥ ११.७.७४

गृहस्थाश्रमस्तु 'अन्ध्नायम'। अतः शिशवोऽपि विरक्ताः सन्तो मोक्षपथगामिनो भवेयुः।[1]

नगरपरिभवान् विमोक्तुमपि मनस्विनो वानप्रस्था बभूवुरिति शास्त्रविचारणं भासेन निर्दिष्टम्—

नगरपरिभवान् विमोक्तुमेते वनमधिगम्य मनस्विनो वसन्ति॥ स्वप्न० १.५

वानप्रस्थानामैतिहासिकोदाहरणानि विशेषतः प्रतिभासिकारणानि सन्ति। कश्मीराणां राजा कुवलयापीडो वानप्रस्थसमारम्भकाले सिंहासने कथयामास—

गच्छ भद्र वनायैव तपस्यायोयतां मनः।
मायया क्षणभङ्गिन्य एवंप्राया विभूतयः॥ राजत० ४.३८८

## वन्यवृत्तिः

बहुविधास्तदासन् वानप्रस्थाः। जीवनविधिरपि विविधप्रकाराणां तापसानां वैविध्यपूर्णं समासीत्। तेषु प्रमुखाः सन्ति ते वानप्रस्था ये महर्षीणामाश्रमेषु तपसे तत्त्वज्ञानाय च वसन्ति स्म। ईदृशानां तापसानां गणा बभूवुः। प्रत्येकस्य गणस्य शास्ताऽऽसीत्।[2] भोजनं तेषां वन्यस्य पत्रपुष्पफलमूलादिभ्यः प्राप्तम्। वनवृक्षेषु मध्ये तेषामाश्रमा अवस्थिताः। यत्र तत्र पर्णशाला आसन्। कतिपयतापसाः सङ्घं निर्माय ग्रामसमीपे निवसन्ति स्म, ग्रामेण भिक्षान्नमदन्।[3] मुनीनामजिनवस्त्रं परिधानीयमासीत्। कतिपयमुनयो वल्कलधारिणो बभूवुः।[4]

दक्षिणमार्गस्थितानां मुनीनां जीवनविधिवर्णनं रामायणे निदर्शितम्। तत्रासंख्या मुनय आसन्। अगस्त्यस्तु मुनिषु प्रधान आसीत्। स तत्र राक्षसानां विनाशमपि कृतवान्। वानप्रस्थास्तु तत्रागतानां महापुरुषाणां स्वागतं कृतवन्तः, तेभ्यः फलमूलादिकं च भोजनं दत्तवन्तः। केचिन्मुनयो यज्ञार्थं गा अपालयन्।[5]

रामायणानुसारं मुनीनां गणाः—वैखानस-वालखिल्य-सम्प्रक्षाल-मरीचिप-अश्मकुट्ट-शीर्णपर्णाशन पत्राहार-तापस-दन्तोलूखलि-उन्मज्जक-गात्रशय्य-अशय्य-अनवकाशिक-मुनि-

---

१ भागवते ४.२६.५२—५५, ६.५.३१, ३३।

२ अम्बट्ठजातके ११८, कमजातके ३४६, उद्दालजातके ४०६।

३ मंगलजातके १५८।

४ सेतकेतुजातके ३३३, मखदेवजातके १५१।

५. बालकाण्डे ५२ ५३ ५५ सर्गेषु।

सलिलाहार-वायुभक्ष-आकाशनिलय-स्थण्डिलशायि-ऊर्ध्ववास-दान्त-आर्द्रपटवास-सजप-तपोनिष्ठ-पञ्चतपोऽन्वितादय स्यु ।[१] नाम्नैव तेषां गुणा जीवनवृत्तयश्च प्रतीता भवन्ति। कतिपयमुनिगणाना कुलपतय आसन् । प्राय सर्वे ते ऐन्द्रियकसुखेष्वनासक्ता आसन् ।

कतिपयमुनय सकुटुम्बा आसन् । एषु वसिष्ठ सुप्रसिद्ध । व्रीहिद्रोणो मुनिर्वने शिलोञ्छकापोतवृत्त्या जीविकोपार्जनमकरोत्, पक्षे सकृद् भोजन कृतवान् । स शिलोञ्छवृत्त्या संगृहीतेनान्नेन यज्ञमतिथिसत्कार चाकरोत् ।[२] रामायणानुसारमृचीकविश्वामित्रौ सकुटुम्बौ बभूवतु ।[३]

तृतीयमायुषो भाग वानप्रस्थाश्रमे वसेत् ।
तानेवाग्नीन्परिचरेद्यजमानो दिवौकस ॥
नियतो नियताहार षष्ठभक्तोऽप्रमत्तवान् ।
तदग्निहोत्र ता गावो यज्ञाङ्गानि च सर्वश ॥
अकालकृष्ट व्रीहियव नीवार विघसानि च ।
हवींषि सम्प्रयच्छेत मखेष्वत्रापि पञ्चसु ॥
वानप्रस्थाश्रमेऽप्येताश्चतस्रो वृत्तय स्मृता ।
सद्य प्रक्षालका केचित्केचिन्मासिकसचया ॥
वार्षिक सचय केचित् केचित् द्वादशवार्षिकम् ।
कुर्वन्त्यतिथिपूजार्थं यज्ञतन्त्रार्थमेव वा ॥ शान्ति० २३६ ६-९

साधारणतो वानप्रस्था दीर्घश्मश्रुकेशा आसन् ।[४] स्त्रियोऽपि वानप्रस्था वल्कलाजिनधारिण्यो बभूवु ।[५]

महाराजा अपि महाभारतयुगे गृहस्थाश्रमस्य पश्चात् वानप्रस्था बभूवु । वानप्रस्थस्य धृतराष्ट्रस्याश्रमे होमाग्निमृगयूथमयूरकोकिलादयो विराजन्ते स्म । तत्र फलमूलराशिरासीत् । धृतराष्ट्रस्याश्रमे युधिष्ठिरो मुनिभ्य कलशाजिनप्रवेणीस्रुवस्रुचादिकमण्डलुस्थालो-

---

१. ईदृशानां तापसिनां आहारं कथं सम्भवमासीदित्यस्मिन् विषये वर्तमानयुगस्याधोलिखितं माध्यमं वर्तते—Dr Barbara Moore 56, Russian born dietician had been living on vegetable and fruit-juice for six or seven years She says eventually I hope I will leave off fruit juice and live on air alone I can do that now for two or three months at a time, if I live on the mountains.

२. वनपर्वणि २४६ अध्याय ।

३. बालकाण्डे ५१,५२ सर्ग ।

४. आश्रमवासिकपर्वणि ४६ अध्याय ।

५. आश्रमवासिकपर्वणि ३५. १५, ३३. ११, १२

लौहपात्राणि दत्तवान् । धृतराष्ट्रोऽपि युधिष्ठिरस्य स्वागतमकरोत् ।[1]

मुनीनां पर्णशाला कीदृशी बभूवेति रामलक्ष्मणस्य रामायणे वर्णिताया शालाया दर्शनेनानुमातु शक्यते—

पर्णशाला सुविपुला तत्र सघातमृत्तिकाम् ।
सुस्तम्भा मस्करैर्दीर्घैः कृतवंशा सुशोभनाम् ॥
शमीशाखाभिरास्तीर्णा दृढपाशावपाशिताम् ।
कुशकाशशरैः पर्णैः सुपरिच्छादितां तथा ॥
समीकृततला रम्या चकार लघुविक्रमः ।

अरण्य० १५ २१–२३

शनै शनै वानप्रस्थाना जीवन विधान कठोरतरमभवत् । तेषां भिक्षावृत्तिर्दानग्रहण च मनुर्न्यसेधीत् । यदि वानप्रस्था गृहस्थेभ्यो भिक्षन्ते स्म तर्हि केवलमष्टग्रासमात्र-भोजनायैवासीत् सा भिक्षा । भिक्षान्नमपि वने नीत्वैव खादनीयमासीत् । मनुना निर्दिष्टा कठोरा वानप्रस्थवृत्ति. सुग्राह्या न प्रतिभाति । तद्यथा—

अप्रयत्न सुखार्थेषु ब्रह्मचारी धराशय ।
शरणेष्वममश्चैव वृक्षमूलनिकेतन ॥ ६ २६
चान्द्रायणविधानैर्वा शुक्लकृष्णे च वर्तयेत् ।
पक्षान्तयोर्वाप्यश्नीयाद्यवागू क्वथिता सकृत् ॥ ६ २०
भूमौ विपरिवर्तेत तिष्ठेद्वा प्रपदैर्दिनम् ।
स्थानासनाभ्या विहरेत् सवनेषूपयन्नप ॥ ६ २२
ग्रीष्मे पञ्चतपास्तु स्याद्वर्षास्वभ्रावकाशिक ।
आर्द्रवासास्तु हेमन्ते क्रमशो वर्धयंस्तप ॥ ६ २३

अर्थशास्त्रानुसार राजभिर्मुनिभ्यो वनानि निर्धारितानि । तेषां वनाना सुरक्षा राज्ञा कृता ।

पुराणानुसार वानप्रस्थाश्रमे शरीर प्रत्युपेक्षाभाव समवर्धत । विधानाना कठोरत्वे सति वानप्रस्थे रुचिरपि नाभूत साधारणजनानाम । फलतो वानप्रस्थावधि स्वल्पीकृत । तद्यथा—

चरेद्वने द्वादशाब्दानष्टौ वा चतुरो मुनि ।
द्वावेक वा यथा बुद्धिर्न विपद्येत कृच्छ्रत ॥ भागवते ७ १२ २२

उपर्युक्तहेतुना नातिसरला वानप्रस्था वनपरित्यज्य गृहमाजग्मु । एतादृशा कतिपय-राजान शाल्वाधिप अम्बरीष, साकृति अन्तिदेवाश्चासन् ये जटा कर्तयित्वा पुन

१ आश्रमवासिकपर्वणि ३१–३४ अध्यायत ।

मुकुटधारिणो बभूवुः ।[1]

आधुनिकयुगे तु वानप्रस्थस्य प्रतीक ऋषिपत्तनमो वर्तते ।

बौद्धसंस्कृतौ जैनसंस्कृतौ चात्मविकासाय वनस्य महत्त्वमासीत् । बौद्धेषु तेऽरण्यसञ्ज्ञिनो बभूवुः, येषां चित्तानि वनशोभासौरभादिभिः समाकृष्यन्त । अङ्गुलिमालस्य चित्तं पर्वतानां वनानां च प्रशान्तावरमत । वनानां पुण्यरञ्जितभूमावुपविश्य मुक्तिं बन्धनविहीनत्वं च भिक्षवो ध्यायन्ति स्म । स्थविर उसभस्तु शरदो वनश्रीसौरभाभ्यामात्मविकासस्य सन्देशमलभत । गौतमबुद्धेन घोषितम्—भिक्षवो यावद्वनेषु शयनासनानामुपभोगं कुर्यन्ति तावदेव तेषां वृद्धिर्भविष्यति ।[2] गौतमस्य भ्राता स्वयमेव योगाभ्यासं कर्तुं वनमगमत् । स्वयमेव बुद्धो बहूनि दिनानि वनेषु न्यवसत् । परवर्तियुगे बौद्धभिक्षूणामावासाय विहारा वनपर्वतभूमिषु निर्मिताः ।

जैनसाधूनां निवासः श्मशाने शून्यागारे गुहायां शिल्पशालायां वाभवत् । ऐन्द्रियसुखानां सर्वथाभावस्तेषां जीवनविधौ बभूव । कष्टसहनमपि आत्मविकासाय साधनं स्वीकृतम् । परवर्तियुगे श्वेताम्बरजैनमुनीनां जीवनं वस्त्रभोजनावासादिविषये नातिविषमोऽभूत् ।

## तपस्तत्त्वज्ञानं च

तपसः सर्वप्रथमोल्लेख ऋग्वेदे वर्तते—

तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम् ।
तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाजायतैकम् ॥ १०.१२९.३

श्लोकेऽस्मिन्तप सर्जनस्य साधनमस्ति । इदमेव विकासस्य मूलकारणम् । मानवस्य विकासे तपसो महत्त्वं तादृशमेवास्ति । तपसो माहात्म्यमथर्ववेदे वर्णितम्—ब्रह्मचारी तपसोदतिष्ठत् । ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति । ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत इति ।[3] वैदिकसाहित्येऽन्यत्रापि—'तपोभिरेव देवानां देवत्वं सिद्धम् ।[4] प्रजापतिस्तु सहस्रवर्षं तपस्तप्त्वाऽऽत्मशुद्धिं विधाय मृत्युपाशाद्विमुक्तः[5] । तपसा यज्ञेन इव सिद्धिर्लब्धा ।[6] तस्य तपस्तेपानस्य एभ्यो लोमगर्तेभ्य ऊर्ध्वानि ज्योतींष्यायन् । यान्यानि तानि ज्योतींष्येतानि तानि नक्षत्राणि । तपसा वै लोकं जयन्ति ।

---

१. [illegible] ७.५१
२. महापरिनिब्बानसुत्त [illegible]
३. अथर्ववेदे ११.५ ।
४. तैत्तिरीयब्राह्मणे ३.१२.३.१ ।
५. शतपथब्राह्मणे १०.४.४.१–३ ।
६. अथर्ववेदे [illegible] ।

यदस्यैत परपरऽएव वरीयस्तपो भवति । 'परपरं श्रेयांसं लोकं जयति' इति तपसा महामहिमशालित्वं समुद्दिष्टम् ।[1]

उपनिषत्सु तपसो रहस्यात्मकं प्रभावमृषयो वर्णयन्ति—तपस्तु ब्रह्मैव[2], यत्नेऽस्मिन्नाय- शमो नामरायणारम्भायनानि दर्शितं तपसाऽङ्गम्याणि । तपस्तु ज्ञानमयमिति च ते वर्णन्ति ।

रामायणानुसारं तपस्विनां प्रभा द्योतिता । तपसा मुनयो देदीप्यमाना बभूवुः । मुनयः शाया जपहोमादिषु संलग्ना अभवन् । यज्ञवत्तपसो निर्वर्तितः । तस्मिन् समाप्ते तपस्वी ब्रह्मचर्यसमाप्ते स्नातका इव स्नाति स्म ।[3] कश्चित्तपसाऽन्यत्पारमभवन् ।

ऊर्ध्वबाहुर्निरालम्बो वायुभक्षस्तपश्चरन् ।
घर्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः ।
शिशिरे सलिले शायी रात्र्यहानि तपोधनः ॥

बा० का० ६३ २३,२४

कश्चित्तपस्विनो मौनमाचरन् । तेषां घोरतपसा जगत्क्षुब्धमभवत् ।[4]

तपसः प्रभावाद् ज्ञानस्यालौकिकशक्तिः प्रादुरभवत् । तपस्विनस्तु तपोबलेनाप्रत्यक्षमपि ज्ञातुं समर्थाः । अवस्था हृदिस्थवृत्ति तपसा ज्ञायते यदा तत्साक्षात्कारसिद्धिरभवत् । ते भाविज्ञानमपि तपस्विनः । तपसैव ब्रह्मसाक्षात्कारः सुलभः । तापसानां वाक्यानां साधनं विनापि पूर्णा बभूवुः इति मनुः ।[5]

केचित्तपस्विनः मौनिरताः आसन् ।[6] मनुष्यानभ्येत्य श्रुतीनामुपनिषदां चाध्ययनं निर्वाहयन्ति स्म ।[7] मुनीनामाश्रमेषु तपस्विनः शिक्षिता बभूवुः । कुलपतयः दीक्षित- तपस्विभ्यः प्रवचनं ददन्ति । 'आश्रमेषु अध्ययनेन मुनीनां जिज्ञासा जायते' इति व्यास- वचनम् ।[8]

महाभारते त्रिविधानि तपांसि विनिर्दिष्टानि—शारीरकाणि वाचिकानि मानसिकानि च । ब्राह्मणगुरुजनानां पूजा ब्रह्मचर्यार्जवाहिंसादीनि च शारीरं तपः । मृदुवत्, सत्य,

---

१ ऋग्वेद १०।१।– २४। ३।
२ तैत्तिरीयोपनिषद् भृगुवल्ली ३।७ ... मुण्डक १।१।९।
३ बालकाण्ड ५१ ६३ सर्ग।
४ अरण्यकाण्ड ६५ १३ ९।
५ मनुस्मृती ११ २३६ ५ ३९ रामायणे अरण्यकाण्डे १४ १५ १६,१४ ४०।
६ रामायणे अरण्यकाण्डे ६ ६।
७ मनुस्मृती ६ २९।
८ महाभारतेऽनुशासनपर्वणि १० अध्याये।

प्रियं, लाभप्रदं च वचनं स्वाध्यायो नियतकर्मणामभ्यासश्च वाचिकं तपः । मनःप्रसन्नता, सौम्यता, मौनं, शुद्धभावना च मानसिकं तपः । निष्कामभावेन कृतं तपः सात्त्विकम्, आत्मप्रतिष्ठायै दम्भाय वा कृतं राजसम्, आत्मानं पीडयित्वा परान् वा पीडयितुं तपस्तामसिकं भवति ।[1] शरीरस्य पीडनं हीनतप इति तत्त्वाग्रमेव । मनोभावस्य निर्मलत्वं तपसः प्रथमं लक्षणं कथ्यते ।[2]

तपसः सामाजिकमहत्त्वमपि सुनिश्चितमेव । तदनुसारं ब्राह्मणस्य ज्ञानार्जनम्, क्षत्रियस्य प्रजापालनम्, वैश्यस्य पशुपालनादिव्यापारः, शूद्रस्य समाजसेवा एव तपः ।[3] 'कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः' इति योगसूत्रेण तपः परिभाषितम् ।

किं तपोऽर्हमिति विवेचयता प्रोक्तम्—

यद्दुष्करं यद्दुरापं यद् दुर्गं यच्च दुस्तरम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥

गौतमस्तु कष्टदायकं तपः आवश्यकं नानुमनुते । तदनुसारं तपस्तु शीलसम्पत्ति-चित्तसम्पत्ति-प्रज्ञासम्पत्तिप्राप्तिः । बौद्धसंस्कृतौ गीतानुरूपं शारीरिकमानसिकवाचिकतपसां विधानं वर्तते । गौतमानुसारं तु सदसतोर्विवेकवान् पुरुषो मुनिः स लोकस्य परलोकस्य च मननं करोति । अनासक्ता जना मुनिः ।[4] मुनिः शरीरस्य वेदनायाश्चित्तस्य मनोवृत्तीनां च पर्यालोचनं करोति । शरीरस्याशोभनां गतिं दृष्ट्वा सोऽनासक्तो भवति । स एव कायानुपश्यी योगी स्यात् ।[5]

जैनसंस्कृतौ तपसो बाह्याभ्यन्तरे भेदौ स्तः । बाह्येन—अनशनावमौदर्यवृत्तिपरिसंख्यारसपरित्यागादयः कायक्लेशा भवन्ति । आभ्यन्तरतपसः प्रायश्चित्तं विनयो वैयावृत्त्यं स्वाध्यायो व्युत्सर्गो ध्यानं चाङ्गानि भवन्ति ।[6]

परवर्तिषु तपस्यार्थं वनस्थानस्यावश्यकता नास्तीति केचित्तपस्विनो मठादिषु वसन्ति स्म । ते मठास्तु क्वचित् राजप्रासादैस्तुल्या अभूवन् । कल्हणानुसारं काश्मीराणां राजोऽवन्तिवर्मणो मन्त्री शूरः तपस्विनां कृते स्वप्रासादसमानं मठं निर्मितवान् ।[7]

समाजसेवा

भारतीयसंस्कृतेः प्रवर्तने, विकासने, प्रसारणे च वानप्रस्थानामवदानं महत्त्वेन वर्तते । समाजाय जीवनस्योत्सर्गं ते दर्शयन्ति स्म । तेषामाचारविचारैः समाजानुवा-

---

१ गीता १७।१४-१९
२ महाभारत शान्तिपर्व ७९।८०।१००।
३ मनुस्मृति ११।२३५।
४ धम्मपदे धम्मट्ठवग्गे १३-१४, सुत्तनिपाते पारायणवग्गो अभिधम्मे च।
५ मज्झिमनिकाये सतिपट्ठानसुत्ते।
६ तत्त्वार्थसूत्रम् ९। १९-२०।
७ राज० ५। ३८।

मित्रोऽभवन्। लोकानां जीवन-वैषम्यं ते निवारयन्ति स्म। राजानोऽपि रक्षार्थं शरणं गतास्तेषां पथप्रदर्शनेन मार्गेण चानन्दितात्मानः संजाताः। एतेषां वानप्रस्थानां परम्परा वसिष्ठ-वाम जाबालिश्रीमैत्र्यादिभिः पावनीभूता। एवमेव परिलक्ष्य भामहेनालोचितम्-तपोवनानि नामानिधिजनस्य स्वगेहम्।

## संन्यासाश्रमः

संन्यासाश्रमे मानवः सर्वतन्त्रस्वतन्त्रो भूत्वा महान् विचारको भवितुमर्हति। यावत्कालं मानवः स्थान-कुटुम्ब-ग्राम-देश-कुल-धर्म-व्यवसाय-पदविशेषैः सम्बद्धो भवति तावदेव तस्य बौद्धिकविकासो विचारपरिधिश्च सीमितौ भवतः। संन्यासस्य विशालतायाः मनुष्यितर्गीयायाः परे भवितुं मानवोऽवसरं प्राप्नोति। संन्यासी स्वकीयं निःसीमत्वं पर्याप्य स्वजीवनानिरन्तरमुपयोगं कर्तुं समर्थो भवति।

## संन्यासारम्भः

वानप्रस्थे मनन चिन्तन-स्वाध्याय-तपोभिरेव ब्रह्मज्ञानं प्राप्यते। अतः परं प्रथमं आवश्यकता न विद्यते। मुनिर्ब्रह्मसदृशो भवति। स ब्रह्ममयो भूत्वा ब्रह्मवदाचरति। ईदृशो मुनिर्जनतायाः नापेक्षितः। स तु वनादतिक्रम्य संन्यासी भूत्वा गृहस्थसमाजेऽपि विचरन्नेव समाजस्याध्यात्मिकनेता बभूव। दत्तात्रेयपथमनुसरन् अवधिरसंन्यासी पृथिवी पशुपक्षिकीटादिषु गुरून् प्राप्नोत्।[१]

वानप्रस्थस्यानिवार्यत्वं नासीत् वैदिकयुगे। तदा ब्रह्मचर्याश्रमाद् गृहस्थाश्रमाद्वा पुरुषाः संन्यासाश्रमं प्रविविशुः। यदा विरजेत् तदा प्रव्रजेदिति विधानमासीत्।

## संन्यासिनो जीवन-विधिः

संन्यासी गृहमग्नि सुखं सुरक्षां च परित्यज्य मौनमवलम्ब्य विचरति स्म। भोजनार्थमेव ग्रामे आगत्य भिक्षते स्म। नासीत् तस्य लोकपरलोकस्य काचिच्चिन्ता। स तु नित्यमेव पर्यटन्। स जीर्णशीर्णानि वस्त्राण्यात्मार्थं कुतोऽपि प्राप्नोत् दिगम्बरो वाऽभवत्। स निष्परिग्रहत्वमधरत् आसीत्।[२]

गौतमानुसारं तु संन्यासी वर्षाकाले पर्यटनाद्विरतो बभूव। केवलं भिक्षार्थमेव ग्रामं प्रविशेत्। भिक्षार्थमपि स विलम्बेन निरगच्छत् केवलं शरीरस्य निर्वाहाय स परिधानं धारयति स्म। सर्वान् प्राणिनः प्रति तस्यापेक्षाभाव आसीत्। स किमपि कार्यं नाकरोत्।[३]

---

१ भागवत ११. ७. ३२; ११. ९. २२।
२ आरुणेयोपनिषद् २. ९।
३ गौतम ३. ११-२३।

मन्वनुसारं तु सन्यासी नित्यमेवैकाकी विचरेत्।[१] सकृदेव दिने भिक्षेत। भिक्षा लभेत, न वा, तस्य हर्षविषादौ न भवेताम्। भिक्षा तस्य प्राणधारिका भवेत्। स्वल्पभोजनमेकान्तवासश्च तस्येन्द्रियकविषयेभ्यः पराङ्मुखत्वमद्योतयताम्।

मनुर्वर्णितः सन्यासिनः विलक्षणमेव। तद्यथा—

> कपालं वृक्षमूलानि कुचेलमसहायता।
> समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम्॥ ६.४४

इह लोके मुक्तः परलोकेऽपि मुक्तो भवेदिति सम्भाव्यते। 'प्रसिद्धं चैतदस्ति लोके यज्जन्तुर्यस्मिन् विषये ममासक्तः स्वकलेवरं जहाति, अन्यस्मिन्नपि जन्मनि तत्रैवासक्तो भवतीति'।[२]

सन्यासिना केशनखश्मश्रूणि न वर्द्धितानि। स तेषां कर्तनं कारितवान्। तस्य सामग्री—भिक्षापात्रं दण्डः कमण्डलुश्चासीत्। तस्य पात्रं छिद्ररहितमभवत्। अल्पमात्रेण मृद्भर्ण्डालाबुफलेन काष्ठेन वा निर्मितानि पात्राणि स स्वीकृतवान्। अपरं च संन्यासी—

> दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत्।
> सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत्॥

सन्यासिनो मानसिकवृत्तयः क्षमापूर्णा अभवन्। तेन मैत्रीभावना सर्वार्पिता। सहिष्णुता तस्य परमो गुणः। स कस्याप्यनादरं नाकरोत्। कस्यापि प्राणिनस्तस्माद् भयं नाभवत्। यदि कश्चित् पुरुषः तस्मै क्रुद्धवान् स तं प्रति भद्रवाणीं प्रयुक्तवान्। सांसारिकविषयेषु वार्तामपि स नाकरोत्। अध्यात्मचिन्तकः सोऽन्यवस्तुविषयेभ्यः सर्वथा निरपेक्षोऽभवत्। मन्वनुसारं देहमपि हातुं सोऽशोचत—

> अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्।
> चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः॥
> जराशोकसमाविष्टं रोगायतनमातुरम्।
> रजस्वलमनित्यं च भूतावासमिमं त्यजेत्॥
> नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा।
> तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद्विमुच्यते॥ ६.७६.७८

सन्यासिनो योगपथः मनुनिर्देशितः। स योगमार्गेण परमात्मनः सूक्ष्मतत्त्वानुशीलनं करोति। अज्ञानेन कृतां हिंसां परिमार्जितुमेव स नित्यमेव स्नानस्य पश्चात् षट् प्राणायामान् करोति, ध्यानयोगेन ब्रह्म प्राप्नोति च।

महाभारतानुसारं सन्यासिना जीवनविधिर्मोक्षधर्म एव। संन्यासिनः आश्रयस्तु वृक्ष,

---

१. तदनुरूपं भागवते प्रोक्तम्—

> वासे बहूनां कलहो भवेद् वार्ता द्वयोरपि।
> एक एव चरेत्तस्मात् कुमार्या इव कङ्कणः॥ ११.९.१०

२ निरुक्तेहेदा पृ॰ सं॰ २७, १९०७ संवत्सरस्य।

नदीतट, शून्यगृह वा भवेत्। स कुत्रापि नित्य न वसति, सन्यासी शरीरस्य परिमार्जनाय सचेष्टो न भवति, सर्वेषा प्राणिना हिते रमते च। तस्य समानन्ता।[1]

महाभारतानुसार कतिपय संन्यासिनो तत्त्वज्ञा सन्तोऽपि बालका इव निर्व्याजा बभूवु। नित्यपरितृप्तात्मने प्रहृने क्रोडामात्रमेव जगदिदि तस्य वैराग्येण न प्रभाविता। ससारस्य वैषम्यमेव हि तेषा मनेन स्वाभाविकम्। ते ससारमधिकृत्य नान्वशोचन्। चिन्ताभिर्विहोना एव सुप्रम नाम्ले सर्वत्र सर्वथा च प्रशस्याप्रशस्यैर्भोजनवस्त्रादिभि सन्तुष्टा बभूवु। अनियताशीन तेषा जीवनवृत्ति।[2] सयमाजगरवृत्तिस्तेषाम्।

पद्मपुराणे संन्यासिनस्त्रिविधा मता —ज्ञानसंन्यासिन वेदसंन्यासिन कर्मसंन्यासिनश्च। ज्ञानसन्यासिनस्तु सर्वथा मुक्ता निर्द्वन्द्वा निर्भयाश्चात्मन्येव स्थिता। वेदसंन्यासिन कालपरिग्रहाद्य विहाय नियमश वेदाभ्यास रमन्ते स्म। ते मोक्षेच्छवो विजितेन्द्रियाश्च सन्त कर्मसन्यासिनस्तु स्वयमेव ब्रह्मणि लीना महायज्ञपरायणा बभूवु। तेषु त्रयेषु ज्ञानसन्यासिन श्रेष्ठा आसन्। तेषा ज्ञानमेव भोजन परिधान चाभवत्। ते जीवनमरणमधिकृत्यापि नाचिन्तयन्। अध्ययनश्रवणप्रवचनादिषु नासीत् तेषा प्रवृत्ति। पद्मपुराणानुसार सन्यासी कस्यचिदन्यस्य पुरुषस्यान्नेन नावलम्बित। वर्षर्तुं विहाय स कुत्रापि नित्यवास नाकरोत्। स्नानशौचादिभिरात्मान स पुनाति स्म। सदैव स ब्रह्मदर्शने लीनोऽभवत्।[3]

केषाञ्चित सन्यासिना जीवनविभेदैर्वैचित्र्येण कुतूहलमापन्ना अधमा तेषा दुर्गतिमकुर्वन्। सन्यासिना न कदापादुर्व्यवहारैरक्षुभ्यन।

संन्यासा बाह्यलक्षणैर्विमुक्ता भवन्तीति भागवते प्रतिपादितम्। तद्यथा—

अव्यक्तलिङ्गो व्यक्तार्थो मनीष्युन्मत्तबालवत्।
कविर्मूकवदात्मान स दृष्ट्या दर्शयेन्नृणाम्॥ ७ १३ १०

भागवतानुसार संन्यासिन सम्यक्प्रकारेणाध्यात्मिकज्ञानसम्पन्ना भवन्तु। यदि ज्ञानप्रपन्नत्व न भवत्तर्हि स गुरोर्ब्रह्मज्ञान शिक्षेत। ज्ञान विना सन्यासिवेषो वञ्चनमेव। तद्यथा—

यस्त्वसयतषड्वर्ग प्रचण्डेन्द्रियसारथि।
ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति॥
सुरानात्मानमात्मस्थ निह्नुते मा च धर्महा।
अविपक्वकषायोऽस्मादमुष्माच्च विहीयते॥ ११ १८ ४०-४१

भागवते सन्यासिभ्यो योगस्य माहात्म्य सविशेषमेव। योगाधिकारी तु भागवतानुसार तदा भवति—

---

१ वारयेक तप्यतो बाहु चन्दनेनैकमुक्षत।
नाकल्याण न कल्याण चिन्तयन्नुभयोस्तया॥ आदिपर्वणि ११०. १८।

२ भागवते ५ ५ ३२–३३, ११ ७ २८–३०। शान्तिपर्वणि १७२ १०–३६

३ स्वर्गखण्डे ८९ अध्याय।

यदारम्भेषु निर्विण्णो विरक्तः संयतेन्द्रियः ।
अभ्यासेनात्मनो योगी धारयेदचलं मनः ॥ ११. २०. १८

भागवते त्रिविधः संन्यासो निदर्शितः—ज्ञानयोगात्मकः, कर्मयोगात्मकः, भक्तियोगात्मकश्च । कर्मसु तेषां फलेषु च विरक्ता भवन्ति ज्ञानयोगिनः । कर्म प्रति येषामासक्तिस्ते कर्मयोगिनः सन्ति । येषां मनः स्थिविज्ञानिकर्मणोर्मध्ये विपरिवर्तते, ये तु भगवतः पदारविन्देषु श्रद्धापरास्ते भक्तियोगिनो भवन्ति ।

भारतवर्षस्य सर्वोच्चसोपानमिव योगो भारते प्राच्यतमः प्रतिभाति । आर्येतराणां सिन्धुसभ्यतायां योगप्रणाली प्रचलितासीदिति तत्र प्राप्तया योगिनो मूर्त्या प्रमाणितमेव । योगस्य प्रथमः मन्त्रः सुस्पष्टमथर्ववेदे वर्तते । तद्यथा—

मूर्धानमस्य संसीव्याथर्वा हृदयं च यत् ।
मस्तिष्कादूर्ध्वं प्रैरयत् पवमानोऽधि शीर्षतः ॥ १०. २. २६.

प्राणायामस्यैव प्रक्रिया समाधिप्रवणा वर्तते ।

इन्द्रियाणां स्थिरधारणा तु योगः । इन्द्रियाणि वशीकृत्य योगिनोऽप्रमत्ता भवन्तीति कठोपनिषदि निदर्शितम् ।[1] चित्तवृत्तयोऽवस्थासु दशासु विपरिवर्तमाना न तावन्मात्रं फलदायिन्यो यावत्तु केवलमेकस्यां दिशि नियुज्यमानाः सत्यो भवन्ति ।[2] चित्तं तु ध्यानावस्थितं महत्स्थापनम् । यावन्मात्रं चित्तं शुद्धं सात्त्विककर्मैकपरायणं च भवति तावन्मात्रं तस्योपयोगिता वर्धते । यदा योगेनाभीष्टं प्राप्यते तदा चित्तस्य काप्यावश्यकता न वर्तते । चित्तं निष्प्रयोजनं भवति । अयमेव चित्तवृत्तिनिरोधो योगः ।

योगस्याष्टाङ्गानि—यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयः सन्ति । यमेनाहिंसा-सत्यास्तेय-ब्रह्मचर्यापरिग्रहाणां सिद्धिर्भवति । नियमस्तु शौच-सन्तोष-तपः-स्वाध्यायेश्वरप्रणिधानानि । आसनं तु साधकस्य स्थिरसुखस्थितिः । सा सुखप्रदा भवति । श्वासप्रगतिरोधः प्राणायामः । प्राणायामेन धारणाशक्तिरुत्पद्यते । धारणया चित्तस्य स्थिरता भवति । प्रत्याहारेणेन्द्रियाणि विषयेभ्यो विनिवर्तन्ते । तानि तदा चित्तस्वरूपमनुसरन्ति ।

धारणाध्यानसमाधय संयम एव । धारणया चित्तमेकस्मिन् स्थाने—नाभिचक्रे, हृदयकमले, मूर्ध्नि, नासिकाग्रभागे, सूर्ये, चन्द्रे वा बध्यते । तस्मिन्नेव प्रदेशे चित्तस्य स्थिरीकरणं ध्यानम् । ध्यानस्य या सर्वोच्चावस्था समाधिर्यस्यां जातायां साधकाय ध्येयं [illegible] वर्तते । समाधौ यदा चित्तवृत्तिनिरोधो भवति तदा ध्येयेन सह तादात्म्यं जायते । तादात्म्यमेव योगः ।

योगमार्गे बाधा अपि वर्तन्ते, सम्मानं, नारी प्रत्यासत्तिर्वा ।

[1] [illegible]
[2] [illegible] —[illegible] । समाधि [illegible]

योगेन स्त्रियः शूद्रो वा परमां गतिं लभन्ते।[1]

योगस्य प्रतिष्ठा बौद्धजैनसस्कृत्योरपि वर्तते। गौतमस्याष्टाङ्गिके मार्गे धारणाध्यानसमाधीनामन्तर्भावो दृश्यते। यमनियमादीनां सिद्धिं गौतमस्य दशशिक्षापदेषु चतुर्षु स्मृत्युपस्थानेषु च भवति। समाधयेऽरण्यवृक्षमूलपर्वतगुहाश्मशानवनदेशादय समीचीना मता। जैनमते महावीरस्वामिना स्वयमेव चित्तस्य समाधानं समाधिपथेन कृतम्।

यावत्कालं नरस्य स्वसुखाय शरीराद् बहिर्वर्तमानान् पदार्थानपेक्षते तावदेव स निराशो भविष्यति। शरीरस्याङ्गानि जराजीर्णानि जायन्ते। न तैरपि शाश्वतसुखं लभ्यम्। यथा प्रथमदशायां बाह्यवस्तूनि परित्यज्य शरीरमेवानन्दसाधनं कर्तव्यं तथैवोत्तरकाले शरीरमपि सन्न्यस्यात्मैवानन्दसाधनत्वेन ग्रहणीयः। शरीरमेवानन्दसाधनं कुर्वाणः मरणोत्तरकाले शरीरवान् भवति। योगेन यदात्मैवानन्दसाधनं क्रियते तदा मरणोत्तरकाले मुक्तिर्लभ्यते, शरीरं न प्राप्यते। आत्मन आत्मन्येवानन्दग्रहणं सर्वोच्चानुभूतिः। एवं कुर्वाणः पुरुषो ब्रह्मसस्थ उच्यते। स तु आत्मक्रीड, आत्मरतिर्वा भवति। यथा लोकपरेभ्यः शरीरं ससारस्यानन्दनिष्यन्दस्तथैव योगिनः आत्मा ब्रह्म चानन्दनिष्यन्दः। इन्द्रियाणां चरणं हि व्याकुलताकारणम्।

यदा कश्चित् पुरुषः शेते, स इन्द्रियाणामकरणात् सकलपरिग्रहभारेभ्यो मुक्त एव सानन्दो भवति। तथैव समाधौ पुरुषोऽधिकतरमानन्दं लभते तत्रेन्द्रियाणां परमार्थतो विषयेभ्यो निरमणादिति मे मतिः। समाधिस्थस्तु परिग्रहेभ्यः सम्यक् मुक्त एवात्मसुखं लभते।

## कर्मयोगः

सन्न्यासिनाम् कर्माणि परित्यज्य योगेनाध्यात्मिकमानन्दं प्राप्तुं प्रयतेरन्। इयमेव सन्न्यासस्य सर्वोच्चावाप्तिः। अस्यां स्थितौ सन्न्यासिनां सामाजिकजीवनस्य कर्मक्षेत्रे न भवेत् कोऽपि सम्बन्धः। कर्म कस्मात् कारणात् त्याज्यम्? कर्मणः फलानि भोक्तुं ससारे जन्मग्रहणमवश्यम्भावीति कर्मणो बन्धनस्वभावो विज्ञातः, अतएव कर्माणि परिहर्तव्यानि। कर्मणोऽभावे मुक्तिर्भवति सुनिश्चितम्। कर्मणः परित्यागेन मुक्तिलाभस्य योजना जैनबौद्धैरपि स्वीकृता।

तत्पूर्वं कर्मसंन्यासस्यायोजनेन सह कर्मयोगस्य सिद्धान्तोऽपि पुरातन एव। कर्मफलाशां परित्यज्य यत् कर्म क्रियते न तद् बन्धनं भवति, मोक्षस्य साधनमेव तद् भवति। जनककृष्णवसिष्ठव्यासादयः कर्मयोगिनः सन्ति। स्वयं सन्न्यासी भूत्वाऽपि शङ्करो यावज्जीवनमनवरतश्रमेण भारतस्याभ्युदयाय यतते स्म।

---

१. महाभारत शान्तिपर्वणि २४० ३४।

कर्मयोगस्य सिद्धान्तः प्रथममेव गीतायां सुविविक्तं वर्तते । गीतानुसारं तु—

सन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ ५.२

यथा संन्यासिने जीवनपर्यन्तं कर्मव्यापारस्यावश्यकता न वर्तते, तथैव कर्मयोगिनेऽपि जीवनपर्यन्तं कर्मणो विरमणं नापेक्षितम् ।

## कर्मयोगाधिकारिणः

साधारणपुरुषाः कर्मयोगाधिकारिणो न सन्ति । त एव कर्मयोगिनो भवितुं समर्था ये योगयुक्ताः विशुद्धात्मानो विजितात्मानो जितेन्द्रियाः सर्वभूतात्मभूतात्मानश्च सन्ति । ईदृशानां पुरुषाणां कर्माचरणमपि नैष्कर्म्यमेव । न ते किंचिदपि कुर्वन्ति । यथा गीतायां प्रतिपादितम्—

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित् करोति सः ॥ ४.२०
नैव किंचित् करोमीति युक्तो मन्येत तत्त्ववित् ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ५.९
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां सन्यासेनाधिगच्छति ॥ १८.४९

कर्मयोगिनो बुद्धिर्गीतायां विविक्ता—

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ १३.२९
मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ १८.२६

भगवद्भक्तोऽपि भवति कर्मयोगी । तद्यथा—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ १८.५६

## कर्मयोगिनः कर्तव्यानि

कर्मयोगी तानि सर्वाणि कर्माणि न करोति यानि कश्चित् साधारणपुरुषोऽपि करोति । निस्सन्देहं तस्य शास्त्रकर्माणि—यज्ञदानतपांसि भवन्ति । एभिस्तस्य चित्तशुद्धिर्भवति । स्वधर्मानुरूपं तस्य कार्याणि भवन्ति । कर्मयोगिने कर्म भगवद्दर्शनस्य सामग्री भवति । स एव महादेवोऽर्चनीयो यस्मात् सर्वेषां प्राणिनां प्रवृत्तिर्जायते, येन सर्वमिदं ततम् । इदमेव कर्मणो धार्मिकस्वरूपम् । इदमेव मानवस्य सफलतायाः वास्तविकं रहस्यम् ।

गीतानुसारं मानवलोकोऽत्र कर्मभूमिः । अत्र कर्मणः पूर्णरूपेण त्यागः असम्भवः । कर्मसंन्यासिनोऽपि कर्मणः सर्वथा न मुक्ताः । कर्मसंन्यासिकर्मयोगिनोरन्तरमियन्मात्रमेव

भवति यत् सन्यासी स्वल्पतम कर्म करोति, कर्मयोगी चाधिकाधिक कर्म कुर्वन् लोक-कल्याणं विदधाति । कृष्णस्तु स्वकीया कर्मयोगप्रवृत्ति निदर्शयन्नाह—

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ॥ ३ २४

लोकसग्रहणाय कर्मप्रवृत्तिरतिशयमपेक्षिता । लोकस्य रक्षणाय कर्मयोगी तादृशमेव प्रवर्तते यथेश्वरो लोकरक्षणाय कार्यपर । ईश्वरादर्शानुरूप हि समाजे सुव्यवस्थास्थापन शान्तिविधान चरित्रनिर्माण च कर्मयोगिना कर्तव्यानि । कर्मयोगी समाजस्यादर्शनेता भवति । आत्मज्ञानेन यो जीवनपथ कर्मयोगिना प्रकाश्यते तस्यानुसरण समाज करोति ।

गीताया कर्मयोग सन्यासयोगो भक्तियोगश्च प्रतिष्ठिता । एषु कर्मयोग श्रेष्ठ । भक्तियोगेन सन्यासयोगेन च व्यक्तित्वस्य विकास कृत्वापि निष्कामभावेन कर्मकरणमेवा-दर्शपथ । भारतीयसस्कृतौ पदे पदे देवाना चरित्रमादर्शरूपेण प्रतिष्ठितम् । देवानामादर्शा-नुकूलो वर्तते कर्मयोग । देवा सदैव कर्माभिरता स्वकीय मानवीय च कल्याण कृतवन्त ।

कृष्णेन कर्मयोगस्य वैशिष्ट्य परिलक्ष्य गीताया प्रतिपादितम्—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिक ।

कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ६ ४६

# सामाजिकसंस्थानम्

भारते पुरा आर्या आर्येतराश्चासन् । आर्या एव ब्रह्माणः । तेषां प्राथमिकी संस्कृतिर्ब्राह्मी आसीत् । तेषामावासभूमिरार्यावर्तो ब्रह्मावर्तो वासीत् ।[1] कालान्तरे ब्रह्मणां समाजो यथाकर्म यथागुणं वा त्रिधा विभक्तः । तद्यथा ब्रह्माणः, देवा मानवाश्च । एतेषां सांस्कृतिकं वैशिष्ट्यं सुस्पष्टं बभूव । ब्रह्माणस्तु देवानां मानवानां चादर्शभूताः ।

## आर्याणामादिमं संघटनम्

### ब्रह्माण

ब्रह्माणस्तु मूलब्रह्मसंस्कृतेरनुयायिनो बभूवुः । केवलं विद्यया तपसा च तेषामुत्कर्षः समभवत् । लःश्वराड्भूता श्रेयस्कामास्च ते ब्रह्माणो यावज्जीवमविवाहिता एव तपोमयजीवनं यापयन्तो भिक्षावृत्त्या यापयन्ति स्म ब्रह्मविद्याया अध्ययनाध्यापनं च कुर्वन्ति स्म । परवर्तियुगेऽपि तेषां समकक्षा नैष्ठिकब्रह्मचारिणो बभूवुः । आतीवासकास्ते गार्हस्थ्यधर्ममुपासते स्म । तेभ्यो ब्रह्मभ्योऽद्यावधि ब्रह्मचर्यसंस्था प्रतनुते । ईदृशां गार्हस्थ्योपेक्षकाणां ब्रह्मणां वाचिकपरम्परा तु दुष्करा बभूव । अतएव देवासुरमानवेषु ये केचित् ब्रह्मचर्यमाजीवनं धारयन्ति स्म ते ब्रह्माणो बभूवुः । एतेषां ब्रह्मणां नेता ब्रह्माऽऽसीत् ।[2] तस्य प्रजा तु ब्रह्माणः (परवर्तियुगस्य ब्राह्मणाः) बभूवुः ।

### देवा

प्रायशो देवा (न सर्वे) ब्रह्मवंशीया आसन्, किन्तु ते प्रधानतः प्रेयस्कामा बभूवुः । तेषां तपो वा ब्रह्मचर्यं वा शिथिलमभवत् । ते प्रायो दण्डविद्या-विशारदाः लौकैश्वर्य-समृद्धा नातिविरक्ताश्चासन् । भारा विचैव तेषामभीप्सिताधिका बभूव । एक एवाभावो देवानामपि बभूव । तेषां गार्हस्थ्यधर्मो व्यवस्थितो नासीत् । फलतस्तेषां दाम्पत्यजीवनं कौटुम्बिक-व्यवस्था वा दृढा नासीत् । आवश्यकतानुसारमप्सरस इति ख्याताभी रमणीभिर्देवाना गार्हस्थ्यमभवत् प्रायशो भोगकामाय न तु सन्तानाय । अप्सराः स्त्रियो यस्या

---

1. ब्रह्मर्षिपुत्रो ब्रह्मा एव वर्ण्यते । तथा ब्रह्मसंस्कृतेः वर्णनम् । शतपथ० ११.१.६ तैत्तिरीयब्राह्मणे ३.१० ऋग्वेदे सप्तर्षिपुत्रोऽहे—ब्रह्मा देवानां पदवी कवीनामृषिर्विप्राणां महिषो मृगाणाम् ९. ९६ ६ ।
2. सुत्तनिपाते ब्राह्मणानां परम्परायां ब्रह्मा वर्णितः । तद्यथा

    यो नेसं परमो आसि ब्रह्मा दळ्हपरक्कमो ।
    स चापि मेथुनं धम्मं सुपिनन्तेपि नागमा ॥ ब्राह्मण—धम्मिकसुत्ते १० ।

सख्या नाधिक वर्धते स्म । देवाना यथाकर्म वर्णविभाजनमभवत—क्षत्राणि, वैश्या, शूद्रा इति । एतेषा राजा इन्द्रो बभूव । तस्य प्रथम युद्ध स्वकीयैर्दायादैरसुरै स. बभूव । असुरा अपि मूलत देववशीया आसन्। देवास्तु मानवानामृषीणा च सहाया आसन् । इन्द्रो युद्धे भरताना सहायतामकरोत् । अश्विनो वन्दन ऋज्राश्व गोतम च्यवना दीनामृषीणा भुज्यु- विमदादिमानवाना च सहायता चक्रतु ।

कतिपय देवा ऋषयो बभूवु, ऋषयो मानवा वा देवा अभूवुरिति वैदिकग्रन्थेषु सन्दर्भ । देवाना प्रजा तु दैवो विश इति सज्ञिता ।

मानवा

मानवाना सस्कृतिर्ब्रह्मवंशोद्भवेन मनुना प्रवर्तिता । मनुस्तु मानवाना राजा बभूव । मनो प्रजासु ऋषय प्रामुख्य भजन्ते ।[1] मानव-सस्कृतौ गार्हस्थ्य धर्मस्य महामहिमा वर्तते । गृहमेधिन एव भवन्ति मानवा । गार्हस्थ्य विधानात मानवाना कौटुम्बिक सामाजिक च जीवन सुव्यवहितमासीत् । अस्मात् कारणात मानवाना सख्या क्षिप्रतर ववृधे । अपर च जीवनविन्यासे सौख्यविधानेन तेषा सौष्ठव स्पृहणीयमासीत । शनै शनैर्ब्रह्माणो देवा- श्चापि गार्हस्थ्यपरायणी मानवीयसस्कृति स्वीकृतवन्त । मानवेषु सन्निविष्टा सन्तो ब्रह्माणस्तु ऋषिभि सह ब्राह्मणा बभूवु । देवा पुन यथाकर्म राजन्या वैश्या शूद्राश्च सजाता । मानवसस्कृतेरिय समन्वयात्मिका वृत्तिर्भारतस्यैकीकरणाय सातिशय महत्त्व भजते ।

न केवलमार्या अपितु बहव आर्येतरा अपि मानवी सस्कृति स्वीकृत्य यथाकर्म यथा- रुचि वा ब्राह्मणा क्षत्रिया वैश्या शूद्राश्च बभूवु ।[2] परवर्तियुगे विदेशेभ्य समागता जनसमुदाया सादर मनोर्योजनानुसार चातुर्वर्ण्यव्यवस्थया सुनिबद्धा बभूवु । भारते देशे पुरा ये केचित दासा गन्धर्वा राक्षसा यक्षा किन्नरा पिशाचा वा आसन्, सर्वे ते काला- न्तरेण चातुर्वर्ण्ये स्थापिता सन्तो मानवा बभूवु । विविधसास्कृतिकवर्गाणा सघर्षस्यो- न्मूलन मनोर्वर्णव्यवस्थया समन्वयविधिना चाभूत् ।

मनुस्तु ब्रह्मवशीय आसीत् । स यज्ञविद्याया परमाचार्यो बभूव । सर्वप्रथम स यज्ञ- विद्या देवान् शिक्षयामास । मनो पुत्रा ऋषयो यज्ञविद्याया निष्णाता सन्त देवानाम- सुराणा मानवाना च पुरोहिता गुरवश्च बभूवु ।

मानवसमाज प्राय सामञ्जस्यगतिका असख्यजना वसन्ति । बृहत्तमसमाजस्य कल्पना भारतीयै ऋषिभिरुदारभावेन कृता । सा 'वसुधैव कुटुम्बकम्' इति वाक्येन प्रसिद्धा । 'सर्वेषा जनाना कल्याण विधातुमेवास्माकं प्रवृत्तयो भवन्तु इति भारतीयमनीषिणा

---

[1] मनुरतु ऋषीणा पिता एव । तथा ऋग्वेदे—यानि मनुरवृणीता पिता न । २ ३३ १३
अ यत्र ऋग्वेदे १ ८० १६, १ ११४ २, ८ ५२ १ अथर्ववेदे च १४ २ ४१ तै० स० २.१ ५ ६।

[2] बृहदारण्यकोपनिषदि १ ४.१२ १३।

विचारणा अनेन वाक्येन विस्पष्टा भवति । अस्या विचारणाया व्यावहारिकस्वरूपं वैदेशिकानां भारतीयसमाजे प्रशान्तविधिना संस्थापनं निदर्शयति । व्यावहारिकदृष्ट्या साधारणजनानां प्रवृत्तय सीमितक्षेत्रे एव प्रभावपरा दृश्यन्ते । तेन क्षेत्रेण तेषां सीमितसमाजस्योपकल्पनं भवति । तथा हि—जना प्रथमं स्वकीयस्य वर्णस्य जातेर्वा परिधौ परस्परकल्याणं विहितवन्त । बहूनां जातीनां वर्णानां वा पारस्परिकव्यवहारः सम्बन्धो वा समाजस्य सर्वजनीनाभ्युदयाय भवेदिति सर्वेषां समीहा । तत्र परं कौटुम्बिकसदस्यानां पारस्परिकसम्बन्धो महत्त्वपूर्णो वर्तते । ग्रामेषु नगरेषु च प्रतिवेशिनां परस्परं सौहार्दसम्बन्धः तत्र सर्वेषां शान्त्यै समुन्नत्यै च भवतीति सुविदितमेव ।

पुरा भारतीयसमाजे समष्टिरूपेण वा जना पारस्परिकाभ्युदयाय कियन्मात्रमुत्सुका महानुभूतिपरा वा अभूवन्नित्यस्मिन् प्रकरणे परीक्षणीयम् ।

## वर्णव्यवस्था

वर्णव्यवस्था विविधरूपा सती प्रायशः सर्वेषु देशेषु कालेषु च प्रचरन्तीव प्रतिभाति । प्रथमं तावत् नृतत्त्वविज्ञानानुसारं पुरा विश्वस्य विविधभागेषु विविधवर्णीया मानवा अभूवन्, यथा पारस्परिकमन्तरं नेत्रगोचरमेवासीत् । यथाधुनापि 'अफ्रीकावासी' कृष्ण नीग्रो आङ्गलदेशवासिश्वेतपुरुषाद्भिन्न एव दृश्यते । अपरं च गुणयोग्यताविभाजनानुसारमन्तरं स्पष्टम् । तदधुनाऽपि 'आचार्योऽधिकारी' वाणिज्ये सविशेषो मन्यते । व्यवसायानुरूपं वैभिन्न्यं संस्कृतौ ईश्वरीकसिद्धाया प्रारभ्यते वर्धते च संस्कृते प्रगतिमनुसृत्य नियतमेव ।

वर्णव्यवस्था ननु मानवानां विविधवर्णेषु पृथक्करणानुसारं विभाजनमेव । अस्मिन् प्रकरणे वर्णशब्दस्यार्थं कालान्तरे मूलार्थाद्भिन्न सञ्जातः । मूलतो वर्णस्यार्थो रङ्ग एव । विभाजनस्यैव प्रक्रिया वर्णव्यवस्थेति प्रथितम् । कालान्तरे व्यवसायानुरूपं गुणयोग्यतानुरूपं च यद्विभाजनप्रक्रियं तदपि वर्णव्यवस्थेति व्यक्तम् ।[1]

## वर्णारम्भः

कस्मिंश्चिद्देशे प्रारम्भिकयुगे सर्वेऽपि मानवा एकवर्णा ( रङ्ग ) भवन्तीति निःसन्दिग्धमेव । आदियुगे सर्वेषां जनानां रूपाकारयोश्चतादृश्यत्व प्रायशः समाना दृश्यन्ते । कालान्तरे यदि जनसमूहः कश्चिदन्यवर्ण-( रङ्ग ) विशिष्टस्तस्मिन्देशे आगच्छति तर्हि वर्णं ( रङ्ग ) परिलक्ष्य तयोर्द्वयोः प्राचीननवीनयोरन्तरं निर्धारितं भवति । अपरं च यदि कस्मिंश्चिद्देशे एकवर्णा जना सन्ति तर्हि तत्रापि कालान्तरे विविधा वर्णाः 'कर्मक्रियाविशेषेण' सञ्जायन्ते । तथा महाभारते निगदितम्—

---

१ [illegible] सम्प्रदानार्थं [illegible] गुणविशेषैः प्रथिता ।

एकवर्णमिदं पूर्वं विश्वमासीद्युधिष्ठिर।
कर्मक्रियाविशेषेण चातुर्वर्ण्यं प्रतिष्ठितम् ॥

गौरवर्णानामार्याणां बहुवर्गेषु विभाजनं प्राचीनकालतोऽभवत्। तेषां विभाजनं कर्मक्रियाविशेषेण व्यवसायविशेषेणासीत्। ब्राह्मणो देवा ऋषयो मानवाश्च सर्वे आर्या बभूवुः। भारतवर्षे गौरवर्णानामार्याणां कृष्णवर्णानामार्येतराणां च परस्परं सम्मेलनमभवत्। तस्मात् कालादारभ्य वर्णस्य ( रङ्गस्य ) अनुसारं वर्णव्यवस्था समारभ्यत। आर्य आर्येतरश्च द्वौ वर्णौ गौरकृष्णौ बभूवतुः।

परवर्तियुगे द्वयोर्वर्णयोः—आर्यानार्ययोः परस्परं सम्मिश्रणमभवत्। तस्यां दशायां तयोः पारस्परिककर्मक्रियावैशिष्ट्यं वर्णं ( रङ्ग )-वैशिष्ट्यं च विलुप्तमेव। आर्येतराः कतिपयजनवर्गा अनार्याणां संस्कृतिं यथारुचि स्वीकृतवन्तः। आर्याणामार्येतराणां च परस्परं वैवाहिकसम्बन्धा अपि बभूवुः। अनेन प्रकारेण रङ्गानुसारिणी वर्णव्यवस्थोन्मूलिताभवत्। इत्थमार्यवर्गस्य विविधसंस्कृतिसमूहानां—देवर्षिमानवादीनाम्, आर्येतरवर्गस्य च—राक्षसगन्धर्वपिशाचयक्षादीनां—संस्कृतिसमूहानां पारस्परिकवैभिन्न्यं विलुप्तम्। ते सर्वे मानवा बभूवुः। अतः परं वर्णशब्दो रङ्गद्योतको नाभवत्।

सम्मिलितेषु सम्मिश्रितेषु च सर्वेषु गुणकर्मविभागशः पुनरपि वर्णव्यवस्था दृढीभूता[1]। स्वाभाविकः शाश्वतिकश्चायं विभागविधिः।

आर्यवर्गो महासागरवद् बभूव। आर्येतरा नदरूपा नामरूपे विहाय तस्मिन्निमग्ना बभूवुः। कतिपयार्येतरवर्गा आर्यवर्गैरसंस्पृष्टा एव दासा म्लेच्छा निषादा वा बभूवुः। आर्याणामार्येतरेभ्यो दानग्रहणं वैदिककालेऽपि बभूव।[2] दानग्रहणसम्बन्धेन पारस्परिकसहयोगो लक्ष्यते। बहव आर्येतरा ऋषयो भूत्वा वेदसूक्तानि रचितवन्तः। नागवर्गीयोऽर्बुद आर्येतरोऽपि सन् मन्त्ररचयिता बभूव।[3] शतपथब्राह्मणानुसारं गन्धर्वा वेदपाठमकुर्वन्।[4]

अर्बुदस्तु यज्ञविधानस्य पण्डितप्रकाण्डमभवत्। स देवेभ्यो यज्ञसम्पादनविधिमशिक्षयत्।[5] एभिरुदाहरणैः स्पष्टं प्रतिभाति यत् कतिपयानार्या वैदिकयुगेऽप्यार्यभाषाया धार्मिकविधिषु च परं प्रावीण्यमवापुः। धार्मिकक्षेत्रे आर्याणामार्येतराणां च सहयोगः समारभ्यत। देवर्षयः आर्येतराणामार्यीकरणाय समुत्सुका बभूवुः।[6]

आर्येतरा कन्या आर्यगृहेषु गृहीतास्तत्रार्येतरसंस्कृतिबीजं वपन्ति स्म। ईदृशीषु स्त्रीषु जाता बालका आर्या बभूवुः। त्वष्टासुरकुलोद्भवां रचनां परिणीतवान्। तस्या

---

१. चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।

२. विप्रऋषिर्बल्बूथतरुक्षदासयोर्दानं गृहीतवान् ऋग्वेदे ८.४६.३२।
महाभारतानुसारमगस्त्य इल्वलाद्दैत्यराजाद् दानमगृह्णात्। वन० ९९ अध्यायतः।

३ ऋग्वेदे १० ९४ सूक्तस्य। नागो जरत्कर्णः ऋग्वेदस्य १० ७६ सूक्तस्य ऋषिः।

४ शतपथब्राह्मणे ३ २ ४ ६

५ ऐतरेयब्राह्मणे ६ १ १

६ ऋग्वेदे १० ३५ ११

सूत्रयुगे संस्कारविहीना जना: पतितसावित्रीका व्रात्या वा कथिता: । ते बहिष्कृता बभूवु: । उपनयनादिसंस्कारा यज्ञसम्पादनं वा तेषां न विहितम् ।[1] आपस्तम्बानुसार 'धर्मचर्यया जघन्यो वर्ण: पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ । अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ।' राजा पतितसावित्रीकं ब्राह्मणं शूद्रकर्मणि नियोजयेदिति बौधायन: ।[2]

महाभारतयुगादारभ्य प्रायो वृत्त्याचारानुसारं वर्णपरिवर्तनं सम्प्रकल्पितम् ।[3] तद्यथा—

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥ शान्तिपर्वणि १८१ १०
सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचि: ।
त्यक्तवेदस्त्वनाचार: स वै शूद्र इति स्मृत: ॥
शूद्रे चैतद् भवेल्लक्ष्य द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मण: ॥ शान्ति० १८२ ८
सर्वोऽयं ब्राह्मणो लोके वृत्तेन तु विधीयते ।
वृत्ते स्थितस्तु शूद्रोऽपि ब्राह्मणत्वं नियच्छति ॥ अनु० १४३ ५१

उपर्युक्तसिद्धान्तं प्रतिपादयता महाभारते निर्दिष्टम्—शोभनाचारेण शूद्रो ब्राह्मणो भवति ।[4] हीनजातावुत्पन्न: शूद्र आगमसम्पन्नो भूत्वा संस्कृतो द्विजो भवति ।[5] नीचवृत्त्या ब्राह्मणोऽपि पूर्णत्वेन शूद्रो भवति ।[6] 'जात्या ब्राह्मणादिवर्णा न भवन्ति । केवलं गुणचरित्राचारेण ब्राह्मणत्वसिद्धिर्भवति ।[7] महाभारतानुसारं शूद्रा अपि ब्राह्मणत्वं प्राप्तुं शक्नुवन्ति । तद्यथा—

शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठत: ।
वैश्यत्वं लभते ब्रह्मन् क्षत्रियत्वं तथैव च ॥
आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते ॥ वन० २०६ १०

---

१ शतपथे ३ ४ २ १७
२ छान्दोग्ये ५ १० ७
३. आश्वलायनगृह्यसूत्रे १ १९ ५-७
४ बौधायनधर्मसूत्र २ ४ २०, १ ५ ९५ ।
५ महाभारतानुसारं जन्मना जातिर्नभूत् । तद्यथा—
दुर्वेदा वा सुवेदा वा प्राकृता: संस्कृतास्तथा ।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नय: ॥ वनपर्वणि २०० ८८ ।
६ अनुशासनपर्वणि १४४ २६
७ अनु० १४४ ४६

अस्या दशाया कस्यचित्पुरुषस्य स्वजीवनकाले द्विवारं वारं जातिपरिवर्तनं सम्भवति स्म। यथाहि

तत्र वै ब्राह्मणो भूत्वा ततो भवति क्षत्रिय ।
वैश्य. शूद्रश्च वाह्रीकस्ततो भवति नापितः ॥
नापितश्च ततो भूत्वा पुनर्भवति ब्राह्मण ।
द्विजो भूत्वा च तत्रैव पुनर्दासोऽभिजायते ॥

वर्णपर्वणि ४५. ६-७

बहव स्मृतिकारा जातिपरिवर्तन शक्य मन्यन्ते। तद्यथा

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वय ॥
तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे।
उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मत ॥
शनकैस्तु क्रियालोपादिमा क्षत्रियजातय ।
वृषलत्व गता लोके ब्राह्मणादर्शनेन च ॥

मनुस्मृतौ २ १६८, १० ४२-४२

ब्राह्मणा कर्मानुसार दशकोटिका —देवमुनिद्विजराजवैश्यशूद्रनिषादपशुम्लेच्छचाण्डाला भवन्ति इतिमतमत्रिमुने ।[1] पराशरोऽपि इदैव समर्थयति—

अग्निकार्यात्परिभ्रष्टा सन्ध्योपासनवर्जिता ।
वेद चैवानधीयाना सर्वे ते वृषला स्मृता ॥ ११ २९

पौराणिकयुगेऽपि वर्णपरिवर्तनमासीदेव। भागवतानुसार—

यस्य यल्लक्षण प्रोक्त पुंसो वर्णाभिव्यञ्जकम्।
यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥ ७ ११. ३५

ब्राह्मणत्वस्य कर्मणा सिद्धि कठिनासीत्। बहवा ब्राह्मणा जातीयकर्मणो विमुखा. सन्त क्षत्रिया वैश्या वा बभूवु । ब्राह्मणस्य जीवनविधाम सुखकरो नासीत्। केचिदेव क्षत्रिया वैश्या वा ब्राह्मणा भवितुमैच्छन्। प्राचीनयुगे निःसन्दिग्धमेव वैश्याना शिल्पकारिणा शूद्राणा चाधिभौतिकप्रतिष्ठा ब्राह्मणेभ्य उच्चतरासीत्। अस्या स्थितौ उच्चवर्णात्निम्नवर्णत्वप्राप्ति सामान्यप्रवृत्तिरासीत्। बहवस्तत्रासन् जातिब्राह्मणा अपि येषा विषये पतञ्जलिना प्रोक्तम्—

तप श्रुत च योनिश्चैतद् ब्राह्मणकारकम्।
तप श्रुताभ्या यो हीनो जातिब्राह्मण एव स ॥[2]

---

१. अनु० १४४ ४७
२ शान्तिपर्वणि १८१–१८२ [illegible]

व्यवहारपक्ष

वैदिकयुगे सर्वेषामार्यतराणा नात्मनो व्यवसायवरणस्य स्वातन्त्र्यमासीत्। व्यवसायमात्रेण केवल कस्यापि पुरुषस्योच्चत्व हीनत्व वा न प्रमाणितम्।[1] एकस्मिन्नेव कुटुम्बे बहुविधव्यवसायेषु लग्ना जना निवसन्ति स्म। नवव्यवसाय प्रति तस्यकालस्य प्रवृत्तिरनेन श्लोकेन परिचीयते—

कुविन्मा गोपा करसे जनस्य कुविद्राजान मघवनृजीषिन्।
कुविन्मा ऋषि पपिवास सुतस्य कुविन्मे वस्वो अमृतस्य शिक्षा ॥
ऋग्वेद ३ ४५.५

जनकस्य ब्राह्मणत्वप्राप्ति प्रागेव निर्दिष्टा। स याज्ञवल्क्यमशिक्षयत्। तत परं ब्राह्मणोऽभवत्।[2] महाराजस्य शन्तनोर्भ्राता देवापिरासीत्। तस्य पौरोहित्ये राजा यज्ञमकारयत्।[3]

महाभारतानुसार न केवल विश्वामित्रो ब्राह्मणोऽभवत्, अपितु तस्य वश एव सर्वथा ब्राह्मण सजात। तद्यथा—

ततो ब्राह्मणता यातो विश्वामित्रो महातपा।
क्षत्रिय सोऽप्यथ तथा ब्रह्मवशस्य कारक ॥
तस्य पुत्रा महात्मानो ब्रह्मवशविवर्धना।
तपस्विनो ब्रह्मविदो गोत्रकर्तार एव च ॥
अनु० पर्वणि ४, ४८—४९

मनुनहुषादीना राजर्षीणा वशजेषु बहवो ब्राह्मणा बभूवु।[4] तद्यथा—

ब्रह्मक्षत्रादयस्तस्मान्मनोर्जातास्तु मानवा।
ततोऽभवन्महाराज ब्रह्म क्षत्रेण सगतम् ॥ आदिपर्वणि ७५. १४

इन्द्र स्वयमेव ब्राह्मणस्य कश्यपस्य पुत्र आसीत्। स स्वकर्मणा क्षत्रियोऽभवत्।[5] ब्राह्मणाना वचनमात्रेणापि क्षत्रियस्य ब्राह्मणत्वसिद्धि सजाता। भृगोर्वचनमात्रेण राजा

१ अत्रिस्मृती ३७२-३८७
२. अष्टाध्यायी २ ? ६ अधिकृत्य।
३. The priestly class was not necessarily superior to the warrior or the trading class—Radhakrishnan: Indian Philosophy, Vol I, p 133
४. शतपथब्राह्मणे ११ ६ २ १०
५. ऋग्वेदे १० ९८ ५, बृहद्देवतायाम् ७ १५५, निरुक्ते २ १०
६. शल्यपर्वणि ३९ ५०—५९।

वीतहव्यो ब्रह्मर्षिता गत । तस्य वंशजेषु गृत्समदसुतेजोवागिन्द्रादयो बहवो ब्रह्मर्षयो बभूवुः ।[1]

विष्णुपुराणानुसारमाङ्गिरस-शौनक-कात्यायन-मौद्गल्या इति ब्राह्मणवंशाः क्षत्रियोद्भूताः ।[2] पृषध्रो गोवधाच्छूद्रोऽजायत ।[3] भागवतानुसार महाराजस्य ऋषभस्य शतपुत्रेषु ज्येष्ठो भरतो राजा बभूव । अन्येषां एकाशीतिपुत्रा याज्ञिका ब्राह्मणा बभूवुः ।[4] गार्ग्यब्राह्मणानामुद्भव राजवंशाद्भरताद्बभूव ।[5]

ऐतिहासिकयुगेऽपि जातिपरिवर्तनस्य कतिपयमहत्त्वपूर्णवृत्तानि सन्ति । तद्यथा कदम्बवंशोद्भवो ब्राह्मणराजो मयूरशर्मा बभूव । तस्य वंशजास्तु वर्माणो बभूवुः । तेनोपाधिना ते क्षत्रियत्व प्रकटितवन्तः । तस्य वंशस्य राजा काकुस्थवर्मा स्वदुहितॄ क्षत्रियेभ्यो दत्तवान् ।[6]

जातिपरिवर्तनमधुनाऽपि यत्र तत्र दृश्यत एव । अस्मिन् भारते बहवो वैश्यशूद्रजातयः क्षत्रिया ब्राह्मणा वा बभूवुर्भवन्ति च ।

आदर्शपरिपालनम्

सर्वे वर्णा यथोचितकर्माचारव्यवहारादिपालनेनैव स्वकीया विशुद्धा स्थितिमक्षुण्णां विधातुं शक्नुवन्ति, नान्यथा । तथाहि यदि कश्चिद् ब्राह्मणो वेदविद्या नापठत्, स ब्रह्मबन्धुरिति भाषितः । तप श्रुताभ्यां हीना ब्राह्मणास्तु जातिब्राह्मणा इति पतञ्जलिमतम् । ते शूद्रा एवेति गर्हिताः ।[7] एतत् परिलक्ष्य मनुना सञ्चारितम्—

सर्वान् परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः ।
यथा तथाध्यापयंस्तु सा ह्यस्य कृतकृत्यता ॥ ४ १७

स्वकर्तव्यपरित्यागेन तु अपरेषां वर्णानां कृतेऽपि आवश्यकमासीत् । कर्तव्यच्युतस्तु पापभागी भवति अथवा यस्य वर्णस्य कार्यं करोति तस्य वर्णस्य स्वयमेव भवतीति विधानमासीत् ।

तथापि ब्रह्मबन्धूनामथवा तथाकथितब्राह्मणानां सख्या समाजे सदा नातिस्वल्पासीत् । तद्यथा कल्हणो लिखति—

---

१. शान्तिपर्वणि २२ २२—इन्द्रो वै वाल्मय पुत्र क्षत्रिय कर्मणाऽभवत् ।
२ अनुशासनपर्वणि ३२, ५८ ।
३. विष्णुपुराणे ४ १९ १४ ।
४. विष्णुपुराणे ४. १ १४ ।
५ भागवते ५ ४ १३ ।
६. भागवते ९ २१ १९-२० ।
७. Epigraphia Indica V page 24

प्रायोपवेशकुशला. शक्तास्त्वन्ते न कुत्रचित् ।
मिथ्यासम्भावनाभूमिर्भूपाना ब्रह्मबन्धव. ॥ राजत० ७.१६.११

कतिपयब्राह्मणा राजनीतिक्षेत्रे निर्घृणकर्मपरायणा अवमाननास्पद सजाता ।[1]

## वर्णानां पारस्परिकसम्बन्धः

वर्णाना पारस्परिकसौहार्देन समाजस्य सर्वाङ्गीणसमुन्नति सम्भवति सर्वत्र शान्तिश्च प्रायशो विराजते । प्राचीनकाले यदि समुन्नतजातीना चारित्र्यबलेन सर्वत्र प्रतिष्ठासीत्तर्हि वैश्यशूद्राणामाधिभौतिकतसमृद्धया समाजे समादरणीय पदमधिगत । अस्या स्थितौ नासीत् कोऽप्यवसरो वर्णाना पारस्परिकस्पर्धाया ईर्ष्याद्वेषयोर्वा ।[2]

प्रथम तावदनुलोमविवाहरीत्यैव पारस्परिकसम्बन्धो दृढतरो बभूव । इमेऽनुलोम-विवाहा केवलमपवादरूपा एव नासन्; अपितु समृद्धिशालिभिर्महापुरुषैः प्रायशो विविध-वर्णोत्पन्ना' कन्यका अनुलोमरीत्या परिगृहीता । इद परिलक्ष्य महाभारते स्पष्टमेव निर्दिष्टम्

जातिरत्र महासर्प मनुष्यत्वे महामते ।
सकरात्सर्ववर्णाना दुष्परीक्ष्येति मे मतिः ॥
सर्वे सर्वास्वपत्यानि जनयन्ति सदा नरा ॥ वन १८०-३१-३२

वैदिककालादारभ्य खीष्टस्य पश्चाद् दशशतकपर्यन्तमनुलोमविवाहस्य प्रचलन प्रर्याप्तमासीत् यद्यपि शास्त्रकारा असवर्णविवाहस्य पूर्णानुमोदनं न कृतवन्त' ।

चतुर्वर्णाना परस्पर साहचर्य सङ्गति समागमश्च प्राचीनयुगे प्रशस्त एवासीत् । एकस्मादेव ब्रह्मण पुरुषाद् वा सर्वेषा वर्णानामुत्पत्तिरिति सिद्धान्तेन क्रमश मुखबाहू-रुपदप्रदेशेभ्य उत्पत्तिरिति सिद्धान्तेन च तेषा परस्पर सगतिसहननेन समाजशरीरस्य रचनाविधानमादर्शरूपेण सर्वानुकूलमेव स्वभावत प्रसिद्धम् । बृहदारण्यके प्रोक्तम्—तदेतद् ब्रह्मक्षत्रविट्शूद्र । तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्य शूद्रेण शूद्र ।[3]

ब्राह्मणस्तु ज्ञानचरित्रतपोबलेन सर्वेषा गुरुरभवत् । तस्योच्चत्वमाध्यात्मिकरूपेण सिद्धम् । प्रत्यक्षत स आत्मविकासमकरोत्, किन्तु गौणरूपेण समग्रसमाजस्तेनोपकृत

१ पतञ्जलिमहाभाष्ये ४.१ ९३
२. इदमेवोद्दिश्याशोकेन लेखापितम्—'धर्मानुमस्तिया वतोनि सपटिपती ।' गिरिनगरस्य शिलालेखात् ।
३ राजत० ६.२७४ इत्यनुसार ललितादित्यपुरस्य ब्राह्मणा विपुलस्वर्णराशिमुत्कोचं गृहीत्वा शत्रु-सघे भेदबीज वपन्ति स्म ।

आसीत्। प्रजायै सत्यप्रदर्शनं तस्यैवोत्तरदायित्वमासीत्। अस्य परिपालने स निरन्तरं प्रयत्नशीलोऽभवत्।[1] शतपथब्राह्मणे परिरक्षयेदं कथितम्—लोक. पच्यमानश्चतुर्भिर्धर्मैः भुनक्ति अर्चया च दानेन चाज्येयतया चावध्यतया च।[2] मनुना ब्राह्मणस्योत्तरदायित्वं निरूपितम्—

> उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद् ब्रह्मणश्चैव धारणात्।
> सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ॥ १.९३
> ब्राह्मणो जायमानो हि पृथिव्यामधिजायते।
> ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ॥ १.९९

मनुना व्यवस्थापितम्—

> ब्राह्मणं दशवर्षं तु शतवर्षं तु भूमिपम्।
> पितापुत्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता ॥ २.१३५

मनुर्ब्राह्मणानां श्रेष्ठत्वं विनातु नैव कृतवान्। विचारणीयमस्मिन् प्रसङ्गे मनुना कृतापरा व्यवस्था—

> वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी।
> एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥
> पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च।
> यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥

राजनीतिक क्षेत्रे ब्राह्मणानां माहात्म्यमैतिहासिकयुगेऽपि अविस्मरणीयमेव विद्यते। चतुर्थशताब्दे ई० पू० काले सिकन्दरस्याक्रमणे सति ब्राह्मणाः लोकरक्षणाय सङ्घटनं कृत्वा तदाक्रमणकारिणा सहायुध्यन्त। असङ्ख्यास्ते ब्राह्मणाः सिकन्दरेण शूलमारोपिताः। तत्र कश्चिद् ब्राह्मणः किमर्थं त्वं जनान् योद्धुं प्रोत्साहयसीति पृष्टः सन्नुवाच—ते लोकाः ससम्मानं जीवन्तु प्राणानुत्सृजन्तु वेति विचार्याहमेवं करोमीति।

क्षत्रियस्तु सर्वेषां वर्णानां रक्षको बभूव। स सर्वेषां हिताय युद्धं कर्तुं सदैवोद्यतोऽभवत्। अस्मात् कारणात् यतु तस्य लक्षणं विनिश्चितम्।[4]

---

१. बृहदारण्यक १.४.१५
२. ब्राह्मणा वै प्रजानामुपद्रष्टा। तैत्तिरीयब्राह्मण २.७.१
३. शतपथ ११.५.७.१। अन्यत्र ब्राह्मणानधिकृत्य कथितम्—सर्वांस्तुल्यदृग्हि सः। कात्यायनस्मृतौ १२.६। स द्विजो विमतिः—पराशरस्मृतौ १२.१। महाभारतानुसारं तु या ब्राह्मणा राज्याभ्युदयाय किञ्चित्कालं क्षमाकराः स तु ब्रह्ममहोमन्त्रायाननेन चातुर्वर्ण्यस्याभिनन्दनीयोऽभवत्। आदि० १५२.१८
४. अथर्ववेद १८.२.६०

महाभारतानुसारं तु—

आत्मत्यागः सर्वभूतानुकम्पा लोकज्ञानं पालनं मोक्षणं च।
विषण्णानां मोक्षणं पीडितानां क्षात्रे धर्मे विद्यते पार्थिवानाम् ॥[1]

चतुराश्रम्यधर्माश्च यतिधर्माश्च पाण्डव।
लोकवेदोत्तराश्चैव क्षात्रधर्मे समाहिताः ॥
प्रत्यक्षसुखभूयिष्ठमात्मसाक्षिकमच्छलम्।
सर्वलोकहितं धर्मं क्षत्रियेषु प्रतिष्ठितम् ॥
क्षात्राद्धर्माद्विपुलादप्रमेयाल्लोकाः प्राप्ताः स्थापितं स्वं यशश्च।[2]
चातुर्वर्ण्यं स्थापनात्पालनाच्च तैस्तैर्योगैर्नियमैरौरसैश्च।
सर्वोद्योगैराश्रमं धर्ममाहुः क्षात्रं श्रेष्ठं सर्वधर्मोपपन्नम्।
स्वं स्वं धर्मं ये न चरन्ति वर्णास्तांस्तान्धर्मानन्यथार्थान्वदन्ति ॥[3]

क्षत्रियाणां सहायता तु सर्वेभ्य आसीत्। शरणार्थिनां ब्राह्मणादीनां वर्णानां रक्षणेन मरणोत्तरकाले क्षत्रियस्य सुगतिरिति महाभारतवचनम्।[4] ह्वेनसांग क्षत्रियाणां सहायशीलत्वं स्वरचितग्रन्थे प्रमाणितवान्।[5]

क्षत्रियाणां लोकोत्थानं तु सदैव सुप्रथितमभवत्। रामकृष्णार्जुनादीनां चरितगाथा सर्वान् क्षत्रियान् लोकोपकारमरणिमेव स्वीकर्तुं सदैव प्रोत्साहयति स्म।

भारते वैश्यानां संख्या वैदिककाले सर्वाधिकाऽभवत्।[6] ते वैश्याः समाजे सर्वेषामुपभोगाय धनधान्यान्युत्पादयन्ति स्म। तेषामुत्पादितधनस्य सर्वभोग्यत्वमपि प्रतिपादितम्।[7] मनुना तु निर्दिष्टम्—वैश्यः सर्वभूतेभ्योऽन्नं यत्नतो दद्यात्। निःसन्देहं वैश्यानां कर्मविधिरत्यन्तं कठिन एव। तथा सत्प्रयत्नेन हि वैदिकजैनबौद्धसंस्कृतीनां प्रवर्तकाः उन्नायकाश्च जीवन-निर्वाहस्यावश्यकवस्तूनि सम्प्राप्य सर्वेषामभ्युदयायाध्यात्मकर्मणि प्रयुक्ता अभवन्।

वैदिककालत एव शूद्राणां सामञ्जस्यपूर्णा गतिरभवत्। तत्र शूद्रकुलेऽपि यदा प्रासये

---

१ शान्तिपर्वणि ६४ २७
२. शान्तिपर्वणि ६४ अध्याये।
३ शान्तिपर्वणि ६५ अध्याये।
४. शूद्रं तु मोचयेद्राजा शरणार्थिनमागतम्।
प्राप्नोतीह कुले जन्म सद्द्रव्ये राजपूजिते ॥ आदिपर्वणि १६१ २५
५ The second order is that of Kshatriyas, the race of kings This order has held sovereignty for many generations, and its aims are benevolence and mercy. Watters Vol I p. 158
६ तैत्तरीयसंहितायां ५ १ १० ३
७ तैत्तरीयसं० ७ । १०५

शूद्रर्षिभी रचिता मन्त्राः सन्ति ।[1] शूद्राणामपि प्रियो भवितु मन्त्रा विद्यन्ते ।[2] बृहदारण्यकानुसारं शूद्राः पोषका एव सर्वेषाम् । तद्यथा—स शौद्रं वर्णमसृजत् । पूषणमियं वै पूषेयं हीदं सर्वं पुष्यति यदिदं किंच ।[3] शूद्रास्तु सेवका इति धर्मशास्त्रेषु प्रमाणितम् । अस्मिन् प्रकरणे सेवया सह शिल्पकर्माण्यपि व्यस्तानि, यैस्ते वर्णा आवश्यकवस्तूनि प्राप्नुवन्ति । तद्यथा मनु —

यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः ।
तानि कारुकर्माणि शिल्पानि विविधानि च । १०.१००

सेवाधर्मस्तु पुरा क्षत्रियवैश्यशूद्रेभ्य सर्वेभ्यो निर्धारित आसीत् । तद्यथा क्षत्रियो ब्राह्मणाना वैश्या क्षत्रियब्राह्मणाना शूद्राश्च वैश्यक्षत्रियब्राह्मणाना सेवा कुर्वन्तु इति धर्मशास्त्रकारा ।[4] शूद्राणा सामञ्जस्यमधिकृत्य महाभारते प्रोक्तम्—यदि स्वामी वृद्धो दुर्बलो वा भवेत्तर्हि स शूद्रेण सेवनेन भरणीय । यदि सोऽशक्तस्तर्हि शूद्रेण तस्मै पिण्डो देय इति । स तु स्वयमेव विरज्य स्वामिनो भर्ता भवेदिति ।[5]

महाभारतानुसारं तु धर्मज्ञाना सर्वे लोकाः शूद्रं वैश्यं राजपुत्रं च संश्रिता ।[6] राजनीतिक्षेत्रेऽपि चतुर्णां वर्णाना साहचर्यं सुप्रतिष्ठितमासीत् । वैदिककालस्य रत्निपरिषदि ब्राह्मणा क्षत्रिया वैश्या शूद्राश्च सर्वे सदस्या भवन्ति स्म ।[7] महाभारतानुसारममात्यपरिषदि चत्वारो ब्राह्मणा, अष्ट क्षत्रिया, एकविंशति वैश्यास्त्रय शूद्राश्च सदस्या बभूवु. । यज्ञावसरेऽपि सर्वेषा वर्णाना प्रतिनिधय आमन्त्रिता । सर्वे च ते सहर्षमभ्यथा. सत्कृता पूजिताश्च ।[8] यज्ञेषु प्रार्थनाऽभूत्—

रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि ।
रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥[9]

न केवल ब्राह्मणादय उच्चवर्णिका जना अपितु हीनजातिकाः शूद्राश्चाण्डाला अपि लोकरक्षणार्थं महापराक्रमं कुर्वन्ति स्म । कश्मीरस्येतिहासे ग्रामवासिना प्रतिनिधीभूता

---

१ तैत्तिरीयसंहितायां ५ ३ ६ ४ काठकसंहितायां ४० १३
मैत्रायणीसंहितायां ४ ८ ८. वाज स १८४८
२. अथर्ववेद १०. ३२. ८, १६ ६२ १ वाज. म० २६ २.
३ बृहदारण्यके १ ४.१३
४ विष्णुस्मृती ११२
५ शान्तिपर्वणि ६०.३१ ।
६ शान्तिपर्वणि ६३ ९ ।
७ शतपथे ५ ३.१ १ काठकस० ११४ ।
८ बालकाण्डे ८३. १४, १३ ५ महाभारते सभापर्वणि ३३ ४२ ।
९. शुक्लयजुर्वेदे १८ ४८ ।

चाण्डाला विपत्तिकारिणो राज्ञो हतवन्त ।[१] कतिपयराजवशा शूद्राणामेव प्रसिद्धा सन्ति । राजान एव ते शूद्रा स्वदेशस्य समुन्नति विदधु ।[२]

## उपजातयः

चतुर्भ्यो वर्णेभ्य कालान्तरे शतसख्यका उपजातय प्रादुर्भूता । येन सिद्धान्तेन चतुर्वर्णा व्यवस्थितास्तेनैवोपजातीनामपि व्यवस्थाभवत् । आदौ व्यवसायानुरूप पित्रोर्जात्यनुरूप च वर्णाना सघटनमक्रियत । प्राचीनयुगे व्यवसायाना सख्याऽगणितैव । तथा हि यज्ञविधौ षोडश पुरोहिता षोडशविधकार्येषु सलग्ना । तेषा सर्वेषा पदप्रतिष्ठा समाना नासन् । तेषा षोडशनामानि बभूवु । वैश्याना सामान्यतस्त्रय एव व्यवसाया निर्धारिता — कृषि पशुपालन वाणिज्य च । तेषा प्रथम द्वय सर्वैः समानरूपेण स्वीकृतम् । वाणिज्यार्थमसख्यातवस्तूनि वर्ण्यन्ते । तेषामेकैकस्य विक्रेतु पदमपरविक्रेतृभ्य उच्चावचमभूत् । शूद्राणामसख्यानि शिल्पानि वर्तन्ते । प्रतिशिल्पमेका जातिरिति सुनिश्चितमेव । तथाहि कास्यकारा कैवर्ता , कुम्भकारा , चर्मकारा , तैलिका , नटा , नापिता , रजका , सुवर्णकारा —इमे सर्वे शूद्रवर्गेऽपि स्वस्वापवर्गक निर्मितवन्त । बौद्धसाहित्ये शूद्राणा व्यवसायानुरूपाणि जातीना नामानि प्राप्यन्ते । तथा हि नलकार , मणिकार , गन्धिक , तुन्नवाय , रजकार , काष्ठहार , उदहार , सूपकार , दौवारिक , रूपदक्ष , हस्त्यारोह , हस्तिपाल , पेशस्कार , दौशिक , प्रैषकार , सन्धिकादय । बहवो जातिभेदा निवासिना देशानामन्यथिकृत्योद्भूता , तद्यथा—अम्बदेशस्याम्बष्ठा., मगधस्य मागधाः, विदेहस्य वैदेहकाश्च । वैदेशिकाना नामानि शक यवन खश कम्बोज द्रविड-पारद पह्लव दरद शबर-किराशादीनि प्राप्यन्ते ।

अनुलोमप्रतिलोमविवाहैर्वर्णसकराणामुत्पत्ति कालान्तरे जाता । तेषा वर्णसङ्कराणा नवानि नामानि प्राप्यन्ते अथवा पुरातनोपजातिष्वन्तर्भावो दृश्यते । वर्णसकरजातीनामुपदिज्ञानमधोलिखितया तालिकया भवति—

| पितुर्जाति | मातुर्जाति | सन्ततेर्जाति |
|---|---|---|
| ब्राह्मण | क्षत्रिय | मूर्धाविसिक्त. |
| क्षत्रिय | वैश्य | माहिष्य |
| वैश्य | शूद्र | पारशव |
| ब्राह्मण | वैश्य | अम्बष्ठ |

१ राजत० ४ ४७७, ५ २२१ ।

२ षोडशमध्दशताब्दे गणवंशाया राजाना यवनान् पुन पुन पराजितवन्त । ह्वेनसाग शूद्र राजाना वर्णन कृतवान् ।

| | | |
|---|---|---|
| ब्राह्मण | शूद्र | निषाद |
| वैश्य | क्षत्रिय | मागध |
| शूद्र | ब्राह्मण | चाण्डाल |
| ब्राह्मण | अम्बष्ठ | आभीर |

मन्वादिधर्मशास्त्रकारैः वर्णसंकराणां प्रत्येकशो व्यवसायादयो निर्दिष्टाः ।

## जीविकासाधनानि

प्रारम्भिकवैदिकयुगे व्यवसायनिबन्धिनी वर्णव्यवस्थार्धविकसितासीत् । तस्मिन्युगेऽर्थोपार्जनाय सामान्यतः त्रयः श्रेष्ठव्यवसायाः प्रचलन्ति स्म—कृषिः, पशुपालनं याजनं च । प्रायशो जना एषु त्रिषु व्यवसायेषु व्यापृता बभूवुः । सर्वे आर्याः स्वरुच्यनुकूलं व्यवसायमचिन्वन् । अपरमपि कार्यं तेषामार्याणां समक्षमासीत्—आत्मरक्षणं युद्धं च । अनेन विना तस्मिन्युगे समाजे शान्तिरसम्भवासीत् । युद्धे यदा कदा शत्रूणां सम्पत्तिः प्राप्ता ।

उपर्युक्तव्यवसायेषु कालान्तरे यज्ञात्मकानि कार्याणि श्रेष्ठानि सन्तीति लोकधारणा बभूव । यज्ञार्थं मन्त्राणां रचनापेक्षितासीत् । ते मन्त्रद्रष्टारः ऋषयः सर्वोच्चपदे प्रतिष्ठापिताः । यज्ञैर्युद्धे विजयोऽपि प्राप्तव्य आसीत् यतो देवा यज्ञे परितुष्टा यजमानस्य सर्वान्कामान् परिपूरयन्तु । आर्याणां यज्ञेषु, तेषां सम्पादकेषु, विनियोज्यमन्त्रेषु, मन्त्रद्रष्टृषु चातिशयश्रद्धावर्तत । समाजे यज्ञसम्पादकानां समादर आसीत् ।[*] तेभ्यः प्रायः समन्ताः शस्त्रधारिणो राष्ट्ररक्षका योद्धार आसन् । कृषिः पशुपालनं च समाजस्य पोषणाय महत्त्वपूर्णं वर्तते, किन्तु प्राकृता अवराश्च जना तयोः कर्मणोः समर्था आसन् । उदरभरणं तयोः प्रधानप्रयोजनं वर्तते । अत एव कृषकाः पशुपालका वा समाजे तृतीयस्थाने प्रतिष्ठापिताः ।

व्यवसायानुरूपं वर्णसंगठनं यदाभवत्, तदा कस्यापि पुरुषस्य जातिस्तस्य प्रधानकर्मानुरूपा नियता बभूव । मन्त्रद्रष्टारः ऋषयः याजकाः पुरोहिताश्च ब्राह्मणाः, शस्त्रधारिणः राजानश्च क्षत्रियाः, पशुपालकाः कृषकाश्च वैश्या अभिहिताः । ब्राह्मणक्षत्रियवैश्यानां सहायकाः सोपयोगानां ललितानां च कलाशिल्पानां कर्तारः शूद्रा अभिहिताः ।

वैदिककाले कृषिपशुपालनयोर्विशेषमहत्त्वं स्वीकृतम् । प्रायः सर्वे ब्राह्मणाः क्षत्रियाश्च कृषिपशुपालने कुर्वन्ति स्म । ऋषीणामाश्रमेषु राज्ञां सम्यानेषु च गवां गणशः वर्तन्ते स्म ।

---

[*] परवर्तियुगे पुरोहितानां हीनत्वं प्रतिपादितम् । यतस्ते समाजस्यानुचितकार्येषु सिद्धयर्थं यज्ञं चेति कारणात् पुरोहिताः प्रायशो विनिन्दिताः ।

परवर्तियुगेऽन्ययोर्द्वयोर्व्यवसाययोर्हीनत्वमेव निदर्शितम् । ब्राह्मणेभ्य: कृषि: निषिद्धा । तद्यथा बौधायन: —

वेद: कृषिविनाशाय कृषिर्वेदविनाशिनी ।
शक्तिमानुभयं कुर्यादशक्तस्तु कृषिं त्यजेत् ॥ धर्मसूत्रे १ ५ १०१

ज्ञानभाण्डारस्य तस्मिन्युगे वैपुल्यमासीत । स्वाध्यायपरायणा ब्राह्मणा: कृषिं त्यक्त्वा शिलोञ्छवृत्त्या जीवनयापनं कुर्वन्ति स्म, किन्तु बहवस्तत्रासन् तादृशा: ब्राह्मणा येषां विषये बौधायनो लिखति—

प्राक् प्रातराशात्कर्षी स्यात् ।[1]

मनुस्तु ब्राह्मणेभ्य: कृषिवृत्तिं परित्याज्यां मन्यते । तद्यथा—

ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥ ४ ५

मनुस्तु ब्राह्मणेभ्यो धनार्जनं गौणमेव मन्यते । तदनुसारम्—

यात्रामात्रप्रसिद्ध्यर्थं स्वै: कर्मभिरगर्हितै: ।
अक्लेशेन शरीरस्य कुर्वीत धनसञ्चयम् ॥ ४ ३

मनोर्विधानं लोके स्वीकृतम् ।

तद्यथा—प्रशीर्णं च पुष्पफलं देवकार्यार्थं व्रीहियवमजगवणार्थं श्रोत्रियास्तपस्विन-श्चाहरेयु: ।[2]

ब्राह्मणास्तु परमुखापेक्षिणो भोजनार्थं न भवेयुरिति बहूनां मनीषिणां परिदर्शनमासीत । तद्यथा महाभारते—

अपि शाकं पचानस्य सुखं वै मघवन् गृहे ।
अर्जितं स्वेन वीर्येण नाप्यपाश्रित्य कञ्चन ॥
फलशाकमपि श्रेयो भोक्तुं ह्यकृपणं गृहे ।
परस्य [illegible] गृहे भोक्तुं परिभूतस्य नित्यश: ॥
सुमृष्टमपि न श्रेयो विकल्पोऽयमत: सताम् ।
श्ववत् कीलालपो यस्तु परान्नं भोक्तुमिच्छति ॥ वन० १९३ २७-२९

महाभारतानुसारं कतिपयमहाब्राह्मणा आयुधाजीविन: कृषका: पशुपालका बभूवु: । द्रोणाचार्यस्तु धनुर्वेदशिक्षक आसीत । आयोदधौम्य: कृषक: पशुपालकश्चासीत् । ब्राह्मणेभ्यो बलीवर्दा दानरूपेण दीयन्ते स्म । अवश्यमेव तेषां कृषिकर्मणे एव बलीवर्दा-

१ धर्मसूत्रे २ २८२ । रामायणानुसारं त्रिजटाख्यो ब्राह्मण: फालकुद्दाललाङ्गली वनेऽप्यासन् । अयोध्याकाण्डे ३२।३० । अन्यत्रापि द्रष्टव्यम्-वसिष्ठधर्मसूत्रे २ ३२ ३४ पराशरस्मृतौ २ २ १६ ।
२ अर्थशास्त्रे सीताध्यक्षप्रकरणे ४१ सूत्रम् ।

नामुपयोग आसीत् ।[१] अर्थशास्त्रानुसारमपि राजा 'ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयानि यच्छेत्' ।[२] ब्रह्मदेयभूमि कृषिकर्मण आसीत् ।

केषुचित्पुराणेषु ब्राह्मणान् स्वावलम्बिन कर्तुं योजना वर्तन्ते । न ते परमुखापेक्षिणो जीविकार्थं भवेयुरिति उद्दिश्य पद्मपुराणे स्पष्ट निर्दिष्टम्—ब्राह्मणा शस्त्रेण जीविकोपार्जन कुर्वन्तु व्यापार कृषि वा कुर्वन्तु, किन्तु ब्राह्मणोचिता धार्मिकसस्कृति मा त्यजन्तु'[३] इति ।

प्राचीनयुगे बहवस्तत्रासन् ब्राह्मणा नामधारिण एव—ये चिकित्सका , परिचारका , निग्राहका , भिक्षव , व्यापारिण , पुरोहिता , कृषका , शिल्पिन , योधाजीविन , याजका वा बभूवु ।[४]

आरम्भिकयुगेऽध्यापनवृत्त्या धनं मार्जनीयमिति रीतिरासीत् । राजानो यदा कदाऽध्यापकेभ्यो वृत्यै धनमन्न वा दत्तवन्त । परवर्तियुगेऽध्यापनार्थं शुल्करूपेणधनग्रहण कतिपयधर्मशास्त्रकारा समीचीन मयन्ते ।

पौरोहित्य वैदिकयुगे ब्राह्मणेभ्य श्रेष्ठा वृत्तिनिर्धारिता । प्राय सर्वेषा राज्ञा समृद्धिशालिना गृहस्थाना च यज्ञादिधर्मकार्यसम्पादनाय धार्मिकक्रिया कुशला वेदविद्यापरायणा ब्राह्मणा पुरोहितपद नियुक्ता बभूवु । राष्ट्रस्याभ्युदयकरणे पुरोहितानामुत्तरदायित्व सविशेषमेवासीत् ।[५]

मनुस्तु पौरोहित्य निन्दनीयमेव मन्यते । पूगयाजका , गणयाजकाश्च श्राद्धे त्याज्या इति मनुमतम् ।

प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि ।
प्रतिग्रह प्रत्यवर प्रेत्य विप्रस्य गर्हित ॥ १० १०९

भागवतपुराणेऽपि मनुमतस्य प्रतिपादन दृश्यते । तद्यथा—

अकिञ्चनाना हि धन शिलोञ्छन तेनेह निर्वर्तितसाधुसत्क्रिय ।
कथ विगर्ह्यं नु करोम्यधीश्वरा पौरोधस हृष्यति येन दुर्मति ॥ ६ ■ ३६

भिक्षावृत्तिर्दानग्रहण च ब्राह्मणाना शाश्वतवृत्तिरभवत् ।[६] दानेन स्वर्ग सुलभ इति

---

१ सभापर्वणि ४९ २० ।

२ अर्थशास्त्रे अध्यक्षप्रचारे १ ८ ।

३. पद्मपुराणे सृष्टिखण्डे ४० अध्यायतः । स्कन्दपुराणे काशीखण्डे पूर्वार्धे ४० अध्यायानुसारं वैश्य शूद्रयोर्वृत्त्या ये ब्राह्मणा जीविकार्जनं कुर्वन्ति ते शूद्रसदृशा सन्ति ।

४ सुत्तनिपाते वासेट्ठसुत्ते । ब्राह्मणवृत्तिरहितानामुत्तरभारतीयब्राह्मणानां परिचय कुमारिलेन वार्त्तिके दत्त –पृ० २०४ पण्यव्यापारिणस्ते सन्तीति ।

५ ऐतरेयब्राह्मणे ८ २४ २५ ऋग्वेदे १० ९८ ।

६. महाभारतानुसारं भिक्षा तु ब्राह्मी वृत्ति ब्रह्मचारिणा कृते । आदि० १७१ ७

मत्वा ब्राह्मणेभ्यो दानाय सर्वे समुत्सुका बभूवु । 'ब्राह्मण पात्रमस्ति नास्ति वा' अस्य विचार कर्त्तुं नासोदवसर साधारणजनस्य । शास्त्रकारास्तु भिक्षावृत्ति सदैव निन्दन्ति स्म । भिक्षायै केवल ब्रह्मचारिण सन्यासिनो वा योग्या मता । तद्यथा महाभारते—

नाब्रह्मचारी भिक्षावान् भिक्षुर्वाऽब्रह्मचर्यवान् । शान्ति० ७७ २२

पराशरस्तु योग्यब्राह्मणेभ्यो दान समर्थयति—

ब्राह्मणस्य मुख क्षेत्र निरूपमकण्टकम् ।
वापयेत् सर्वबीजानि सा कृषि सर्वकामिका ॥

किन्तु धनहीनेभ्योऽनधीयानेभ्यो वा ब्राह्मणेभ्यो यदि कस्मिश्चिदपि ग्रामे भिक्षा दीयते तर्हि सर्वेऽपि निवासिनस्तत्र दण्डार्हा भवन्ति । स ग्रामस्तु चोरमेव भोजयति ।[1]

आपस्तम्बधर्मसूत्रानुसार स्नातक आचार्यार्थं विवाहार्थं यज्ञाय पित्रोर्भरणपोषणाय वा भिक्षताम् । यदि कोऽपि नरोऽलस सन्नेवात्मतृप्त्यर्थं याचते तर्हि तस्मै भिक्षादान पापमेव । किन्तु भिक्षाद्वारा प्राप्त धन दीनहीनेभ्यो यदि दीयते तर्हि समीचीन तद भिक्षाकर्म ।[2] अन्येऽपि धर्मशास्त्रकारा विपत्तिकाले भिक्षा कर्तव्या—इति मन्यन्ते स्म ।[3] मनुष्यंजसम्पादनाय भिक्षा समीचीना मन्यते ।

वेदानुसार दानमतिशयमहत्त्व भजते । उपनिषदनुसार—त्रयो धर्मस्कन्धा यज्ञोऽध्ययन दानमिति प्रथम । आत्मज्ञानाय दानस्य महत्त्व स्वीकर्तव्यम्—तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा ।[4] ईदृशे प्रकरणे स्पष्ट प्रतिभाति यद् ब्राह्मणा दान दद्यु । मनुर्ब्राह्मणेभ्यो दानग्रहणमनुचितमिति प्रमाणयति ।

प्रतिग्रहसमर्थोऽपि प्रसङ्ग तत्र वर्जयेत् ।
प्रतिग्रहेण ह्यस्याशु ब्राह्म तेज प्रशाम्यति ॥ ४ १८६

पराशरो दानविधि विवेचयन्नाह—

अभिगम्योत्तम दानमाहूयैव तु मध्यम् ।
अधम याचमानाय सेवादान तु मध्यमम् ॥

भागवतेऽपि प्रतिपादितम्—

प्रतिग्रह मन्यमानस्तपस्तेजोयशोनुदम् ।
अन्याभ्यामेव जीवेत् शिलैर्वा दोषदृक् तयो ॥ ११, १७ ४१

अयोग्यपुरुषेभ्यो गृहीत दान तु भृशतर पापमिति लोकमत कल्हणेन प्रमाणितम् ।

---

१ पराशरस्मृतौ १ ६६ ।
२ आपस्तम्बधर्मसूत्रे २ ५ १० ।
३ वसिष्ठधर्मसूत्रे १२ २ ३ ।
४ बृहदारण्यके ४ ४ २२ ।

तदनुसारं पापेभ्यो राजभ्योऽग्रहारो न ग्रहणीयः। पापमतिः राजा चक्रवर्मासीत्। तस्मादग्रहारग्राहिणो ब्राह्मणान् प्रति कल्हणः कथयति—

ततोऽपि पापिनोऽभूवन् केऽपि तस्मिन् क्षणे द्विजाः।
तस्मादप्यग्रहारान् ये जगृहुर्गुह्यभोजिनः॥ राजत० ५. ४०२

क्षत्रियाणां जीविका सामान्यतो राजकर्मभिरभवत्। तेषामपि जीविकानुषङ्गिकरूपेण कृषिपशुपालनव्यापारादिरासीत्।[1] प्रायः क्षत्रियाः सैनिका बभूवुः। आयुधजीविनस्ते राजवेतनभोगिन आसन्।

वैश्यशूद्राणां जीविका कृषिपशुपालनव्यापारादिभिरेव प्रायोऽभवत्। शूद्राणां शिल्पकर्म प्राचीनयुगे सुप्रतिष्ठितमासीत्।[2] सेवाकर्मणोऽपि शूद्राणां जीविका समभवत्।

उपर्युक्तचातुर्वर्ण्यव्यवसायविधानं धर्मशास्त्रानुसारं सदैव प्रतिष्ठितमासीत्। अस्य प्रतिबन्धनं कठोरं नाभवत्। तथा—बहवो वैश्याः शूद्राश्च राजानो बभूवुः। वैश्यशूद्राणां सेनाऽपि युध्यते स्म। ते स्वव्यवसायानां विशारदा बभूवुः। तेषां विद्यार्थिनो दूरतोऽपि समागताः।

बहवो वैश्याः शूद्राश्च राजसभायां योग्यतानुसारं सर्वोच्चपदाधिष्ठिता बभूवुः। कश्मीरे क्षेम इति ख्यातो नापितोऽनन्तदेवस्य राजमन्त्री बभूव। हलधर इति कश्चित् वैश्यः तत्र सर्वाधिकारी बभूव। कालान्तरे स सेनापतिः प्रधानमन्त्रिपदाधिष्ठितश्चासीत्।[3]

आपत्तिकाले जीविकापि सर्वेभ्यो वर्णेभ्यो निर्धारिता वर्तते धर्मशास्त्रेषु। तदनुसारं ब्राह्मणः क्षत्रियवैश्ययोः, क्षत्रियः ब्राह्मणवैश्यशूद्राणाम्, वैश्यः शूद्रस्य च जीविकासाधनैर्जीवनयापनं विपत्तिकालपर्यन्तं कुर्वन्तु।[4]

## वर्णव्यवस्थाया विरोधः

जन्मना जातिनिर्धारणं केवलं परम्परावादिभ्य एव रोचते। बहवस्तत्राभवन् धर्मशास्त्रकाराः येषां मतेन जन्मना जातिस्तु तावदेव वृथा यावत्कर्मणाऽपि तस्या अभिव्यक्तिर्न भवेत्। उच्चवर्णेषु न सर्वेषां पुरुषाणां वर्णो जन्मना कर्मणा चोभयविधिभ्यां साधारण्येन प्रतिष्ठापनीयोऽभवत्। यदा जन्मनान्या जातिर्भवति कर्मणा च तस्या व्यतिरिक्ता जातिः प्रतिभाति तदा वर्णव्यवस्था मूलतो निरस्ता भवति।

---

१. कम्बोजसुराष्ट्रक्षत्रियश्रेण्यादयो वार्ताशस्त्रोपजीविनः अर्थशास्त्रे भेदपादने।

२ वैश्यः शूद्रस्तथा कुर्यात् कृषिवाणिज्यशिल्पकम्॥ पराशरस्मृतौ २ १९। एतत्समर्थितं महाभारते आदिप० १९९, ३८ इति श्लोकेन।

३ राजत० ७. २०२, २१०, २११।

४ भागवते ११.१७.४७ ४९

पुरा वैदिककर्माश्रित्य जातिवर्णो वा निबद्ध । तदधुना वैदिककर्मणामदर्शनं जातम् । अतएव वेदेषु प्रतिपादिता जातिरधुनानावश्यिकीति राष्ट्रिया नीति । सर्वप्रथम प्रसिद्धो महापुरुषो गौतम एव जन्मना जातेर्विरोध कृतवान् । तद्यथा—

न जच्चा वसलो होदि न जच्चा होदि ब्रह्मणो ।
कम्मुना वसलो होदि कम्मुना होदि ब्रह्मणो ।।

गौतमस्य सघे नासीत जन्मना जातेरस्तित्वमपि । सघे जन्मना केवल मानवजातिरासीत । नापितोऽपि सघे प्रथम प्रव्रजित पश्चात्प्रव्रजिताना क्षत्रियाणामपि वन्द्योऽभवत् । शाक्या सघे समाविष्टा सन्त शाक्यत्वविहीना बभूवु । गौतमानुसार जाति-कुल गोत्रादीनि सघे तथैव विलीनानि यथा नदीनदा समुद्रे विलय यान्ति ।[१]

अपरेऽपि भारतीयसस्कृतेरुन्नायका अनुयायिना जातिविहीनत्वमेव व्यवस्थितवन्त । शङ्कराचार्य रामानुज रामानन्द चैतन्यादयो जन्मना जातेर्नि सारत्व प्रदर्शितवन्त । तेषामनुयायिन सर्वेभ्यो वर्णेभ्य समागता दीक्षिता सन्त समाना बभूवु ।[२]

भारतस्यैक्यसम्पादने राजनीतिकसघटने वा जातिश्चापि उच्चावचत्व स्पृश्यास्पृश्यत्व च बाधक बभूव । भारतीयराजाना पारस्परिको भेदभाव पृथक्त्व च प्रायशो जातिवर्णाधारितमासीत ।[३]

---

१ चुल्लवग्गे ७ १ ४, १ १ ४

२ राधाकृष्णन् महोदय इमा प्रवृत्ति परिलक्ष्य लिखति—The distinctions of caste do not touch the nature of the soul At least they belong to the bodies and determine the duties which different individuals owe to society but caste has nothing to do with the qualities of soul Some of the Alvars worshipped by the Brahmins were Sudras Ramanuja allows that no distinctions should be made among the lovers of God Ramanuja preaches equality in worship and proclaims that Bhakta transcends all caste distinctions He admitted the pariahs to the temple at Melkote. Indian Philosophy Vol II p 708

Śankara ignored caste distinctions in the monistic order, he founded Ibid p, 438

२ उपयार्थोल्लिखितेन वृत्तेन प्रमाणितम्—Jaya singh of Jaipur wrote to Aurangzeb in later days that his family would be polluted even by inter dining with the Bhonslas, as they were far below him in social rank and status and belonged to an inferior caste N K, Behre The Background of Maratha Renaissance in the Seventeenth Century Page 150

## वर्णव्यवस्थायाः समीचीनत्वम्

यावत्कालं वर्णव्यवस्थाया मूलाधारं कर्माभवत् तावन्मात्रं सा समाजायावश्यमेव लाभप्रदा बभूव । वैदिककाले जन्मना शूद्रोऽपि ब्राह्मणोचितानि कर्माणि कुर्वन् ब्राह्मण एव बभूव । वैदिककालस्य पश्चात् जन्मना जातिं प्रचलन्ति स्म । अतएवास्मिन्नेवोत्तर-कर्मभिरुच्चतरजातिर्हि जन्मनि प्राप्ता ।

जन्मना जात्यनुसारं 'दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः' एवं लोक-धारणा स्यात् । इयं स्थितिः ब्राह्मणानां पतनाय बभूव । वंशानुक्रमेणाभ्युत्थानं धारणीय मार्यैवासीत् । हीनवर्णानामभ्युत्थानाय नासीत् किंचिदपि प्रोत्साहनम् ।

विविधवर्णेषु विभिन्नजातिषु च पारस्परिकसाम्यभावस्याभावोऽपि वर्णव्यवस्थाया दोषाय निर्दिशति । शूद्रान् घृणा यथा तस्य महर्षेर्हृदये व्याप्नुवन् येन दृष्टमन्वदेतद् यत्र ब्राह्मणो मनुष्येषु श्रेष्ठः क्षत्रियो वैश्यश्च वैश्य शूद्रेण शूद्र । राष्ट्रस्यैक्यमुन्नत्वमपि जातिव्यवस्थया किञ्चिद्विनष्टमेव दृश्यते । व्यावसायिकवैशिष्ट्यमेव वर्णव्यवस्थाया श्रेष्ठगुणः प्रतिभाति ।

## कुटुम्बम्

न कदापि ब्राह्मणादीनामुच्चवर्णानां विशेषावकाशा सर्वथा अस्थाने नियोजिता इति मत्वा जातिप्रथा विगर्हिता । प्रथमं तावदिमे विशेषाधिकारा वस्तुतः उच्चवर्णानां महत्त्वाद्गतं तपसा त्यागेन समाजसेवया वा सम्प्राप्ता । अपरं च विशेषाधिकारैः सह कर्तव्यं तेषामनुवर्तिनामस्य सम्भावना निर्धारिता बभूव । तत्र यथा सम्भाव्यमिति मनुर्निर्दिशति—

अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषम् ।
षोडशैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य च ॥ ८. ३३७
ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत् ।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः ॥ ८ ३३८

समाजस्य द्वितीयं सोपानं कुटुम्बमेव । कुटुम्बस्यादर्शस्थितिं कामयमानेन ऋषिणा अथर्ववेदे प्रोक्तम्—

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः ।
अन्यो अन्यमभिहर्यत वत्सं जातमिवाघ्न्या ॥
अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः ।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम् ॥

मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥ ३ ३० १-३

वसुधैव कुटुम्बकमिति सिद्धान्तेन स्पष्टमेव प्रतिभाति यत् कुटुम्बमेव स्पृहणीयसत्या रूपेण सम्प्रतिष्ठितम्, यस्य सदस्या परस्परसौहार्दं सहानुभूतिं विश्वास च तावन्मात्र मनुभवन्ति यावदन्यत्र दुर्लभमेव भवति । अन्यथा वसुधायाः कुटुम्बकत्वं कथमिच्छेत् ? प्राचीनकाले कौटुम्बिकसदस्यतामात्रेण व्यक्तित्वस्य विकासाय प्रचुरावसरोऽविद्यत ।

प्राचीनयुगे प्रारम्भत एव बृहत्कुटुम्बस्यायोजनं प्रमीयते । कुटुम्बस्य शाश्वतरूपेण सदस्या — माता, पिता, पुत्र, कन्या, भ्राता, स्वसा, पति, पत्नी चासन् । कुटुम्बेन सम्बद्धा सुहृदो भृत्याश्च भवन्ति । अपरेऽपि सत्पुरुषाणां कुटुम्बे वसन्ति स्म । तथा हि महाभारते—

चत्वारि ते तात गृहे वसन्तु श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो भगिनी चानपत्या ॥
उद्योग ३३ ७०

एतेषु प्रत्येकस्य कुटुम्बे का प्रतिष्ठा, किमुत्तरदायित्वं चासीदिति विवेचनीयम् ।

## मातापितरौ

भारते 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' इति प्रसिद्धमेव मातुः गौरवप्रतिष्ठात्मकं वाक्यम् । पिता पुत्रस्य न केवलं जन्मदाता अपितु तस्य व्यक्तित्वस्य विकासकर्त्ताऽपि भवति । पितुः शासने पुत्रस्य सर्वोच्चकल्याणं विहितम् ।[1] वैदिककुटुम्बे पितुर्निरङ्कुशाधिकारोऽभवत् तद्यथा—ऋज्राश्वः स्वपित्राऽन्धीकृतो यतः स प्रजानां पशून् हिंसितवानिति श्रूयते । विश्वामित्रः स्वपञ्चाशत्पुत्रान् बहिष्कृतवान् । शुनःशेपस्य पिता तं विक्रीतवान् ।

शतपथब्राह्मणानुसारं यदा पिता प्रवासाद् गृहे समागच्छत् तदा पुत्रा तं शिवमुपस्पृशन्ति स्म, तस्मै सर्वाणि वस्तूनि प्रस्तुतानि कुर्वन्ति स्म च ।[2] पितरो देवो मतौ । तद्यथा—मातृदेवो भव, पितृदेवो भव इति महाभारते पितृकर्तव्यं निर्दिष्टम्—

पित्रा पुत्रो वयस्थोऽपि सततं वाच्य एव तु ।
यथा स्याद् गुणसयुक्तः प्राप्नुयाच्च महद् यशः ॥ आदि ४२ ४

महाभारतानुसारं पित्रोः पूजनं सर्वधर्माणां गरीयः कार्यम्, तद्यथा—

माता पित्रोर्गुरूणां च पूजा बहुमता मम ।
इह युक्तो नरो लोकान्यशश्च महदश्नुते ॥

१ पितेव कितवं शशास इति ऋग्वेदे २ ३३ १२ ।
२ शतपथे १२ ४ १ ७ ।

यच्च तेऽभ्यनुजानीयुः कर्म तात सुपूजिता ।
धर्माधर्मविरुद्ध वा तत्कर्तव्य युधिष्ठिर ॥
एत एव त्रयो लोका एत एवाश्रमास्त्रय ।
एत एव त्रयो वेदा एत एव त्रयोऽग्नय ॥

माता सम तीर्थं गतिस्त्राण प्रपा वा नास्ति । स्कन्दपुराणानुसारम्—

कुक्षौ सधारणाद्धात्री जननाज्जननी तथा ।
अङ्गाना वर्धनादम्बा वीरसूत्वेन वीरसू ॥
शिशो शुश्रूषणाच्छक्तिर्माता स्यान्माननाच्च सा ॥
पिता स्वर्ग पिता धर्म पिता हि परम तप ।
पितरि प्रीतिमापन्ने सर्वा प्रीणन्ति देवता ॥

माहेश्वरखण्डे कुमारिकाखण्डे ४ ८९-१०० श्लोकाः ।

आदर्शजनपदस्यैवमपि लक्षणमासीद्यत् तत्र—

न च पित्रा विभज्यन्ते पुत्रा गुरुहिते रता । आदि० ६३ १२

रामायणे रामस्य चरितगाथा पित्रोराज्ञापालने सर्वोच्च सम्प्रतिष्ठिता । तस्मिन्नेव युगे महाराजेनाशोकेन पित्रो परिपालनमनुवर्तन च प्रजासु प्रतिष्ठापयितुकामेन शिलालेखेपूत्कारितम्—साधु मातरि च पितरि च सुश्रूसा ।[1]

ये तु पित्रो परित्याग कुर्वन्ति स्म तेषा समाजे बहिष्कारोऽभवत् । तथा हि—

मातापित्रोरभाक श्राद्धे नार्हति केतनम् । विष्णु० ३ १५.७-८

न केवलमिह जीवनकाले पित्रो सन्तोषाय प्रयतितव्यम्, अपितु तयोर्मरणानन्तरेऽपि प्रतिदिनं तर्पण कर्तव्यमेव ।

कृत्रिममातृत्वमपि क्वचित् स्निग्धतम वर्तते । कश्मीरेषु 'सुय्या' इति काचिच्चाण्डाली महापथ-सम्मार्जनकाले मृत्तिकापात्रे निधापित शिशुमेक दृष्ट्वा सुतक्षोरामवत् । सा तु स्वस्पर्शेन शिशु दूषित नाकरोत्, किन्तु त कस्यचित् शूद्रस्य गृहे निधाय तस्य सम्पोषण कारयामास । स तु शिशु कालान्तरे कश्मीराणा श्रेष्ठतमो मन्त्रविद् सुय्य इति विख्यातो बभूव ।[2]

---

१ गिरिनगरस्य तृतीये शिलालेखे ।
२. भागवते १० ४५ २२ पतद सम्यक् समर्थितम् ।

# पुत्रः

भारतीयसंस्कृतौ पुत्रस्य बहुविधं महत्त्वं विद्यते । तथाहि—

पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः ।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ मनुस्मृतौ ६ १३९

'आत्मा वै जायते पुत्र' इति सिद्धान्तेन सर्वश्रेष्ठमिदं साधनं पुत्रनाम येन पितुरमरत्वं सिध्येत । पुत्राद्विना पितॄणामृणादपि मुक्तिर्न सम्भवति ।
यथा महाभारते प्रोक्तम्—

यतस्व यत्नवांस्तात सन्तानाय कुलस्य नः ।
आत्मनोऽर्थेऽस्मदर्थे च धर्म इत्येव वा विभो ॥ आदिपर्वणि १३ २४

ऋषयस्तु वैदिकयुगे बहुसंख्यकपुत्रान् वीरान् वा प्राप्तुमकामयन्त[1] ।

सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति ।
सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥ ऋग्वेदे १ ९१ २०

परस्परमाश्रयणमपि पितापुत्रयो वैदिककालत एव विदितचरम् । तथा हि

'तस्मात् पूर्ववयसे पुत्राः पितरमुपजीवन्ति । उत्तरवयसे पुत्रान् पितोपजीवति ।'
तस्मिन्युगे पुत्रं प्रति पितुः स्नेहस्तथाप्यभिवर्धत् प्रियं पुत्रमुरसि धत्ते ।' मनुष्यलोकस्य विजयः पुत्रेणैवापत्तनायोऽभवत् । नान्येन कर्मणा ।

महाभारते पुत्रस्य सत्यकल्पं प्रमाणितम् । स इह लोके परलोके च तारयति ।[3] तदपि निरयपतनाद्रक्षति ।

महाभारते पुत्रस्य महत्त्वं स्पष्टं प्रदर्शितम्—

त्वदङ्गेभ्यः प्रसूतोऽयं पुरुषात् पुरुषोऽपरः ।
सरसीवामलेऽऽत्मानं द्वितीयं पश्य वै सुतम् ॥
यथा ह्याहवनीयोऽग्निर्गार्हपत्यात् प्रणीयते ।
तथा त्वत्तः प्रसूतोऽयं त्वमेकः सन् द्विधा कृतः ॥ आदि ७४ ६५-६६

महाभारते ग्रन्थे पुत्रस्नेहस्य मनोहारि निदर्शनमित्थं प्राप्यते—

न वाससां न रामाणां नापां स्पर्शस्तथाविधः ।
शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ॥

---

१ ऋग्वेदे ७ ? ??, ??, १९, ?४, ३ १६ ५—६

२. शतपथे ?? ?. ३ ४

३ इह वा तारयेत् पुत्रः पुत्रो वा प्रेत्य भारत ।
सर्वथा तारयेत्पुत्रः पुत्र इत्युच्यते बुधैः ॥ आदिपर्वणि १५८ ५

स्पृशतु त्वां समाश्लिष्य पुत्रोऽयं प्रियदर्शनः ।
पुत्रस्पर्शात् सुखतरः स्पर्शो लोके न विद्यते ॥

पुण्यार्जनदिशायामपि पुत्रोत्पत्तेर्महत्त्वं सुप्रतिष्ठितमेव । तथाहि—

वरं कूपशताद् वापी वरं वापीशतात् क्रतुः ।
वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् ॥ आदिपर्वणि ७४ १०२

पश्चात्तियुगे कालिदासः पुत्रसङ्गमसुखं वर्णयतिस्म—

आलक्ष्यदन्तमुकुलाननिमित्तहासै—
रव्यक्तवर्णरमणीयवचः प्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥

## कन्या

कुटुम्बे कन्यायाः समादर आसीत् । वैदिककाले भ्रातुर्भगिनीं प्रति सहायशीलत्वं स्मरणार्हमेवाभवत् ।[1] तदा कन्याया विवाहः चिन्त्या गम्भीरसमस्या नासीत् । ब्रह्मचर्येण कन्या युवानं विन्दते पतिमिति प्रसिद्धम् । इदमेव परिलक्ष्य कुटुम्बेऽपि कन्याया व्यक्तित्वविकासाय प्रयत्नोऽक्रियत । तत्र बहवः कन्याः नैष्ठिकब्रह्मचारिण्यो विदुष्यश्चाभवन् ।

विवाहस्य पश्चात्कन्या पितुर्गृहात् पतिगृहं गच्छति । अनेन कारणेन कन्यायाः स्थानं कदापि कस्मिंश्चिद्देशेऽपि पुत्रसमं नाभिमतम् । पुत्रस्तु पितुर्वृद्धावस्थायां सहायो भवति । तथापि कन्याया व्यक्तित्वे काऽपि विशेषता वर्तते यत्र सा पितुः स्नेहास्पदं भवति ।[2] अत्र किम्—'केचित् पितरः पण्डिता दुहिता जायेत' इत्याकाङ्क्षन्ति स्म ।[3]

पश्चात्तियुगे धार्मिकदृष्ट्या कन्याया महिमा समवर्धत । तथाहि महाभारते काचित्कन्या भाषते—

आकाङ्क्षन्ते च दौहित्रान् मयि नित्यं पितामहाः । आदिपर्वणि १५८ ६

तस्याः पिता स्वमतं प्रदर्शयति—

मन्यन्ते केचिदधिकं स्नेहं पुत्रे पितुर्नराः ।
कन्यायां केचिदपरे मम तुल्यावुभौ स्मृतौ ॥[4]

---

१ ऋग्वेदे १ ६५ ४

२ नित्यं निवसते लक्ष्मीः कन्यकासु प्रतिष्ठिता ।

३ बृहदारण्यकोपनिषदि ६ ४ १७

४ राज्यश्रीविषये तस्य माता यशोवती कथयति—केवलं [illegible] सुदूरेण तनयस्नेहादतिरिच्यते दुहितृस्नेहः ।

यस्या लोकाः प्रसूतिश्च स्थिता नित्यमथो सुखम् ।
अपायां तामहं बालां कथमुत्स्रष्टुमुत्सहे ॥ आदिपर्वणि १५९ ३७,८३

महाभारतकाले राज्यभागिनी कन्यापि विभाविता ।

विवाहकाल एव कन्यायाः स्थितिश्चिन्तनीयासीत् । तद्यथा सीता रामायणे निवेदितवती—

पतिसंयोगसुलभं वयो दृष्ट्वा तु मे पिता ।
चिन्तामभ्यगमद्दीनो वित्तनाशादिवाधनः ॥ अयोध्या ११९ ३५

कालिदासोऽपि समर्थयति—

अर्थो हि कन्या परकीय एव तामद्य सम्प्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा ॥

पञ्चतन्त्रेऽपि तन्त्रीव श्रूयते—

पुत्रीति जाता महतीह चिन्ता कस्मै प्रदेयेति महान्वितर्कः ।
दत्त्वा सुखं प्राप्स्यति वा न वेति कन्यापितृत्वं खलु नाम कष्टम् ॥

प्रतिपादितं तत् सोमदेवेन—

स्थानप्राप्तिविहीना हि गीतिसत्कुलकन्यका ।
उद्वेजिनी परस्यापि श्रूयमाणैव कर्णयोः ॥
विद्येव कन्यका मोहादपात्रे प्रतिपादिता ।
यशसे न न धर्माय जायेतानुशयाय तु ॥ कथासरित्सागरे ५ १ २५–२६

तथापि क्वचित् पुरापि कन्यका विवाहादि-विषये स्वतन्त्रा बभूव । सा तु स्वयमेव मातापितृसमक्षं वरणीयं जनं प्रस्तावितवती ।[१]

कन्यकाश्च कुलगृहे ललितकलाभिः क्रीडाभिः कौतुकविनोदविलासादिभिश्च मनोरञ्जनं वैदिककालादेव दृश्यते । पार्वत्या आदर्शेन भारते कन्यात्वं शाश्वतरूपेण प्रतिष्ठितम् ।

## भ्राता

भ्रातुर्ज्येष्ठाधिकारो वैदिककालादेव दृश्यते । तद्यथा—कनीयसो भ्रातुर्विवाहो ज्येष्ठस्य विवाहात्प्राङ् न कर्तव्य इति ।[२] सम्भवतो ब्राह्मणानां कुटुम्बेषु धर्माभ्युदयार्थमेव भ्रातॄणां समवेतवसनं न साधु सम्मतम् । गौतमानुसारं विभागे धर्मवृद्धिः ।[३] अस्या दिशाया मनुमतमुचितं प्रतिभाति—

---

१ महाभारते आदिपर्वणि ७६ २९ ।
२. अथर्ववेदे ६ ११२ ।
३. गौतमे २८ ४ ।

एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया।
पृथग्विवर्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया॥ ९.१११

समर्थयति बृहस्पतिः—

एकपाकेन वसतां पितृदेवद्विजार्चनम्।
एकं भवेद् विभक्तानां तदेव स्याद् गृहे गृहे॥

महाभारते व्यावहारिकदृष्ट्या भ्रातॄणां विभागोऽवाञ्छनीय एव।

तद्यथा—

विभागं बहवो मोहात् कर्तुमिच्छन्ति नित्यशः।
ततो विभक्तास्त्वन्योन्यं विकुर्वन्त्यर्थमोहिताः॥
ततः स्वार्थपरान् मूढान् पृथग्भूतान् स्वकर्मणि।
विदित्वा भेदयन्त्येनानमित्रा मित्ररूपिणः॥
विदित्वा चापरे भिन्नानन्तरेषु पतन्त्यथ।
भिन्नानामतुलो नाशः क्षिप्रमेव प्रवर्तते॥[1]

भ्रातॄणां पारस्परिकव्यवहारमादर्शयता व्यासेन प्रोक्तम्—ज्येष्ठो भ्राता कनीयसः प्रति तथा व्यवहरेद्यथाचार्यः शिष्यं प्रति व्यवहरति। कनीयांसो गुरुमेवानुवर्तन्ते। ज्येष्ठो दीर्घदर्शी भवेत्तर्हि कनीयांसोऽपि तादृशा भवन्ति। ज्येष्ठो यथाकालमन्धो जडो विद्वान्वा भवेत्। कनीयसामपराधं दृष्ट्वापि न जानामीति दर्शयेत्, तथापि तेषामपराधप्रवृत्तिं निरोद्धुं यतेत। यदि ज्येष्ठभ्रातृविचारोऽशुद्धो भवति तर्हि समस्तं कुलं विनश्यति। स तु मूर्तीविपर्ययेण कुलमुपहतं नयति। यदि ज्येष्ठोऽपि सन् कौटिल्यमाचरेत्तर्हि स ज्येष्ठांशार्हो न भवति, न च ज्येष्ठसमानो भवति। राजा तं दण्डयेत्। यदि कनीयान् भ्रातापि पापकर्मणि रतस्तर्हि सोऽपि पैतृकसम्पत्तौ स्वभागस्याधिकारी न भवति।[2] महाभारते पाण्डवानाम्, रामायणे रामादीनां भ्रातृत्वं स्मरणार्हमेव।

पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः।
पुत्रवच्चापि वर्तेरन् ज्येष्ठे भ्रातरि धर्मतः॥
ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः।
ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः॥
यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः।
अज्येष्ठवृत्तिर्यस्तु स्यात्स सम्पूज्यस्तु बन्धुवत्॥ ९.१०८-१११

ज्येष्ठयवीयसोर्भार्ययोर्विषये भ्रातॄणां मान्यतां निदर्शयता मनुना प्रोक्तम्—

---

१. आदिपर्व [illegible]।१८—२०। अस्मिन् प्रसङ्गे सुन्दोपसुन्दविभाजकयोः कथा तत्रैव द्रष्टव्या।
२. महाभारतानुशासनपर्वणि।

नाभुक्तवति नाश्नाति नासंविष्टे च भर्तरि ।
न संविशामि नाश्नामि सदा कर्मकरेष्वपि ॥
क्षेत्राद्वनाद्वा ग्रामाद् वा भर्तारं गृहमागतम् ।
अभ्युत्थायाभिनन्दामि आसनेनोदकेन च ॥
प्रमृष्टभाण्डा मृष्टान्ना काले भोजनदायिनी ।
संयता गुप्तधान्या च सुसम्मृष्टनिवेशना ॥
यच्च भर्ता न पिबति यच्च भर्ता न सेवते ।
यच्च नाश्नाति मे भर्ता सर्वं तद् वर्जयाम्यहम् ॥
नित्यमार्यामहं कुन्तीं वीरसूं सत्यवादिनीम् ।
स्वयं परिचराम्येतां पानाच्छादनभोजनैः ॥
नैतामतिशये जातु वस्त्रभूषणभोजनैः ।
नापि परिवदे चाहं तां पृथां पृथिवीसमाम् ॥
अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम् ।
एकाहं वेद्मि कोशं वै पतीनां धर्मचारिणाम् ॥
प्रथमं प्रतिबुध्यामि चरमं संविशामि च ।
नित्यकालमहं सत्ये एतत् संवननं मम ॥ वन०

यत्तु कथ्यते—यत्र नार्यस्तु पूज्यन्ते-तद्धि सत्यमेव । महाभारतानुसारं तु दुष्यन्त 'वासोभिरन्नपानैश्च पूजयामास भारत' इति शकुन्तलाविषये तथ्यम् । सन्तोषजननमेव पूजा स्त्रीणाम् । मनुस्मृतावपि महाभारतीयादर्शा समर्थिता विद्यन्ते।[1]

पत्नीनां गृहस्याधिकविनियोजनेऽधिकारोऽविद्यतेति कामसूत्रेऽपि प्रतिपादितम्—साव-त्सरिकमाय सख्याय तदनुरूपं व्ययं कुर्यात् । अपरं च साधारणगृहेषु पत्नीनां कर्तव्य-किमासीदिति कामसूत्रे निर्दिशितम् । तद्यथा—भोजनावशिष्टाद् गोरसात् सारग्रहणं तथा तैलगुडयोः कर्पासस्य च सूत्रकर्तनम्, सूत्रस्य वानम्, शिक्यरज्जुपाशवल्कल-सङ्ग्रहणम्, कुट्टनकण्डनावेक्षणम्, आचाममण्डतुषकणकुटयङ्गाराणामुपयोजनम्, भृत्यवेतनभरणज्ञानम्, कृषिपशुपालनचिन्तावाहनविधानयोगाः, मेषकुक्कुटलावकशारिकापरभृतमयूरवानर-मृगाणामवेक्षणम्, दैवसिकायव्ययसम्पिण्डीकरणमिति विद्यात् ।[2] वात्स्यायनानुसारं तु पत्नी-कापि मूर्तिमती देवी बभूव ।[3]

ईदृशी पत्नी तु त्रिवर्गसाधनमासीत्, न केवलं कामभोगसाधनम् ।

---

१. महाभारते आदिपर्वणि ६९.४३, मनुस्मृतौ ५.१५०, ९. ११,१३ ।
२. कामसूत्रे ४. १. ३२, ४ १.३३ ।
३. कुटुम्बचिन्तामात्मनि सन्निवेशयेत् शुभशय्याद्यर्था च स्वस्थस्थानि मनोज्ञानि कारयेत् । कामसूत्रे ४.१.६-७ ।

भागवते दाम्पत्यजीवनस्य दिव्यत्वं प्रतिष्ठितम् । तथाहि—

या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा ।
हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥ ७ ११ २९

प्रियया सह नर्ममनोविनोदोऽपि सम्भवतीति भागवते निदर्शितम् । तद्यथा—

अयं हि परमो लाभो गृहेषु गृहमेधिनाम् ।
यन्नर्मैर्नीयते याम प्रियया भीरु भामिनि ॥ १० ६० ३१

भारतीयकौटुम्बिकजीवने दाम्पत्यस्योच्चादर्शः पार्वतीशिवयोः, सावित्रीसत्यवतोः, दमयन्तीनलयोः, सीतारामयोश्चरितगाथासु प्रतिष्ठितः । काव्येषु दाम्पत्यस्य ललितभावः प्रायशः प्राप्यते । तथाहि कालिदासस्योक्तिः—

'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ' इति ।

## प्रतिवेशिनः सुहृदश्च

कौटुम्बिकसस्थाने प्रतिवेशिना सुहृदा च महत्त्वपूर्णं पदं विद्यते । कौटुम्बिकविकासे तेषां सहायत्वं वाञ्छितम् । वैदिककालत एव मैत्रीभावस्य दिव्यादर्शः समाजस्य समक्षमभूत् । द्यावापृथिव्यौ इन्द्राविष्णू मित्रावरुणौ च मित्रोचितसाहचर्यं प्रतिष्ठापयन्ति तदनुसृत्य ऋग्वेदे निगदितम्—

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ॥ १० ७१ ६

महाभारते सन्मित्रस्य प्रशंसा कृता—

मौनात्सम्बन्धमालोके विशिष्टं सगतं सताम् ।
सद्भिः सह नरश्रेष्ठ प्रवदन्ति मनीषिणः ॥ द्रोणपर्वणि ४ १३

रामायणेऽपि मित्रस्यौदार्यं प्रदर्शितम्—

आढ्यो वापि दरिद्रो वा दुःखितः सुखितोऽपि वा ।
निर्दोषो वा सदोषो वा वयस्यः परमा गतिः ॥
धनत्यागः सुखत्यागो देहत्यागोऽपि वा पुनः ।
वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥ किष्कि० ८ ८-९

मैत्रीभावस्य समारम्भः सोत्सवः सोल्लासः च धार्मिकविधिना सम्पादितः । रामसुग्रीवयोरग्निसाक्षिको मैत्रीसमारम्भो रामायणे वर्णितः—

रोचते यदि वा सख्यं बाहुरेष प्रसारितः ।
गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा[१] ॥

---

१ मित्राणां सगमने पाणिपीडनरीतिरासीदिति पद्मपुराणे ।
दृष्ट्वैतान् स्पृश नीत्र सुहृदश्चिरसगता ॥ सृष्टिखण्डे १५ २९ ।

एतत्तु वचनं श्रुत्वा सुग्रीवेण सुभाषितम् ।
स प्रहृष्टमना हस्तं पीडयामास पाणिना ॥
हृद्यं सौहृदमालम्ब्य पर्यष्वजत पीडितम् ।
ततो हनूमान् सन्त्यज्य भिक्षुरूपमरिन्दम ॥
काष्ठयोः स्वेन रूपेण जनयामास पावकम् ।
दीप्यमानं ततो वह्निं पुष्पैरभ्यर्च्य सत्कृतम् ॥
तयोर्मध्येऽथ सुप्रीतो निदधे सुसमाहितः ।
ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् ॥
सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ।
त्वं वयस्योऽसि मे हृद्यो ह्येकं दुःखसुखं च नौ ।
सुग्रीवं राघवो वाक्यमित्युवाच प्रहृष्टवत् ॥

किष्किन्धाकाण्डे ५ १२-१९

तस्मिन् रामायणयुगे मैत्रीभावः पूर्णम् आसीत्, तदनुकूला धारणासीत्—उपकार-फलं मित्रम् ।[1]

एतत्सर्वं पुनः पुनः प्रवर्णितं पञ्चतन्त्रे । तथा हि

किं चन्दनैः सकर्पूरैस्तुहिनैः किं च शीतलैः ।
सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोडशीम् ॥ २ ६१
केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम् ।
आपदां च परित्राणं शोकसन्तापभेषजम् ॥ २ ६२

सर्वोत्सवेषु प्रतिवेशिना सहभोगोऽपेक्षितोऽभिमतः । तद्यथा मनुः—

प्रतिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे ।
अर्हावभोजयन्विप्रो दण्डमर्हति माषकम् ॥ ८ ३९२

मत्स्यपुराणेऽपि तदेव प्रतिपादितम् । ब्राह्मणान् भोजयन् यः प्रतिवेश्यानामन्त्रयति स पापभाग्भवति पुण्यं नाप्नोति च । स तु राज्ञा दण्डनीयः ।[2]

## भृत्याः

भृत्यस्य कौटुम्बिकविन्यासे महत्त्वमासीत् । यथा रामायणे निगदितम्—

---

१ किष्किन्धाकाण्डे ७।४-८-११ ।

२. मत्स्यपुराणे २२७ अध्याये ।

न ह्यर्थास्तत्र तिष्ठन्ति न दारा न च बान्धवा ।
सुप्रीतो भृत्यवर्गश्च यत्र तिष्ठति राघव ॥ उत्तरकाण्डे ८४.६

भृत्यास्तु गृहे सुखं निवसन्ति स्म । तथा मनुर्निर्दिष्टवान्—

भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैव हि
भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती ॥ ३ ११६

पञ्चतन्त्रानुसारं तु कस्यचिद् राजाऽपि अभ्युदयार्थं भृत्यैः सह सद्व्यवहारं आवश्यकः तथा—

कारुण्यं संविभागश्च यस्य भृत्येषु सर्वदा ।
सम्भवेत स महीपालस्त्रैलोक्यस्य रक्षणे ॥

## कौटुम्बिकं सौरभ्यम्

न केवलमिह जीवने, किन्तु परस्मिन्नपि जीवने कौटुम्बिकजनैः सह सम्मिलनं स्यादिति प्रमाणितमथर्ववेदे—

स्वर्गं लोकमभि नो नयासि सं जायया सह पुत्रैः स्याम ।
गृह्णामि हस्तमनु मैत्वत्र मा नस्तारीन्निर्ऋतिर्मो अरातिः १२ ३ १७

यद्यपि बहुसन्ताने कष्टं नैसर्गिकमेवानुबुद्धम्[1], तथापि कुटुम्बस्य वैपुल्यं वाञ्छनीयमेव । तथाहि महाभारते—

येषां च बहवः शूरा ज्ञातयो धर्मसाधिनः ।
ते जीवन्ति सुखं लोके भवन्ति च निरामयाः ।
बलवन्तः समृद्धार्था मित्रबान्धवनन्दनाः ।
जीवन्त्यन्योन्यमाश्रित्य द्रुमाः काननजा इव ॥

आदि १५० ३४-३५

धार्मिकक्रियाकलापेषु कुटुम्बस्य प्राय सर्वे सदस्या सहकारिणो बभूवु ।[2] अनेन

---

१ ऋग्वेदे १ १६४ ३२ ।

2 The sacrificer s near relatives who always share the same roof form a family The Yajamana touches the Adhvaryu, the wife touches the sacrificer, the sons and brothers of the sacrificer touch the wife They are all covered with a fresh piece of cloth. History of Dharmasastra Vol II, pt II, p 1158,

प्रकारेण सह पुण्यार्जनमभवत्। पापनिवारणमपि सर्वेषां सह भवत्विति योजनाथर्ववेदे वर्तते—

यन्मे माता यन्मे पिता भ्रातरो यच्च मे स्वा यदेनश्चकृमा वयम्।
ततो नो वारयिष्यतेऽयं देवो वनस्पतिः ॥ १० ३ ८

यदि कोऽपि जनः स्वकुटुम्बस्य सदस्यानधिक्षिपति स्म तर्हि सामाजिकाः तं धिक्कुर्वन्ति स्म। राजापि कौटुम्बिकशालीनतायाः प्रतिष्ठायै प्रायतत। तत्र विधानमासीत् मनुस्मृतौ—

मातरं पितरं जायां भ्रातरं तनयं गुरुम्।
आक्षारयञ्छतं दाप्यः पन्थानं चाददद् गुरोः ॥ ८ २७५

कौटुम्बिकविन्यासो न केवलमात्मसम्बन्धिनामुपकारायाभ्युदयाय वा भवति, अपितु तेनात्महितं सिध्यतीति पुराविदां धारणासीत्। तथा हि बृहदारण्यके आत्मार्थस्य व्याख्या कृता—

न वारे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति। इत्थं जाया, पुत्रः, वित्तम्, देवाः, सर्वाण्यप्यात्मनः कामाय प्रियाणि भवन्ति।[1]

## सम्पत्त्यधिकार

कुटुम्बस्य कतिपयसदस्यानां कुटुम्बसम्पत्तौ स्वामित्वमासीत्। यदि तेषु सदस्येषु कोऽपि स्वभागं पृथक्कर्तुमियेष स तत्कालीनधर्मव्यवस्थया तं भागं प्राप्तवान्। धर्मपदावलीषु—विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापनम्।

वैदिकयुगे पितुर्जीवनकालेऽपि पुत्रः स्वभागं प्राप्तुमशक्नोत्।[2] ईदृशः पुत्रः सामान्यतमासीत्। गौतमानुसारं—न भोजयेत् पित्रा वाकामेन विभक्तान्।[3] पितरि मृते प्रव्रजिते वा पुत्राणामिच्छानुसारं विभागो निर्णीतः। प्रायो वयस्कानामेव विभागोऽभवत्। बालकानां भागा मातृबन्धुषु ग्रामवृद्धेषु वा स्थापिताः।[4] मनुस्मृतावविभाज्यानि निर्दिष्टानि—

वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥ ९ २१९

---

१. बृहदारण्यके ४ ५ ६।
२. ऋग्वेदे १ ७० ५, तैत्तिरीयसंहितायाम् । ३ १ ९ ४।
३ गौतमे १५ १५, १९।
४. आपस्तम्बे ३.५।

सम्पत्तौ स्त्रीणामधिकारोऽभवत् । सामान्यतो विभागार्थं तासां गणना पुत्रसमं कृता ।

## अस्पृश्यता

वैदिकयुगेऽस्पृश्यतायाः प्रादुर्भावो नासीत् । शनैः शनैः आहारशुद्धेः विवेकः समवर्धत । ब्राह्मणा अपि साधारणतः सहभोजनं नाकुर्वन् ।[1] अस्यां दिशायां सम्बन्धमात्रेणाशुद्धेः कल्पना कृता । समाजे ये जनाः सात्त्विकवृत्तेः परावर्तितास्तेषां वस्तूनि न ग्राह्याणीति स्पष्टविचारः प्रतीयते ।

अपरं च संसर्गदोषेण दूषणमिति विचार आसीत् । संस्कृतिविहीना जना एवास्पृश्याः । स्पर्शने तेषां दुर्वृत्तीनां सम्प्रतिपत्तिः स्यादिति । तथापि प्रारम्भिकयुगेऽस्पृश्यताया वैषम्यं नातिकठोरमिति प्रतिभाति स्मृतिवचनेन—

देवयात्राविवाहेषु यज्ञप्रकरणेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टं न विद्यते ॥ अत्रिस्मृतौ २४७

धार्मिककार्येषु यज्ञादिषु शूद्रा म्लेच्छाश्चामन्त्रिताः सम्मानिताश्चेति निःसन्दिग्धमेव ।[2] एकलव्यस्तु निषाद आसीत् । स तु द्रोणाचार्यस्य पादयोः शिरो निधाय तं प्रण-[3]नाम । पद्मपुराणानुसारं चाण्डालस्वपचमपि विष्णुं प्रति विष्णुदासः स्वागतं व्याजहार । न खलु तत्रासीत् महती समस्याऽस्पृश्यतायाः समस्या । तेषां मतेन तु सर्वं जगत् एकमूलमेव वर्तते । ब्राह्मं जगत् सर्वम् । अथवा मन्वनुसारं तु—

ऋषिभ्यः पितरो जाताः पितृभ्यो देवमानवाः ।
देवेभ्यस्तु जगत्सर्वं चरं स्थाण्वनुपूर्वशः ॥ ३ २०१

अतो जातिवैषम्याधारिता अस्पृश्यता नामाविवेकिनां दुराग्रहमात्रम् ।

## दासः

वैदिककालत एव भारते दासानामुल्लेखाः प्राप्यन्ते । दासानां स्थितिः प्रायशः कुटुम्बस्य सदस्यवदासीत् । *तानधिकृत्यैकमेवासीद्वैषम्यं यत्तेषां दानं विक्रयो वा* सम्भव आसीत् । दासं प्रति सप्रेमं व्यवहर्तव्यमिति शिलालेखेऽशोकेन प्रचारितम् ।[4]

---

१ नैषधीयचरिते १७-१९८ ।
२ रामायणे बालकाण्डे १३ १३, १८ ।
३ महा० आदि० १२३ १२
४ राजाज्ञानुसारं नाना विक्रयोऽभवत् । राजत० ४.३९७ ।

राजकीयकुटुम्बेष्वसख्यदासा आसन् । तेषा जीवनविन्यास प्राय विलासपूर्ण सुखमयश्चाभूत् ।[१] युधिष्ठिरस्य दासाना वर्णन महाभारते लभ्यते । तदनुसारम्—

शत दासीसहस्राणि तरुण्यो हेमभद्रिका ।
कम्बुकेयूरधारिण्यो निष्ककण्ठ्य स्वलकृता ॥
महार्हमाल्याभरण सुवस्त्राश्चन्दनोक्षिता ।
मणीन् हेम च बिभ्रत्यश्चतु षष्टिविशारदा ।
अनुसेवा चरन्तीमा कुशला नृत्यसामसु ॥ सभा० ६१ ८।१०

दासा अपि—

प्रदक्षिणानुलोमाश्च प्रावारवसना सदा ।
प्राज्ञा मेधाविनो दान्ता युवानो मृष्टकुण्डला ।
पात्रीहस्ता दिवारात्रमतिथीन् भोजयन्त्युत ॥ ६१·१२-१३

मनु सप्तविधदासानामुल्लेख कृतवान् । तथा हि—

ध्वजाहृतो भक्तदासो गृहज क्रीतदत्रिमौ ।
पैतृको दण्डदासश्च सप्तैते दासयोनय ॥ ८ ४१५

महाभारतयुगेऽपि दासत्वस्य वैषम्य घृणास्पदमभिमतम् । तद्यथा—

मानुषा मानुषानेव दासभावेन भुञ्जते ॥ शान्ति० २६२ ३८

अर्थशास्त्रे दासाना स्वातन्त्र्यस्य विधानमौदार्यपूर्णमेव विहित दृश्यते ।

## समाजं प्रति व्यक्तिः

प्राचीनभारते मानवस्य वैयक्तिकपरिधिरसीम आसीत । पुरा हि 'केवलाघो भवति केवलादी' इति सिद्धान्तेन स्वार्थवृत्तेर्हेयत्व निदर्शितमेव ।[२] सूर्यवद् भवितु पुरातन कवि प्रार्थयते—दिशामेकपुण्डरीकोऽसि । अह मनुष्याणामेकपुण्डरीक भूयासम् । तदेवानुसृत्य छान्दोग्ये प्रोक्तम्—यो वै भूमा तत्सुख नाल्पे सुखमस्ति ।

महाभारतानुसार तु—

सर्वेषा य सुहृन्नित्य सर्वेषा च हिते रत ।
कर्मणा मनसा वाचा स धर्म वेद जाजले ॥

---

१ महाभारतानुसार स्वयमर्जुनो विराटनगरे राजदासीभ्यो ललितकलाना शिक्षामदात् । अर्थशास्त्रेऽपि राजदासीना शिक्षणस्य राजकीयव्यवस्थाया वर्णन विद्यते ।

२ वैदिकास्तु सहस्रबाह्या भवितुमैच्छन् । ऋग्वेदे ६ ३५ १ ।
अपर च—पुमान् पुमास परिपातु विश्वत । ऋग्वेदे ६ ७५ १४ ।
शतहस्तसमाहर सहस्रहस्त सकिर । अथर्ववेदे ३ २४ ५ ।

न तत्परस्य सदध्यात् प्रतिकूल यदात्मन ।

कुन्ती भीममशिक्षयत्—कृतज्ञतैव जीवनम् । उपकारिणोऽधिकतरमुपकार कुरु । गीताया 'सर्वभूतस्थमात्मान सर्वभूतानि चात्मनि' इति धारणाया श्रेष्ठत्व प्रसाधितम् । लोकसग्रह एव गीताया सर्वोच्चप्रवृत्तिरूपेण प्रतिष्ठित ।

महाभारते पुन पुन प्रतिपादित यदहमन्ता विनश्यति । न हि कश्चित् ज्येष्ठ श्रेष्ठो वा अहमन्तव्य । अपि तु सर्व पुण्य क्षीण भवति । परिणामत स स्वर्गादपि च्युतो भवति ।[1]

गौतमेनापि समर्थितम्—

यथाह तथा एते यथा एते तथा अह ।
अत्तान उपम कत्वा न हनेय्य न घातये ॥
यथा मम परेषा च भय दुःख च म प्रियम् ।
तथात्मन को विशेषो यत्त रक्षामि नेतरम् ॥

तदनुसृत्याशोकेनोद्घोषितम्—कतव्यमते हि मे सर्वलोकहित नास्ति हि कमतर सर्वलोक हितत्या य च किचि पराक्रमामि अह किति भूतान आनण गछेय (कर्तव्यमतो हि मे सर्वलोकहितम् । नास्ति हि कर्मान्तर सर्वलोकहितात् । यत् च किंचित् पराक्रमे अह किमिति भूताना आनृण्य इयाम् ।[2]) सर्वलोकहित परमपुण्यमेवेति महाभारते प्रोक्तम्—

यदा न कुरुते पाप सर्वभूतेषु कर्हिचित् ।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥

आदिपर्वणि ७६ ५२

सर्वान् प्राणिन प्रति मैत्रीभावना प्रतिपादयेति गौतमेनोक्तम्—

सब्बे सत्ता सब्बे पाणा सब्बे भूता च केवला ।
सब्बे भद्रानि पस्सन्तु मा कंचि पापमागमा ॥

सब्बवसजातके ३१५

तत् सर्व भागवते परिणमितम्—

तप्यन्ते लोकतापेन साधव प्रायशो जना ।
परमाराधन तद्धि पुरुषस्याखिलात्मन ॥

भागवते ८,७ ४४

वसुन्धरास्ते सत्पुरुषा येषामुपकारपरायणो चरितगाथा कवयो गायन्ति स्म । ते

---

१ महा० आदि० ८६ ८ ।

२ पञ्चम शिलालेखे ।

समाजस्य सकटं दूरीकर्तुं सर्वस्वमात्मनो व्ययन्ति स्म। तथा हि पट्टचम्पको कल्हणेन वर्णितो स्तो राजानौ—

> क्षुधितव्याधितानाथदीनार्त्यार्तिनिवारणम्।
> सुस्पष्टं प्राप पट्टस्य राज्यलक्ष्मी कृतार्थताम्॥ राजत० ७ ९५३
> नन्दीक्षेत्रे व्ययीकृत्य प्रत्यब्दं सप्तवासरान्।
> चम्पकः सफलां चक्रे सर्वकालार्जितां श्रियम्॥ राजत० ७ ९५४

प्रजाकष्टनिवारणार्थं दूषितमनोवृत्तीनामपि जनानामौदार्यं प्रस्फुरति। तथया राजतरङ्गिण्याम्—

> नानादिगन्तरायातो दुर्भिक्षपतितो जनः।
> येनाविच्छिन्नसत्रेण शान्तव्यापद्व्ययीयत॥ ८ ५७१

## नारीणां सामाजिकप्रतिष्ठा

कौटुम्बिकप्रतिष्ठा तु कुलस्त्रीणां प्राग् वर्णिता वर्तते। कुटुम्बे ता कन्यका पत्न्य मातरः स्वसारः पुत्रवध्व वा भवन्ति। एभिः सम्बन्धैः विरहितानामपि नारीणां पद पर्यालोच्य वर्तते।[1]

### प्राकृता नार्यः

याः स्त्रियः उपर्युक्तसम्बन्धविहीना बभूवुः सामान्यतस्तासां समाजे विगर्हणैव स्वाभाविकी बभूव। कारणमपि तत्रासीत्। राष्ट्रस्याभ्युदयपथे ताभिः प्रस्तुता विघ्ना प्रत्यक्षा एवासन्। व्यक्तीनामपि तपःसाधनापथे स्त्रीकृतानि बहुविधानि पर्यवस्थानानि विदितान्येव। अस्या स्थितौ साधारणस्त्रीणां निन्दा वैदिककालतो भारतीयसाहित्ये सगृहीता वर्तते।[2]

स्त्रीणां मनोऽशिष्यम्वणीयमभिमतम्।[3] स्त्रीभिः सह मैत्री न वर्तते। निर्घृणहृदयास्ता वर्तन्ते।[4] महाभारतानुसारं सर्वस्य स्पृहणीया नार्यः प्राकृता सन्ति।[5] तादृशीनां नारीणां विषये रामायणे प्रोक्तम्—

---

१ बुद्धचरिते ४ ७२-८१, विष्णुपु० १ १५.३८।

२. परदारान्मित्र राजेन्द्र सर्वसाधारणा स्त्रियः।
  तस्मात्ताश्च न रज्येत नासक्तसेन्न च विश्वसेत्॥

३ ऋग्वेदे ८ ३३.१७।

४ न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता। ऋग्वेदे १० ९५ १५।

५. विराटपर्वणि ९ ३३।

एषा हि प्रकृतिः स्त्रीणामासृष्टे रघुनन्दन।
समस्थमनुरज्यन्ति विषमस्थं त्यजन्ति च॥
शतह्रदाना लोलत्वं शस्त्राणां तीक्ष्णता यथा।
गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः॥

कौटिल्यस्तु स्त्रियं व्यसनमेव मन्यते। तथाहि—स्त्रीषु हि बालिश्यमनेकविधं निशान्तप्रणिधौ व्याख्यातम्।[1] पौराणिकयुगेऽपि स्त्रीणां दोषदर्शनं भूयो दृश्यम्। तद्यथा भागवते—

शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम्।
हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम्॥
न हि कश्चित्प्रियः स्त्रीणामञ्जसा स्वाशिषात्मनाम्।
पतिं पुत्रं भ्रातरं वा घ्नन्त्यर्थे घातयन्ति च॥ ६.१८.४१-४२

बौद्धसाहित्ये स्त्रीणां दोषवर्णनमविचयितमेव। तद्यथा धम्मपदे—

याव हि वनथो न छिज्जति अणुमत्तोपि नरस्स नारिसु।
पटिबद्धमनो नु ताव सो वच्छो खीरपको व मातरि॥ मग्गवग्गे १२

गौतमबुद्धेन स्पष्टमेव निर्दिष्टम्—नार्यस्तु सघे प्रविष्टाः। अतः धर्मोऽयं पंचशतवर्षपर्यन्तमेव स्थास्नुत्वमर्हति—अन्यथा सहस्रवर्षावधिमेवेदमस्य धर्मस्य।[2] जैनसंस्कृतावपि स्त्रीणां नैपुण्यं व्याख्यातम्। तथा हि महापुराणे—

आभिजात्यं वयो रूपं विद्या वृत्तं यशः श्रियम्।
विभुत्वं विक्रमं कान्तिमैहिकं पारलौकिकम्॥
प्रीतिमप्रीतिमादेयमनादेयं कृपां त्रपाम्।
हानिं वृद्धिं गुणान् दोषान् गणयन्ति न योषितः॥
वृश्चिकस्य विषं पश्चात् पन्नगस्य विषं पुरः।
योषितां दूषितेच्छानां विश्वतो विषमं विषम्॥
नालकैरिन्द्रजालेन वञ्च्या ग्राम्या हि मायया।
ताभिः सेव्यो गुरुर्वञ्च्यस्तन्मायामातरः स्त्रियः॥
लक्ष्मी सरस्वती कीर्तिर्मुक्तिस्त्वमिति विश्रुता।
दुर्लभास्तासु वल्लीषु कल्पवल्ल्य इव प्रिये॥ ४३.१०१-११२

बह्वो नार्यो विषकन्यका इव प्रयुक्ताः श्रूयन्ते। तासां कृते बासुदेवैर्युद्धे समारम्भा अपि बभूवुः। छन्नात्मना विष्णोरप्युपप्रवारणं सुप्रसिद्धमेव। नाटकादिषु स्त्रीद्वतप्रपञ्चैः सता-

१ अर्थशास्त्रे ३.८।
२. चुल्लवग्गे १०.१.६।

मपि दुःस्थितिं को न जानाति । भारतदेशोऽयं मोक्षापवर्गपरायणो नारीणामीदृशं बाधकत्वं विचार्य साधुपथगामिनिर्देशनार्थं यदि विलासोन्मुखीनां ललनानां प्रवृत्तिं निन्दितवान् तर्हि किमाश्चर्यम् ।

'नार्यस्तु निन्दनीयाः सन्ति' इति शास्त्रेषु काव्येषु च पुनः पुनः प्रतिपादितं प्रमाणितं च । तथापि तासामधिकसंख्यासंवर्धनेन कतिपयराजान आत्मानं बहु मन्यन्ते स्म । प्रायः पञ्चदशताब्दं प्रागेव तत्रासीत् विजयनगरस्य महाराजो हरिहरो द्वितीयः । तस्य १२००० स्त्रियः आसन्, तथापि मुद्गकुलनगरस्य काञ्चित् सुन्दरीं स्वीकर्तुं स स्वान् प्राणान् राज्यं च तत्याज । बहूनि युद्धानि रमणीनां प्राप्त्यर्थं सवृत्तानीति इतिहासः प्रमाणम् ।

तथापि नारीषु कश्चिदेकोऽपि दोषो नास्ति, यस्य पुरुषवर्गेऽविद्यमानता स्यात् । सर्वे ते कवयः शास्त्रकारा वा नारीणां निन्दया केवलं स्वकीयां स्वार्थपरतामेवोदाहरन्ति । पुरुषैर्वशीकृता अथवा कामभोगतृप्त्यर्थं निगडीकृता इव नार्यो यदि क्वचिद्विपथं समाचरन्ति तर्हि तत्र पुरुषा एव सदोषा न तु नार्य इत्यपि बहूनां मनीषिणां सम्मतम् ।

## नारीणां हीनत्वम्

नारीवर्गस्य पुरुषैः सह साम्यं नासीत् । तासां दानमेव प्रहीणत्वं द्योतयति[1] । राज्ञां समृद्धिशालिनां च पुरुषाणामन्तःपुरे भोग्यवस्तूनामिव कन्यकानां रमणीनां च समाहारः कृतः ।[2] धनिका ऋषयो वा बहुपत्नीत्वेनात्मानं बहु मन्यन्ते स्म । गणिकापदादपि नारीणां मनोरंजनसाधनत्वं तासां विगर्हणाय भवति ।

नारीणामवगुण्ठनं तासां सुरक्षार्थं बभूव । तासां कृतेऽवगुण्ठनयन्त्रो रथा निर्मिताः ।[3]

कन्यकानां व्यक्तित्वस्य विकासाय तादृशः प्रयत्नो नाक्रियत यादृशो बालकेभ्यः कृतः । तासां विवाहोऽपि स्वल्पे वयसि करणीय इति परवर्तिस्मृतिकाराणां स्पष्टं मतं दृश्यते ।

प्राचीनभारते शास्त्रानुसारं नारीणां स्वातन्त्र्यं सर्वथा निषिद्धमासीत्, तथापि तासां स्वतन्त्रजीविकावश्यकतानुसारमर्थशास्त्रे कामसूत्रे च निर्दिष्टं वर्तते । तथा कामसूत्रे—

> तथा पतिवियोगे च व्यसनं दारुणं गता ।
> देशान्तरेऽपि विद्याभिः सा सुखेनैव जीवति ॥ १.३.२३

---

१ यज्ञानां दक्षिणारूपेण बह्व्यः कन्यका वैदिकयुगेऽपि प्रदत्ताः । महाभारतानुसारं युधिष्ठिरः दश कन्या ब्राह्मणेभ्यो दत्तवान् । सभापर्वणि ३३ ५२, वनपर्वणि २१०.२, शान्तिपर्वणि २९.६५ । दानशालासु स्त्रियो देया आसन् । दीघनिकाये महासुदस्सनसुत्तानुसारम् ।

२ महाराजदशरथस्य प्रमुखाराज्ञीः विहाय पंचाशदधिकत्रिशतं नार्यो बभूवुः । रामायणेऽयोध्याकाण्डे ३९.३७ ।

३. चुल्लकालिङ्गे जातके ३०१, शिशुपालवधे ५.१७ ।

## नारीणां सम्मानः

'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता' इति सामान्योक्तिः । नारीणां सामाजिकप्रतिष्ठाया विचारणे प्रथमं दिव्यनारीणां पदमवलोकनीयम् । सरस्वती, दुर्गा, उषाः, इत्यादयः नारीसम्मानस्य मूलप्रतिष्ठापिका विभाविता । अपरं च प्रातःस्मरणीयानां नारीणां समाहारस्तत्र वर्तते यासां यशोगाथया अद्यापि न केवलं नारीभ्यः, अपितु पुरुषेभ्योऽपि प्रगतिप्रेरणाप्रदानाय वर्तते। तद्यथा—महमूदस्याक्रमणेभ्यो भारतं रक्षयितुमपेक्षितं धनं संग्राहयितुं भारतीया महिला स्वशरीरेभ्योऽलङ्कारानपनीय प्रददुः—इत्यैतिह्यम्[1] ।

नारीणां व्यक्तित्वस्य विकासाय समीचीना योजना वैदिकबौद्धजैनादिषु संस्कृतिषु प्रस्तुता । तासां कृते ब्रह्मचर्यवानप्रस्थप्रव्रज्यादीनां व्यवस्थासीत् । सङ्कटकालेऽपि नारीणां माहात्म्यं निदर्शितं महाभारते—

वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥ वनपर्वणि ७४ २५

नारीणां सम्मानार्हत्वं कथासरित्सागरे प्रमाणितम् । तद्यथा—

तास्तु काञ्चन सद्वंशजाता मुक्ता इवाङ्गनाः ।
याः सुवृत्ताच्छहृदया यान्ति भूषणतां भुवि ॥ ४ १.९८

कल्हणस्तु राजतरङ्गिण्यां सूर्यमती-रड्डा-सुगन्धा-दिद्दादीनां राज्ञीनां शासन-वैदग्ध्यं कार्यकौशलं च वर्णयति । तद्यथा सूर्यमतीविषये—

भर्तुर्नारीवियोगस्य तस्या भर्तुर्जयस्तथा ।
निष्कलङ्केन शीलेन नान्योन्यं गर्ह्यतामगात् ॥ ७ २००

रड्डा तु दुर्गविन् वीराङ्गना बभूव ।[2]

भारतीयसंस्कृतेरत्युन्नतवैशिष्ट्येन वैदेशिका अपि प्रभाविताः । तद्यथा विल्सनमहोदयोऽलिखत्—And it may be confidently asserted that in no nation of antiquity were women held in so much esteem as amongst the Hindus[3]

अतएव स्त्रीणां विषये मध्यमा प्रतिपत्तिः प्रतिपादनीया । तद्यथा—

योषितो नावमन्येत न चासां विश्वसेद् बुधः ।
न चैवेर्ष्यां भवेत्तासु न धिक्कुर्यात् कदाचन ॥

विष्णुपुराणे ३ १२.३०

---

१ Majumdar Ancient India P 326

२. विन्ध्याद्रिमार्गे पर्याप्ता नियर्दन्त्यप्रमात्रया ।
दुर्गेयत्र तया देव्या कृता निहतकण्टका ॥

३ Mill's History of India Vol II P 51.

## सतीप्रथा

वैदिकयुगे स्त्रीणां जीवनकाले यदि पत्युर्मरणमभवत्तर्हि तासां स्वेच्छया पुनर्विवाहः सम्बभूव । ईदृशो विवाहः प्रायशो देवरा सहायोजितः । निःसन्दिग्धमेव सर्वेषु युगेषु कतिपयस्त्रियः पत्युर्वियोगमसहमाना प्राणान् त्यजन्ति स्म, किन्तु नासीत् किमपि बलान्नियोजनं स्त्रीभ्यः पत्युश्चितायां मरणाय । महाभारतयुगे स्त्रीणां पतिभिः सह मरणेन परलोकेऽपि सहगमनस्य स्पष्टं विवरणं दृश्यते । तद्यथा—

यापि चैवंविधा नारी भर्तारमनुवर्तते ।
विराजते हि सा क्षिप्रं कपोतीव दिवि स्थिता ॥ शान्तिपर्वणि १४५ १५

अनेनोद्धरणेनापि स्त्रीणां सहमरणं वैकल्पिकमेव प्रतिभाति । दशरथस्य स्त्रीणां सहमरणं नासीत् । न केवलं भारते, विदेशेष्वपि यत्र तत्र सहमरणस्य प्रथासीत् । स्कैण्डिनेवियादेशे युद्धवीरेषु मृतेषु तेषां पत्न्यश्चितासु प्रदग्धा बभूवुः ।

परवर्तियुगे शनैः शनैः सहमरणस्य विधानमधिकतरं प्राचलत् । समृद्धिशालिवर्गेषु उच्चतमपरलोकगतिपरायणेषु समाजेषु च सतीप्रथाया विशेषप्रचारोऽभवत् । सतीप्रथया नारीणामुच्चादर्शस्य प्रतिष्ठाभूत्, किन्तु निःसंशयमेवास्याः प्रथाया निर्मूलनमभिनन्दनीयमेव ।

## बहुपत्नीत्वम्

धर्मशास्त्रेषु पुरुषाणां कृते बहुपत्नीनां कदापि सर्वथा निषेधो नाभवत्, किन्तु स्त्रीणां कृते बहुपतित्वं तु निषिद्धमेव ।[1] बहुपत्नीत्वाद् गृहपतेर्महत् कष्टमसकृदुल्लेखितं वैदिकसाहित्ये ।[2] एकपत्नीव्रतस्य शोभनत्वमपि प्रायशस्तत्रैव वर्णितम् । तथापि कामिनां धीपरिधायकानां च बहूनां पत्नीनां सङ्ग्रहो नासीदसामान्यम् ।[3]

पत्युः प्रेम यथा मयि स्यात् मम पुत्रे वा स्यात्, न तथा सपत्न्यां वा तस्याः पुत्रे वा स्यादिति सपत्नीकुलस्य मनोवृत्तिरभवत् । सपत्नीभिः परस्परं सौहार्देन समाचरेयुरिति धर्मशास्त्रकाराणां शिक्षा क्वचिदेव परिपालिताभवदस्वाभाविकत्वात् । सपत्नीनां स्वपतिं वशीकर्तुमभिचारादयः प्राचरन् ।[4]

---

१. तथा महाभारते—

न चाप्यधर्मः कल्याण बहुपत्नीकता नृणाम् ।
स्त्रीणामधर्मः सुमहान् भर्तुः पूर्वस्य लङ्घने ॥ आदि १६० ३६ ।

ऐतरेयब्राह्मणे च—

तस्मादेकस्य बह्व्यो जाया भवन्ति । नैकस्यै बहवः सहपतयः । १२ ११ ।

२. ऋग्वेदे १.१०५.८ ।

३. अग्निरंशकुमारोगी पतिरामीदिति ...ना तदेव परिचायकत्वं भिषा वा एतद् ... यत्र च । ते० ब्रा० ३ ८ ४ ।

४ ऋग्वेदे १०.१४५ ।

रामायणानुसारं तु महाराजस्यासितस्य द्वे पत्न्यौ बभूवतुः । तयोरेका गर्भवती जाता । अपरा तु

एषा गर्भविनाशार्थं सपत्न्यै सगरं ददौ ॥ बाल० ७० ३१

अस्मादेव गर्भात् सगरकुमारो जातः ।

वैदिकयुगेऽपि कतिपयराजानां बहुपत्न्यो बभूवुः । हरिश्चन्द्रस्य शतपत्न्योऽवर्तन्त । तस्मात् कालात् प्रभृति आधुनिकयुगं यावत् बहूनां राज्ञां बहुपत्नीत्वमितिहासप्रमाणितमपि वर्तते । स्त्रीणां शतं वा सहस्रं वा तेषामन्तःपुरस्यालङ्करणाय नाधिकमभवत् । तेषामन्तःपुरे राज्ञीनां पदं तु भोगसामग्रीवद् बभूव । ताभ्यः नित्यमभिनवतरं सङ्ग्रहणं स्यादिति मन्त्रिविदूषकादीनां प्रयासोऽभवत् । न केवलं सजातीया अपितु विजातीया वैदेशिक्योऽपि नार्यो राज्ञां कामलिप्सायाः परितर्पणाय येन केनोपायेन सङ्गृहीताः । तत्र तथाकथितराज्ञीनां दुर्दशाऽभवदिति साहित्यवृत्तेषु प्रायशः श्रूयते । यथा हि अभिज्ञानशाकुन्तले दुष्यन्तस्य पत्नी हंसपदिका गायति—

अहिणवमहुलोलुवो भवं तह परिचुम्बिअ चूअमञ्जरिं ।
कमलवसइमेत्तणिव्वुदो महुअर विम्हरिओसि णं कहं ।

एतच्छ्रुत्वा दुष्यन्तेन पूर्वप्रेम स्मरता प्रोक्तम्—

'सकृत् कृतप्रणयोऽयं जनः । तदस्या देवीवसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि । सखे माढव्य मद्वचनादुच्यतां हंसपदिका–निपुणमुपालब्धोऽस्मीति ।'

कतिपयधर्मशास्त्रकाराः पत्नीबहुत्वस्य नृपस्य पर्यालोचयन् । ते साधारणस्थितौ बहुपत्नीत्वं निन्दितवन्तः । तद्यथा आपस्तम्बधर्मसूत्रे—

धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीत । अन्यतराभावे कार्या प्रागग्न्याधेयात् ।

२ ५ ११ १२-१३

कात्यायनस्मृतौ

द्वितीयां चैव यः पत्नीं दहेद्वैतानिकाग्निभिः ।
जीवन्त्यां प्रथमायां तु ब्रह्मघ्नेन समं हि तत् ॥ २०८

यदि प्रथमपत्न्या पुत्रा न भवेयुस्तर्हि द्वितीयो विवाहः कार्य इति बहूनां शास्त्रकाराणां मतम् । तथापि कौटिल्यमतानुसारं विवाहस्य पश्चादष्टवर्षं यावत् पुत्रोत्पत्तये प्रतीक्षैव द्वितीया पत्नी परिणेया ।[1]

●

१ वर्षाण्यष्टावप्रजायमानामपुत्रां वन्ध्यां चाकाङ्क्षेत । दश विन्दुं द्वादश कन्याप्रसविनीम् । ततः पुत्रार्थी द्वितीयां विन्देत । तस्यातिक्रमे शुल्कं स्त्रीधनमर्धं चाधिवेदनिकं दद्यात् । चतुर्विंशतिपणपरं च दण्डम् । पुत्रार्थो हि स्त्रियः ।

# उपभोग्यानि

विश्वस्याधिकाधिकवस्तूनि स्वोपभोगयोग्यानि कर्तुं मानव आसृष्टे प्रयत्नशील प्रवर्तते। सामान्यतो जीवनधारणाय भोजनपानवस्त्रादीनि अलङ्करणाय स्नानप्रक्षालनादीनि, विश्रमाय गृहवास्तुशयनादीनि, पर्यटनाय यानसरकादीनि चोपभोग्यानि भवन्ति। उपभोग्यवस्तूनि बहुलीकर्तुं तेषामधिकतमोपभोगक्षम स्वरूपमाधातु च मानव प्रयतते।

## आहार

भोज्यपदार्थास्तु प्रायेण त्रिविधा —

( १ ) वनस्पतिभ्य प्राप्तव्या —अन्न-फल मूल-फुल्ल-नाल शाक तैल-गुड शर्करादय।

( २ ) प्राणिभ्य प्राप्तव्या —मास-दुग्ध दधिघृत-वसा-मध्वण्डकादय।

( ३ ) भूगर्भेभ्य प्राप्तव्या —लवणादय।

आहारेषु मासवसाण्डकानि सामिषाणि शेषास्तु निरामिषा।[1]

### मासत्याग

मासभोजन सुदूरप्राचीनकालत प्रायश सर्वेषु देशेषु कालेषु च लोकप्रियमभूत। आयुर्वेदानुसारं 'मासभोजन स्वास्थ्यकर स्वादिष्ट च भवति। तत प्रशसनीयमेव'।[2] वैदिकयज्ञेषु देवेभ्यो मासभोजनसमर्पणस्य रीतिरासीत्। पश्चात्तदेव भोजन खादितव्यमभवत्।[3]

---

१ चतुर्विध आहार —भोज्यं, भक्ष्य, लेह्य पेयञ्च। तत्र भोज्यं भक्तव्यञ्जनादि। व्यञ्जनम्—परस्य शाकस्य दश भेदा —

मूलपत्रकरीराग्रफलकाण्डप्ररूढकम्।
त्वक्पुष्पं कवकं चेति शाकं दशविधं स्मृतम्॥

भक्ष्यं उग्रखाद्यादि। पेयं द्विविधम्-अग्निनिष्पाद्यम्, इतरच्च। तत्र पूर्वं यूषाख्यम्। तच्च द्विविधम्—मुद्गादिनिर्व्यूहकृतम्, मांसनिर्व्यूहकृतं च। यदग्निनिष्पादनं पेयं तद्द्विविधम्—सन्धानकृतमितरच्च। तत्राद्यं द्रावितमद्रावितं च। तत्र यद्गुडधान्यादिकादिजलेन संयोज्य क्रियते, तद् द्रावितं पानकाख्यम्। यद् द्राक्षकोपधेन खर्जूरमोचापनसानि सयोज्य निष्पाद्यते, तद्द्रावितं रसाल्यम्। लेह्यं त्रिविधम्—राग, चूर्ण, द्रव इति। तस्य स्वाद लवणाम्लकटु। कामशास्त्रे १ ३ १६ टीका।

२. चरके सूत्रस्थाने २७ १००—३१०।

३ ऋग्वेदे १ १६२, ८ ४३ ११, १० २७ २, १० ८६, १० ९१ अथर्ववेदे १२ ४, ५ १८, १.२१ ६। शतपथब्राह्मणे ३ १ २ २१ ऐतरेयब्राह्मणे १ ८। परवर्तियुगे नैषधचरिते गवालम्भमुल्लिखितमतिथिसत्कारार्थे—

अभ्यागतं क्षापि गां वीक्ष्य हन्यमानामयं मुदा।
अतिथिभ्यस्तया बुद्ध्या मन्दो मन्दं न्यवर्तत॥ १७ २००

किन्तु वैदिकयुगेऽपि मांसे दोषो विदित एवासीत्, यतो नामास्य येनास्य भोजनं नियमितम्। तद्यथा—यज्ञकर्मणि दीक्षिता मांसं न खादतु। तपस्विभिर्मांसं न खादितव्यम्।[1] यज्ञायज्ञीयसामसूक्तवेत्तारो यावज्जीवनं मांसभोजनं न कुर्वन्तु।[2] मांसशब्दस्य व्युत्पत्तिरपि मांसत्यागमुद्दिश्य निरूपिता।[3] आचार्या 'उपाकर्मण आरभ्योत्सर्जनपर्यन्तं मांसं न खादतु' इति विधानमाधीत्।[4] मधुपर्कविधौ मांसभोजनं सम्मतमासीत्। तत्रापि अमांसा मधुपर्कस्य रीतिः प्रावर्तत। तत्राध्यौ महापुरुषा अवदन् मा भूद् वरिष्ठं तनूनाम्। शरीरिणामहिंसकः कुरु' इति।[5]

एभिरुल्लेखैः स्पष्टं प्रतिभाति यद्वैदिकयुगेऽपि कश्चित् प्रतिष्ठितः ऋषिवर्गस्तत्कालीनेन मांसभोजनमाध्यात्मिकाभ्युदये प्रतिकूलमपावनं च मतम्।

उपनिषद्युगे तपसा तत्त्वज्ञानेन च मुक्तिः साधनीयासीत्। तदानीं यज्ञस्य महिमा हीनोऽभवत्। तपसा जीवनविशुद्धिः सम्भाविता। अस्मात्कारणादपि मांसभोजनस्य तपस्विवर्गाय नेष्टत्वं प्रतिपादितम्। अयमेव मांसभोजनपरित्यागादर्शो मुनिवर्गात् सकलसमाजेन गृहीतः। 'मुनीनां जीवनविधिर्गृहस्थैरपि यथाशक्यं ग्राह्यः' इति भारते सनातनविधिरभवत्।

बौद्धजैनसंस्कृतिषु हिंसाया विरोधो भृशं बभूव।[6] मांसं तु हिंसया विना न लभ्यम्। धर्मे धर्मैरनुयायिनस्तु द्वयोः संस्कृत्योर्मांसविरताः सामान्यतो बभूवुः। तेषां संख्या पुरात्यधिकासीत्। तेषामादर्शेन समाजः प्रभावितः। जैनसंस्कृतौ मांसपरित्यागाय विशिष्टं साहित्यं विरचितम्। तदनुसारं यस्य पशोर्मांसं खाद्यते स्म स पूर्वजन्मनि भक्षयितुर्माता, पिता, भ्राता, भगिनी, स्त्री आसीत्।[7] महाराजाशोकः स्वकीयपाकशालायै पशुवधं निषेधितवान् लेखितवांश्च—प्राणिनामहिंसा साधुः।[8]

महाभारते यद्यपि स्वास्थ्यास्वाददृष्ट्या मांसभोजनस्य सर्वोत्कृष्टत्वं प्रतिपादितम्,

---

१ शतपथे १४ १ १ २९

२ छान्दोग्योपनिषदि २ १९ २

३ शतपथे ११ ९.१ १। न वद वा अस्मिन् लोके पुरुषोऽश्नाति तदेनममुष्मिन् लोके प्रत्यत्ति। शतपथे अपरं च ११ ६ १ ३ तं होचुरित्थं वा इमे अस्मानमुष्मिन् लोके सचन्त तान् वयमिदमिह प्रतिनामह। कौषीतकिब्राह्मणे ११ १३ अमुष्मिन् लोके पशवो मनुष्यानदन्ति।
मांसं भक्षयितामुत्र यस्य मांसमिहाद्म्यहम्।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥ मनुस्मृतौ ५ ५५

४. आपस्तम्बधर्मसूत्र १ १ ५ १५

५ पारस्करगृह्यसूत्र १ ३ २५

६ तथा हि बौद्धगमार्थसङ्ग्रहे २८७ पृष्ठे। चुल्लवग्गे ७ ३ १५

७ अमरचरित ग्रन्थ।

८ गिरनारशिलालेखे प्रथमशिलालेखेऽपि अशोकेनायमभिप्राय प्रकटित।

तथापि सात्त्विकतासंवर्धनदृष्ट्या मांसभक्षणाद्विरतिः प्रबोधिता । अहिंसकस्तु सर्वेषां प्राणिनां माता च पिता चेत्युपदेशः ।[१] भागवतेऽपि प्रोक्तम्—

मृगोष्ट्रखरमर्कोखुसरीसृप्खगमक्षिकाः ।
आत्मनः पुत्रवत्पश्येत् तैरेषामन्तरं कियत् ॥७ १४.९

वैदिकी हिंसा हिंसा न भवतीति सिद्धान्तेन भारते यज्ञकर्मणि श्राद्धकर्मणि च मांसं सदा प्रोक्षितं भक्षितं च ।[२] यज्ञेभ्योऽन्यत्र मनुर्मांसभोजनं निनिन्द ।[३]

भागवते समांसयज्ञानां घोरविरोधो वर्तते । पुराणेऽस्मिन् यज्ञार्थं मुनिजनार्चितम् श्रेष्ठ मतम् ।[४] स्कन्दपुराणे आयुर्वेदप्रसिद्धानां मांसभोजनगुणानां निराकरणं भृशं प्रकटितम् ।[५]

महाकविबाणेन मांसविरतिप्रसङ्गे प्रोक्तम्—'आहारः साधुजननिन्दितो मधुमांसादि ।[६] तथापि रसास्वादान्वेषिणो नागरिका मांसतेमनरसाद्विरता कदापि न बभूवुः ।

आहारविवेको महतां मनसि सदावर्तते । तद्यथा विवेकानन्दो समर्थयति—'My body and mind have nothing essentially different from the food I ate. . .It naturally follows that both this thought and the instrument will be modified by the food we take.'[७]

## भोज्यानि

सिन्धुसभ्यतायां युगे यवगोधूमशालितिलादीन्यन्नान्युत्पादितानि । तन्नत्यनिवासिनां भोज्यानि तैरन्नैः निर्मितानि । सिन्धुप्रदेशे तदा दुग्धदायिनां पशूनां सङ्ख्याऽत्यधिकासीत् । सामान्यतो दुग्धनिर्मितखाद्यानि प्रियतराणि बभूवुः ।

वैदिकयुगे भोज्यान्नस्य विशिष्टगुणा विभाविताः । तथा हि—'यस्मिन् विश्वानि पौंस्या' आदिवाक्यैर्भोज्यविषयकं तेषां ज्ञानमुत्कृष्टमेव प्रतिभाति ।[८] अपरं च मधु, घृतं, सोमश्च दिव्य भोजनमभिमतानि । तद्यथा ऋग्वेदे—

---

१ अनुशासनपर्वणि ११४,११५,११६ अध्यायाः
२ मनुस्मृतौ ५.२७,४२,५२ महाभारते वनपर्वणि २०७५—१५
३ मनुस्मृतौ ५ ४८-५१
४ भागवते ७ १५ ७-११, ११ ५ ११
५. नागरखण्डे २१,२२५-२३७
मांसभोजनेनाधिशिरःशूलबाधाया नाशोपा च विशेषतोऽस्मियतो भवतीति हारवर्डविश्वविद्यालयस्य डा० ए० वायमेनस्य तथा डा० डी एम वर्सटीनस्य मतं लैसेटपत्रिकायां प्रकाशितं दृश्यते ।
६ कादम्बर्यां १२ पृष्ठे ।
७ Complete Works of Vivekanand Vol IV p. 2
८. ऋग्वेदे १.५.६,१.४२ ७,१.४६.६ ।

सोम एकेभ्यः पवते घृतमेक उपासते ।
येभ्यो मधु प्रधावति तांश्चिदेवापि गच्छतात् ॥ १० १५४ १

ओदनो वैदिकानां स्वादिष्टं भोजनं बभूव । ओदनो नानाविधं पाच्यते स्म । तद्यथा नामभिरेव परिचीयते—क्षीरपाकौदनः, दध्योदन, मुद्गौदन, तिलौदन, माषौदन, घृतौदनश्च । सर्वश्रेष्ठ आसीत् पंचौदन । स तु पचानां स्वादुद्रव्याणां समाहारैः सङ्कलित ।[1] दुग्धनिर्मितानि भोज्यानि नवनीतमस्त्वामिक्षादीनि बभूवु ।[2] आर्याणां पक्वान्नानि पक्तिकरम्भापूपपुरोडाशधानादीनि बभूवु ।[3] सक्तुभोजन वैदिककालतः प्राय सदैव लोकप्रियमभूत् ।[4] कृसर तण्डुलतिलाभ्यामपच्यत ।[5] तण्डुल भृष्ट्वा परिवाप इति ख्यातं खाद्यान्नं कृतम् ।[6] वाजिनमुष्णदुग्धदधिसम्मिश्रणेनाक्रियत ।[7] पयस्या वाजिनवदभूत् ।[8]

विविधपशूनां मांसानि पाचितानि । मांसस्य यूष कृत ।[9] भोजनेन सह दुग्धम्, दधि, मधु, घृत च खादितानि ।[10] लवणस्य मिश्रणेन धनिकानां भोजन स्वादिष्टं कृतम् ।[11]

भोज्यपदार्थानां वैविध्यं वैदिककाले सुपरिचितमेवासीत् । तद्यथा—शतपथब्राह्मणे सप्तदशविधानां भोज्यानामेकवारमेवोपभोग. सूचित. ।[12] दुग्धेनैव दशविधानि भोज्यानि संस्कृतानि ।[13]

फलमूलशाकानां भोजन वैदिककाले नातिलोकप्रियमासीत् । कमलमूल शालूकमु-दुम्बरफल मकरमाण्डिका चेदृशानि भोज्यानि प्रतिभान्ति ।[14]

---

१ वैदिकइण्डेक्सग्रन्थे तथा बृहदारण्यके ६ ४ ।
२ शतपथे १ ८.१ ७, ३ १ ३ ७
३ ऋग्वेदे ३ ५२ १—८, ४ २४.५—७, वाजसनेयिसंहितायां १९.२१ अथर्ववेदे ४.७ ३; तैत्तिरीयब्राह्मणे ३ ७ ५ ।
४ शतपथे १२ ९ १ ५ पञ्चतन्त्रे [illegible], नैषधीयचरिते २ ८५ ।
५ षड्विंशब्राह्मण ५ २ ।
६ तैत्तिरीयसंहितायां ३ १ १०.२ ।
७ तत्रैव १ ६.३ १०, शतपथे २ ४ ४ २२ ।
८ तैत्तिरीयसंहितायां २ ३ १३ २ ।
९ ऋग्वेदे १ १६२ १३ तै० सं० ६ ३ ११ १
१० अथर्ववेदे ९ ६ ३९—४४
११ तत्रैव ७ ७६ १, छान्दोग्य ४ १७ ७
१२ शतपथे ५ २ २ ३, ८ ४ ४ ७
१३ शतपथे ३ ३ ३ २
१४ अथर्ववेदे ८ ३ ४५, ४ ३४ ४, ५ १७ १६ ऐतरेयब्राह्मणे ७ १५, पञ्चविंशब्राह्मणे १६ ६ ४

लोचनमायुर्वेदग्रन्थेषु विद्यते ।[1] सामान्यजनाः प्रतिदिनं अनातिभोजनमकुर्वन्—दिनस्य प्रथमभागे प्रातराशो लघुभोजनमासीत्, मध्याह्ने रात्रौ प्रथमप्रहरे च पूर्णभोजनं बभूव । जैनसंस्कृतौ रात्रिभोजनस्य परित्यागो विहितः ।

समृद्धिशालिनामुच्चवर्गीयाणां नागरिकाणां भोजनसौष्ठवं सदैव सविलासमभूत् । अस्मिन् प्रसङ्गे महार्घाणि भाजनपात्राणि, रत्नमण्डितभोजनमण्डपा मनोरञ्जनाय समाहारीभूतानि कथारत्नानि चोल्लेखनीयानि ।[2] राजकीयभोजनविधेः रसिकत्वं श्रीहर्षस्यानेन श्लोकेन निर्दिशितम्—

न षड्विधः षिड्गजनस्य भोजने तथा यथा पीयतविभ्रमोऽद्भुतः ।
अपारशृङ्गारमयं समुन्मिषन् भृशं रसस्तोयमधत्त सप्तमः ॥

भोजनस्य पचनार्थं स्थाली-कटाहोखादयः सम्प्रयुक्ताः ।[3] कुण्डिकाकपालामत्रशरावादयः भाजनार्थं पानार्थं वा पात्राणि बभूवुः । तितउशूर्पादयोऽन्नस्य शोधनार्थं प्रयुक्ताः ।

## धूमपानं ताम्बूलं च

भोजनानन्तरं धूमपानस्य प्रचलनमासीत् । तदर्थं धूमवर्तिका निर्मिता । प्रायोगिकवर्तिकायां पञ्चविंशतिद्रव्याणां मिश्रणमभवत् । स्नैहिकवर्तिकायां वसाघृतजीवकादीनां मिश्रणमासीत् । शिरोविरेचनवर्तिका ज्योतिष्मतीहरितालमनःशिलागुरुभिः मार्गेण रचिता । धूमपानाय वर्तिका हस्तद्वयदीर्घायां नालिकायां संयोजिता । धूमपानस्यातिमात्रा वर्जिताऽऽसीत् ।[4]

धूमपानानन्तरं ताम्बूलग्रहणमभूत् । ताम्बूलपत्रे बहुविधानां मुखशोधकानां पाचनशक्तिसंवर्धकानां स्वास्थ्यविधायकानां च द्रव्याणां निधानं कृतम् ।[5] ताम्बूलस्य सर्वाधिकं महत्त्वं राजसभासु बभूव । राजकुमारेभ्यः ताम्बूलार्पणाय ताम्बूलकरङ्कवाहिन्यो नियुक्ताः । ताम्बूलकोषः करङ्क इति ख्यातः स्वर्णरजताभ्यां निर्मितो मणिजटितोऽभवत् । पतद्ग्रहोऽपि मणिजटितोऽभवत् । ताम्बूले भयोत्पादकानि वृश्चिकादीनां रूपाणि निधाय

---

१ सुश्रुतसंहितायां शाकवर्गादिवर्गेषु ।
२ मीमांसानीयनाटके दूतवाक्ये च ।
३. महाभाष्ये २।१।१९, ४।२।१७
४ विशेषविवरणपरिचयाय चरकसंहिता ५.२०-५२ द्रष्टव्या ।
५. चरकसूत्रस्थाने ५, ७२—७४

भोगिनां विस्मयापानेन परिहास कारित ।[१] कामभावस्योद्दीपकत्वात् ताम्बूलभोगस्य निषेधोऽपि समर्थित क्वापि ।[२]

कवीनां मुखेषु ताम्बूलवीटी काव्यं फलतीति गङ्गावतरणे निदर्शयति नीलकण्ठ —

कवितामफलद्वीटी कालिदासमुखेऽर्पिता ।
पत्युर्मुखे तु सा गौर्या पश्य निगमाक्षरम् ॥

## पेयम्

पेयेषु शीर्षस्थानीय जलमेवास्ति । पश्चात् दुग्धमधुनी , फलपुष्पकाण्डमूलादीनां रसा लोकप्रियाणि पेयानि सन्ति । पुन सोमो मद्य चासाधारणे पेये बभूवतु । नागरिकेभ्य स्वास्थ्यप्रद शुद्ध च कूपजल प्रदातुमेव सिन्धुसभ्यतायुगे सुव्यवस्थासीत् ।[३]

वैदिकैर्जलस्य दिव्यस्वरूपमदर्शि । जल शुचिताया प्रतीकमेव कल्पितम । तस्मात् देवा अपि शक्तिसचय कुर्वन्तीति वैदिकधारणा ।[४] परवर्तियुगे विविधप्रकाराणां जलानां स्वास्थ्यदृष्ट्या पर्यालोचनमायुर्वेदग्रन्थेषु कृतम् । अशुद्धजलस्य परिशोधनायानुसन्धानानि कृतानि । क्वाथीकरणेन, रवितापेन, कतकबिसग्रन्थिमुक्तादीनां परिस्पर्शनेन वस्त्रक्षरणेन जलस्य शोधन विहितम् । जलस्य सुगन्धीकरणस्य शीतलीकरणस्य च रीतिरासीत् ।

भारते सदैव दुग्ध लोकप्रियमभूत् । सिन्धुसभ्यतायुगे दुग्धदायिनां पशूनामाधिक्यमभवत् । वैदिककाले धनिका निर्धना प्राय सर्वेऽपि वर्णाश्रमिणोऽधिकाधिकसख्यका गा परिपालयन्ति स्म । राज्ञा गवा सख्योपलक्षा बभूव । दुग्धस्य प्रचुरप्रशसा विद्यते साहित्यग्रन्थेषु । तद्यथा—प्रिय दुग्ध न काम्यम् । दुग्धं वै जीवन प्राणा वा ।[५] धारोष्ण दुग्ध पीतमीषदुष्ण वा मधुशर्करामिश्रितमास्वादितम् । घृतमिश्रित दुग्ध पोषणमासीत् ।[६] आयुर्वेदशास्त्रेषु विविधपशूनां दुग्धानि स्वास्थ्यदृष्ट्या विविक्तानि सन्ति ।[७]

---

१. नैषधीयचरिते १६ २०,१०९
२ स्कन्दपुराणे नागरखण्डे । ताम्बूलमुपभुज्य जना कामासक्ता भवन्ति ।
३, Piggott Prehistoric India p 171
४ ऋग्वेदे ७ ४६
M महाभाष्ये ८.८ ८४
५ शतपथे २ ५ १ १५,९ २ ३, ३१ ।अमूर्तं क्षीरभोजनमिति पंचतन्त्रे १ १२९
६ अथर्ववेदे ७-७२ १, तित्यजातके
७ चरकसूत्रस्थाने २७ २१४—२२१, सुश्रुतसंहितायां दुग्धवर्गे ४५ १–५

सोमरस

सोमस्तु आर्याणां प्राचीनतमं पेयं । सोमयज्ञे देवेभ्यः सोमस्य समर्पणं क्रियते स्म । सोमाय सोमयज्ञो प्रथमयुगयुक्तोऽभूत् । सोमवल्ली मुञ्जवत्पर्वते समुद्भिता । तस्मात्प्रदेशात् क्रयार्थं वल्लीयं भारते आनीता ।

सोमवल्ली उलूखले मुसलेन कुट्टिता शिलापट्टके वा ग्राव्णा पिष्टासीत् । पश्चाद्रसस्य पवित्रेण शोधिता । तस्मिन् रसे दुग्धं दधि घृतं यवश्च मिश्रितानि । सोमस्य गन्धो रमणीय आसीत् । वैदिकैः कविभिरस्य श्री. प्रयो नमश्च प्रशंसितानि । स्वादः सोमस्य मधुर आसीत् ।

सोमपानेन बहवो लाभा आसन् । तथा हि वक्तृताशक्तिसंवर्धनं दीर्घजीवनं प्रतिभाविकसनमाध्यात्मिकं सौष्ठवं च सोमपानेन सम्भावितानि । सोमपायी यशस्वी भवति । सोमस्तु मानवतायाः कल्याणम् । सोमेन धर्मप्रवृत्तिर्वर्धतेऽभिनवचेतनायाः स्फुरणं भवतीति वैदिकधारणा ।[1] सोमो मनसः पापानि दूरं कृत्वा सत्यं संवर्धयति नाशयति चासत्यम् ।[2]

सोम ईषन्मादक आसीदिति सत्यम् । किन्तु सोमो नासीत् सुरेति स्पष्टमेव । शतपथानुसारं सोमः सत्यस्याभ्युदयस्य प्रकाशस्य च कर्ता भवति, सुरा चासत्यं पतनमन्धकारमेव ।[3] अपरं च

सुविज्ञानं चिकितुषे जनाय सच्चासच्च वचसी पस्पृधाते ।
तयोर्यत्सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत् ॥ ऋग्वेदे ७.१०४.१२

आ त्वा विशन्त्वाशवः सोमास इन्द्र गिर्वणः ।
शं ते सन्तु प्रचेतसे ॥ ऋग्वेदे १.५.७

परवर्तियुगे भारते सोमा दुर्लभप्रायोऽभवन् । तदा सोमपर्याया चतुर्विधविकल्पा प्रमिता ।[4]

## सुरा

वैदिकयुगे सुरायाः गुणा अवगुणाश्च सुपरिचिता आसन् । वैदिकसाहित्ये यत्रचिदस्याः प्रशंसा विद्यतेऽपरत्र सुरानिन्दा चास्ति ।[5] यज्ञेष्वपि सुरासमर्पणमक्रियत । मनोरञ्जन-

---

१ ऋग्वेदे ८.४८

२ Macdonell Vedic Mythology p 109 ऋग्वेदे ७.१०४.१२

३. शतपथे ५.१.५.२८

४ सुश्रुतसंहितायां चिकित्सास्थाने सोमप्रकरणे विशेषविवरणं द्रष्टव्यम् ।

५. प्रशंसायाः निदर्शनं ऋग्वेदे १.११६.७, १०.१३१.४.५ अथर्ववेदे ४.३४.६ निन्दायाः निदर्शनं ऋग्वेदे ७.८६.६, ८.२.१२ मैत्रायणीसं० १.११.६

भासु सुरापानान्विताना कलहाना प्राचुर्यमासीत् ।[1] सुरापानं तु पापप्रवृत्तीना प्रवर्धनायेति प्राय समर्थितम् ।[2]

अर्थशास्त्रे चरकसुश्रुतयो. संहितयोश्च बहुविधाना सुराणामुपकल्पनविषयो वर्णिता वर्तन्ते । असख्यकानि यन्त्रोपकरणानि विद्यन्ते येषा योगेन सुरा निर्मिता । तद्यथा मूलफलपुष्पधान्यव्यंजनपत्रबीजगुडशर्करावल्कलगन्धादीना सुरा. परिद्रष्टव्या । चरकसंहितायां चतुरशीतिविधीना सुराणामुल्लेखो वर्तते । तदनुसारं सुरासवेन मनसः शरीरस्य च बलं वर्धते, निद्रा नश्यते, शोकारुच्योर्विनाशो जायते, मनश्च प्रसन्न भवति ।[3] सुरापाने संयम कर्तव्य , अन्यथाधिकपानेन बुद्धि' धैर्यं स्मरणशक्तिश्च विनश्येयु' ।[3]

रामायणानुसारं पानभूमिरापानकं वा सुरापायिना मनोरंजनार्थमभवत् । पानभूमौ स्वर्णमयान्यासनानि, पानाय स्फटिकरचितानि महार्घपात्राणि स्वर्णघटाश्चाभवन् । राजकीयपानभूमौ नृत्यगीतवाद्यादिभिर्मनोरञ्जन विधातु कन्यका नियुक्ता आसन् । पानभूमौ धरातले पुष्पाणि विकीर्णानि ।[4] कामसूत्रानुसार नैमित्तिकमासीत् समापानक यत्र सम्भूय समन्वात् पानं कृतम् । नित्यमासीत् तरकाख्यं पान यत्र नायिकया सह पानं प्रतिदिनं कृतम् ।[5] अर्थशास्त्रानुसार पानभूमे सुप्रबन्धाय राजकीयनियन्त्रणमासीत् ।

सुरापानस्य निन्दा सर्वैर्मनीषिभि. कृता ।[6] 'ब्राह्मणा ब्रह्मचारिणो वानप्रस्थाः संन्यासिनो वा कदापि सुरास्पर्शमपि मा कुर्वन्तु' इति विधान महाभारतानुसार शुक्राचार्य. सुरापान ब्राह्मणेभ्यो निषेधितवान् । तथा हि——

यो ब्राह्मणोऽद्य प्रभृतीह कश्चिन्मोहात् सुरां पास्यति मन्दबुद्धि. ।
अपेतधर्मो ब्रह्महा चैव स स्यादस्मिल्लोके गर्हित स्यात् परे च ॥आदि० ७१ ५४

रामायणेऽपि प्रोक्तम्

न हि धर्मार्थसिद्ध्यर्थं पानमेव प्रशस्यते ।
पानादर्थश्च कामश्च धर्मश्च परिहीयते ॥ किष्किन्धा० ३०.४६

बौद्धजैनसंस्कृत्यो सर्वत्र सुराया दोषा आकलिता. । परिणामतः सर्वेऽपि सद्वृत्ति-

---

१ ऋग्वेदे ७ २ १२ शतपथे १,६,३ ४५५ ४ २१. ५ १ २ ११ ५.१ ५ २८ । वितृष्णा कृतेऽपि सुरायाः समर्पण कृतमिति शतपथे ५ ५ ४.२७

२. ऋग्वेदे ७ ८६ ६

३. चरकसूत्रस्थाने २५ ४९, २५ ५१

४ रामायणे २ ११४ १४, ६ १ २२ २४, ५.११.४ २८

५ कामसूत्रे १ ४.३७—३८

६. ऋग्वेदे ७ ८६ ६, शतपथे ५ ९,५ २८ काठकसंहितायां ११ १२; छान्दोग्ये ५.१ २८ आपस्तम्ब धर्मसूत्रे १ ७२१ ८ मनुस्मृतौ ११ ९३, ९४, महाभारते शान्ति० १११ २९,३५ २० अर्थशास्त्रे सुराध्यक्षप्रकरणे व्यसनाधिकरणे च ।

परामणा गृहस्था सुराया विरता बभूवु । भारतीयकथासाहित्ये सुरापानोद्भवानि पापानि निदर्शितानि ।[1]

## अन्यपेयानि

वैदिककालात् कीलालं मादकं पेयमासीत् । मधु सर्वेषां सदैव प्रियं पेयमभवत् । मधुपर्कविधौ मधुनः प्रतिष्ठास्थानं सुविदितमेव । इक्षुरसो भारते सदैव लोकप्रियोऽभवत् । फलानां रसोपकल्पने आम्रजम्बुकदलीद्राक्षादीनामुपयोगोऽक्रियत ।[2] एवंविधः रसः कतिपयवृक्षाणां पत्रपुष्पैश्चोपकल्पितः । नारिकेलजलं समुद्रतटवासिभ्यः प्रियमभूत् ।

वनविहारकाले जना मधुमाधवीपानमकुर्वन् । तस्या निर्माणं मधुनोऽभवत् ।[3]

इत्सिङ्ग महोदयस्य लेखानुसारं खीष्टस्य सप्तमे शतके भारते 'चाय' पानस्य प्रचलनमासीत् ।[4]

ऋत्वनुसारं पेयानामुपयोगिता निर्धारितासीत् । तद्यथा काव्यमीमांसायाम्—

सहकाररसार्चिता रसाला जलभक्तं फलपानकानि मन्था ।
मृगलावरसा शृतं च दुग्धं स्मरसञ्जीवनमौषधं निदाघे ॥ अष्टादशमध्याय

भोजनस्य पानस्य च पश्चात् कश्चित् प्रेयद्रव्याणामुपयोगः कृतः । महा० सभा ५ ६९

## स्वास्थ्यसाधनानि

प्रायो नागरिकाः प्रतिदिनं तावन्मात्रं श्रमं न कुर्वन्ति यावान् तेषां स्वास्थ्यधारणायावश्यको भवति । तथा कृते नियमव्यायामस्यावश्यकता भवते । शरीरे आङ्गिकसौन्दर्यं वर्धयितुं पाचयितुमपि व्यायामः सोपयोगः । व्यायामोद्भवान्याङ्गिकसौष्ठवानि महाभारते वर्णितानि—

यस्य बाहू सुवृत्तौ मे हस्तिहस्तनिभाविमौ ।
ऊरू परिघसङ्काशौ संहतौ चाप्युरो महत् ॥ आदिपर्वणि १४० ९

---

1 धम्मपदअट्ठकथाये २२०, मधुपानजातके २९१, कुम्भजातके ५१२ महापुराणे ६ २८१
२ रामायणे २ ९१ १५, महावग्गे ६ ३५.६
३ महा० आदि ७६ ३
४ तकाकुसुमहाभागानुवादे यात्रावर्णने पृ० ९०,१३५

पृथ्य राजकुमारा प्रतिदिनं व्यायामं कुर्वन्ति स्म ।[1] आयुर्वेदानुसारं व्यायामेन शरीरस्य मांसं स्थिरं भवति, कृशस्य मानवस्यापि शरीरं सुदर्शनं जायते ।[2]

व्यायामार्थं प्रातःकालः सर्वोत्तमोऽभिमतः । व्यवोत्पतनं वल्गनमास्कन्दः मल्लयुद्धं दण्डयुद्धं मुष्टियुद्धमायुधयुद्धं च व्यायामाङ्गानि सम्मितानि ।[3]

समृद्धिशालिना व्यायामार्थं विशेषस्थानानि निर्मितानि । तत्र व्यायामभूमौ व्यायामोपयोगिनामुपकरणानि संगृहीतानि । बहवः समवयस्काः सहैव व्यायामं कृतवन्तः । व्यायामकाले तेषां शरीरेषु स्वेदबिन्दवोऽशोभन्त ।[4] व्यायामविधिः सम्यक्प्रकारेण वैज्ञानिकनियमानुकूलं विकसितः ।[5]

## सौन्दर्यसाधनानि

मानवः शरीरस्य नैसर्गिकसौन्दर्येण परितुष्टो न भवति । शरीरस्य प्रसाधने स्त्रीणां रुचिः स्वभावतः सविशेषं वर्तते ।[6] नित्यमेव शरीरस्य सौन्दर्याभिवृद्धये नवतराणि उपादानानि उपकल्पितान्येव । अयोध्याविषये प्रवृत्तिरियं वाल्मीकिना प्रमाणिता—

नाकुण्डली नामुकुटी नास्रग्वी नाल्पभोगवान् ।
नामृष्टो न लिप्ताङ्गो नासुगन्धश्च विद्यते ॥ बाल० ५ १०, ११

कश्मीरे प्रधान प्रतिहाराणामग्रा इव प्रभानां स्वपरिचारकादीनां वेशभूषा निरधारयत् । कश्मीरस्य हर्षस्य परिचारकाणां वेशभूषा कल्हणेन वर्णिता—

स्वर्णकेयूरमाङ्कुमुकुटलक्ष्मीन्वितः ।
चटुला नितम्बादिपट्टविशेषतिलकाङ्कुराः ॥
अपाङ्गप्रान्तपर्यन्तमकर्ष्याञ्जनरेखया ।
निर्गमित्रुककेशान्तबद्धहेमोपवीतिकाः ॥
अपरान्तवरुच्छामैः सम्वेदचुम्बितभूतलाः ।
प्रच्छादितार्धवक्षोऽम्बरस्तुङ्गकुचपयोधरा ॥ राजतरङ्गिण्या ७ ९२८-९३०

---

१ समराङ्गण ७१ ७४
२ सुश्रुत० चि० २४ अध्याय
३ कल्पसूत्रे महावीरचरिते
४ कादम्बरी १० पृष्ठ ।
५ सुश्रुतसंहितायां चिकित्सास्थाने २४ ३८—४०, ४५—४७
चरकसंहितायां सूत्रस्थाने ७ ३१, ३२
६, ऋग्वेद १-५५

दीघनिकाये कौटकान्तिकप्रसाधनादीनां सूची वर्तते । तद्यथा उच्छादन परिमर्दन नहापन संवाहन, आदास, अञ्जन, माला विलेपन, मुखचुण्णक मुखलेपन, हत्थबन्ध, शिखाबन्ध, दण्डक, नालिक, खग्ग, छत्त, चित्रुपाहन, उण्हीसं, मणि वालबीजनि, ओदातानि वत्थानि दीघदसानि ।M

दन्तधावनम्—

प्रातरुत्थाय सर्वप्रथम दन्तधावनं करणीयमिति नियम आसीत् । दन्तकाष्ठप्रयोगार्थं वृक्षाणां चयनमायुर्वेदानुसारं कृतम् । जना दन्तकाष्ठस्य शिरोभागं कूर्चीकृत्य तैलेन मधुना वाऽभिषिच्य सैन्धवत्रिकटुनागेशोषवतीचूर्णं दन्तेषु घर्षयन्ति स्म ।[१] दन्तधावनस्य लाभा वैज्ञानिकदृष्ट्या पर्यालोचिता । तथा हि—दन्तधावनेन नेत्रे स्वस्थे भवतः मुखात् सुगन्धिनिःसरति । भोजनस्योदरगमनमार्गं परिशुध्यति । भोजने पित्तकफादीनामशुद्धद्रव्याणां सम्मिश्रणं न भवति । भोज्यास्वादनशक्तिरपि वर्धते ।[२] विलासिनामुपयोगार्थं सप्ताहपर्यन्तं विविधव्यञ्जनेषु दन्तधावनं संस्कारितम् ।

केशसंस्करणम्—

दन्तधावनस्य पश्चात् स्नानविधेः प्रागेव केशसंस्करणमक्रियत । प्रतिचतुर्थदिनं श्मश्रुकर्तनं प्रतिपञ्चमदिनं प्रतिदशमदिनं वा केशकर्तनं नागरिकैः कर्तव्यमिति वात्स्यायनः । स्त्रियोऽपि केशकर्तनमकारयन् । पुरुषाणां रुच्यनुसारं श्मश्रुकेशादीनां पूर्णमासिकं वा वपनं कृतम् ।

अङ्गमर्दनम्—

व्यायामस्य पश्चादङ्गमर्दनं विधेयमासीत् । पादाभ्यां मर्दनमुत्सादनमिति हस्ताभ्यां शिरोऽभ्यङ्गकर्म केशमर्दनमिति शेषाङ्गेषु मर्दनं संवाहनमिति कथ्यन्ते । प्रथमं शिरसि तैलमिश्रितम । विशेषेष्वङ्गेषु विभिन्नप्रकाराणां तैलानां मर्दनमभवत् । अङ्गमर्दनविद्याविशारदाः संवाहिकाः समृद्धिशालिभिरस्मै प्रयोजनाय नियुक्ताः ।[३] अङ्गमर्दनस्य पश्चात् उद्वर्तनं कृतम ।[४]

स्नानम्

स्नानं नियमेन दिवसस्य द्विः त्रिः वा यथेच्छम् । सिन्धुसभ्यतायुगे नागरिकाणां स्नानाय

---

M दीर्घनिकाय १ १

१ सुश्रुतसंहितायां चिकित्सितस्थाने २४ ५

२ [illegible] ५ ३? ? । अपरं च—दन्तधावनेन शरीरं सुन्दरं भवति मुखकान्तिर्वर्धते वाणी मधुरा भवति च । बृहत्संहितायां ८५ ११ १४ अवमेव विषयो नारदपुराणे पूर्वभागे द्वितीयपादे ५० अध्याये समर्थितः ।

३ [illegible] ६५ या सूत्रस्थाने ५ ८५ ८८, कल्पसूत्रे जिनचरिते ।

४ सुश्रुतसंहितायां [illegible] २४ ४९

बह्वो जलाशया कारिता ।[1] साधारणलोकाः स्वगृहकूपजलेन स्नानागारे स्नातवन्त । शरीरं स्वच्छं विधातुं सदा बहुविधद्रव्याणामुपयोग प्रचलित । पुरा नगराणि प्रायशो नदीतटेषु स्थितानि बभूवु । सार्वजनिकसरोवराणां जलविशुद्धये अनेकप्रकारसाधनानि प्रयुक्तानि ।

समृद्धिशालिनां स्नानविधि महाभारतीयेनाधोलिखितवर्णनेन परिपोष्यते—

उत्थायावश्यकार्यार्थं ययौ स्नानगृहं नृप ॥
तत शुक्लाम्बरा स्नातास्तरुणा शतमष्ट च ।
स्नापका काञ्चनैः कुम्भैः पूर्णैः समुपतस्थिरे ॥
भद्रासने सूपविष्ट परिधायाम्बरं लघु ।
सस्नौ चन्दनसंयुक्तैः पानीयैरभिमन्त्रितैः ॥
उत्सादित कषायेण बलवद्भि सुशिक्षितैः ।
आप्लुत साधिवासेन जलेन स सुगन्धिना ॥
राजहंसनिभं प्राप्य उष्णीषं शिथिलार्पितम् ।
जलक्षयनिमित्तं वै वेष्टयामास मूर्धनि ॥
हरिणा चन्दनेनाङ्गमुपलिप्य महाभुज ।
स्रग्वी चाक्लिष्टवसन प्राङ्मुख प्राञ्जलि स्थित ॥ द्रोण० ५८ ८ १३

शरीराङ्गेषु स्फूर्तिमाधातुं चर्मरोगांश्च नाशयितुमिच्छया पर्वणि कृतम् ।[1] स्नानागारा परमरमणीया रत्नमणिमौक्तिकजटिताश्च बभूवु । स्नानविधि क्वचित् क्रीडामयो ऽभवत् ।[2] स्नानस्य प्राय सर्वेऽपि गुणा प्राचीनयुगेऽप्रचारिता आसन् ।[3]

स्नानप्रक्रियाणां वैज्ञानिकपर्यालोचनं कृतमासीत् । तथा हि—उष्णजलेन शिरस स्नानात् नेत्रदौर्बल्यं जायते । शिरस स्नानं शीतलजलेन कर्तव्यम् । शीतर्तौ वायुकफा॰ दीनां विकारोऽतिशीतलजलस्नानेन भवति । ग्रीष्मे पित्तरक्तादीनां विकार उष्णजलस्नानेन संभवति ।

भारतीयं स्नानं तु पुरापि शरीरस्याभ्यन्तरबाह्यशुद्धयेऽभवत् ।[4] प्राचीनकाले योरपीयस्नानागारा रोमादिनगरेषु प्रायश कामवृत्तिपरितर्पणायासन्निरन्तरम् ।

M अत्र महास्नानागारस्य भू । १२० × ७२ हस्तायाम आसीत् तस्मिन् स्नानकुण्डस्य २६ × १६ हस्तायाम आसीत् । स्नानागारमध्याभ्यन्तरभागे परित प्रकोष्ठमभवत् । यथाकालं स्नानजलं नवीकृतम् । महास्नानागारस्य दक्षिणपश्चिमभागे च नवावस्य स्नानागारावशेषम् । एतस्य नगरस्य मण्डलिकादपरेषु स्नानगृहेषु उष्णताया प्रसार कृत ।

१ सुश्रुतसंहितायां चिकित्सितस्थाने २४ ५४

२ कल्पसूत्रे जिनचरिते

३ चरकसंहितायां सूत्रस्थाने ५ ९१ सुश्रुते चिकित्सितस्थाने २४ ५५-५९

४ स्नानं नाम मनःप्रसादकरं दुःस्वप्नविध्वंसनम् ।

आकल्प प्रसाधनञ्च

स्नानस्य पश्चात् शरीरस्य प्रसाधनं क्रियते । तद् द्विविधम्। प्रथम तावत्—अनुलेपनं, चित्रण, वासयोग, तिलकधारण च । द्वितीय तु शरीराङ्गेष्वाभरणधारणम् । प्रसाधन न केवल विलासार्थमेव, अपि तु वैज्ञानिकदृष्ट्या चन्दनकेसरादीना सुगन्धितद्रव्याणामनुलेपनेन पुष्पमालाधारणेन च वपुषासुगन्धिसौन्दर्यायुर्बलपुष्टीना सवर्धन भवति, मन प्रसन्न जायते, दारिद्र्य दूर याति च ।[1]

सिन्धुसभ्यतायुगस्य बहूनि प्रसाधनपात्राणि प्राप्तानि सन्ति। कतिपयानि प्रसाधनद्रव्याण्यपि तेषु वर्तन्ते। तस्मिन् युगे नेत्रयो प्रसाधन शलाकयाऽञ्जनयोगेन कृतम्। शरीरस्य रञ्जनं रक्तद्रव्येण कृतम् । शरीरस्य शुभ्रता विधातु कस्यचित् द्युतिमतो वस्तुन प्रयोगोऽभवत् ।

वैदिकयुगेऽपि हिरण्मयत्वमिन्द्रस्य केनचिदनुलेपनेन प्रसिद्धम् ।[2] तदा यज्ञकर्मणि प्रयुक्तो यजमानो नवनीतेन शरीरस्यानुलेपनमकरोत् । चूर्णं शरीरस्य सौन्दर्यं सवर्धितम् ।[3] महाभारतानुसार राजगृहेषु प्रमदाना प्रसाधनाय सैरन्ध्रीणा नियुक्ति कृता । राज्ञां प्रसाधनार्थं दास्य शिल्पिनश्चापेक्षितवस्तूनामुपकल्पन कुर्वन्ति स्म ।[4] नायिकानायकयो मनोविनोदार्थमपि परस्पर प्रसाधनस्य रीतिरासीत् । पति पत्न्या कपोले चित्रमर्पयति स्म ।[5] राज्ञा प्रसाधनविधि कालिदासेन निर्दिष्ट —

धूपाश्यानकेशान्त तोयनिर्णिक्तपाणय ।
आकल्पसाधनैस्तैस्तैरुपसेदु प्रसाधका ॥
तेऽस्य मुक्तागुणोन्नद्ध मौलिमन्तर्गतस्रजम् ।
प्रत्यूपु पद्मरागेण प्रभामण्डलशोभिना ॥
चन्दनेनाङ्गराग च मृगनाभिसुगन्धिना ।
समापय्य ततश्चक्रु पत्र विन्यस्तरोचनम् ॥ रघुवंशे १७ २२-२४

---

शौचस्यायतनं मलापहरणं संवर्धनं तेजस ॥
रूपोद्योतकरं रिपुमन्मथं कायाग्निसन्दीपनम् ।
नारीणां च मनोहरं श्रमहरं स्नाने दशैते गुणा ॥

१ चरके सूत्रस्थाने ५ ९१
कल्हणानुसारं तु
यस्मादक्षुद्रं सर्वं विरमति श्री सपत्नाद् भवेत् ।
नानाकारमपि मनार्थित चित्रं शाल्मलादस्मन ।
यत्रैव क्रियते ममाऽनियमात् कर्पोऽजिराते परम् ॥ राजत० ४ ११९

२. ऋग्वेदे १ ११३ ८

३. कौषीतकिब्राह्मणोपनिषदि १ ४

४. महाभारते ४१.८, अर्थशास्त्रे 'अभ्यन्तराचारे' । नारीणां शरीरेषु नानामनुरागिणो अलङ्करणं कुर्वन्ति स्म । बुद्धचरिते

५ प्रतिमानाटके प्रथमाङ्के, सौन्दरनन्दे च ।

दिनभागमधिकृत्य वेषवैशिष्ट्यं कृतमासीत् । तद्यथा काव्यमीमांसायाम्—अभिनवकुसुमविमर्दाधिकर्णौ शिरीषं मल्लवकपरिवारं पाटला दामकण्ठे । स तु सरसजलार्द्रोन्मीलित सुन्दरीणां दिनपरिणतजन्मा कोऽपि वेषश्चकास्ति ॥

विभिन्नर्तुषु प्रसाधनानां वैचित्र्यस्य कल्पना गुप्तयुगे सविशेषं दृश्यते । तथा हि शिशिरं विहाय सदैव चन्दनानुलेपनं नित्यं क्रियते स्म । हेमन्ते रमण्यः कपोलप्रदेशेषु पत्रलेखा विरचयन्ति स्म । वसन्ते सितचन्दनस्य लेपः प्रियोऽभूत् । वक्ष प्रदेशे प्रियङ्गुकालीयककुङ्कुम-कस्तूरिकाणां चन्दनेन मिश्रणं कृत्वा लेपः कृतः । अस्मै प्रयोजनाय रक्तचन्दनमपि प्रयुक्तमभवत् । हरिचन्दनं सुप्रियं बभूव । सर्वाङ्गेषु तस्य लेपः कृतः ।[1] ग्रीष्मस्य सन्तापः प्रसाधनैः शमितः । तद्यथा काव्यमीमांसायाम्—

मुक्तानस्यश्चन्दनपङ्कदिग्धा मृणालहारानुसृता जलार्द्रा
स्रजश्च मौलौ भिततचम्पकानां ग्रीष्मेऽपि सोऽयं शिशिरावतारः ।
अपरश्च ग्रीष्मस्य कल्पवैशिष्ट्यं वर्णितं तत्रैव
कर्णे स्मेरं शिरीषं शिरसि विचकिलस्रग्लता पाटलिन्यः
कण्ठे माणलिहारो वलयितमसिनाम्भोजनालं कलाच्यो ।
सामोदं चन्दनाम्भः स्तनमुपिनयने म्लानमाजिष्ठपृष्ठे
गात्रं शैवलजलार्द्रं जयति मृगदृशां ग्रैष्मिको वेष एषः ॥

विभिन्नाङ्गानां प्रसाधनार्थं विविधा रचना द्रव्याणि चोपयोजितानि । एषु ताम्बूलचर्वणेन सामान्यतोऽधरराग समजनि । पत्रवल्लीभिः मुखे कस्तूरिकया चित्राणि विरचितानि । दन्तलेखका दन्तरञ्जनं कुर्वन्ति स्म । अधरस्य विशेषरागो यावकेन कृतः ।[2] अक्षिणोऽञ्जनं पल्लवकवदुत्पत ।[3] कपोले पत्रलेखा तिलकञ्च कृतौ । मुखे पाण्डुता विधातुं लोध्रपरागा विकीर्णः । मुखवासेन श्वासः सुगन्धितः ।[4] स्तनस्तनमनुलिप्यत । बाहू चन्दनागुरुलेपैर्धूपितौ ।[5] पादौ लाक्षारसेन रञ्जितौ । तयोः शोभा पल्लवाकृतिभिः संवर्धिता । अङ्गुष्ठे तिलका रचितः । अलक्तकरागेण बहुविधानि चित्राणि तत्र कृतानि ।[6] वक्ष स्थले चन्दनलेपं कृत्वा तत्र केसरो विकीर्णः । ललाटे भ्रुवोरुपरि पुष्पगुच्छाकृतिः रचिता ।[7] दन्तानां बहुधा रागः कृतः । तद्यथा नाट्यशास्त्रे—

---

१ ऋतुसंहारे २ २२ ४५,६ ७,१४ कादम्बर्यां पृ० २०६ शिशुपालवधे ८ ५७, रघुवंशे ११,१७,६ ६०,७२ हरविजय १७ ८६ हरविजये १५.२१
२. शिशुपालवधे ८ ५५,९ ४६
३. नाट्यशास्त्रे २२.२६
४ शिशुपालवधे ६ ५२
५ सभापर्वणि २१ ३०
६ नाट्यशास्त्रे २१ ४० ४१, ऋतुसंहारे १ ५ कादम्बर्यां ११ पृ०
७ नाट्यशास्त्रे २१.२४

नेत्रयो रञ्जनं कार्यमधरस्य च रञ्जनम् ।
रञ्जना विविधा रागाश्चतुर्णा युवतता यथा ॥ २१ २८

न केवलं युवका अपि तु बालका अपि धातुरसैः शरीरं रञ्जयन्ति स्म । प्रसाधनपरीक्षणाय दर्पणस्योपयोगः कृतः । बहुविधा धातुनिर्मिता दर्पणा बभूवुः ।[1]

गुप्तयुगेऽष्टविधा गन्धाङ्गरागादयो निर्मिताः । तेषां वैविध्यं प्रयुक्तोपकरणानां वैविध्येन तेषां मात्राया न्यूनाधिक्येन च कल्पितम् ।[2]

केशरचना

केशा द्वयोरपि स्त्रीपुरुषयोः समानरूपेण लम्बा बभूवुः । लोकास्तेषां संवर्धनाय प्रसाधनाय च प्रायतन्त । सिन्धुसभ्यतायाः युगादेव भारतस्य विविधभागेषु विविधप्रकारैः केशप्रसाधनं प्रचलितम् । वैदिकयुगे कङ्कतप्रयोगेण केशरचना कृता । केशाः सगृह्य शिरसः शिखरभागे ओपशरचना कृता । पृष्ठस्तुका विपितष्टुका च त्रिविधे वेण्यौ रचिते । शिरसि केशपाशानां कपर्दः कृता[3] ।

श्वेतकेशानां विरलत्वे भूते तेषामुन्मूलनं कृतम् । श्वेतकेशानां बाहुल्ये भूते केशकल्पेन तेषां श्यामीकरणं सुप्रचलितमासीत् ।[4] स्नानस्य पश्चात् केशपाशं शोषयित्वा तैलैः सुगन्धितधूपैश्च तस्य सुवासनमक्रियत ।[5]

कबरीश्च शिरसः पश्चभागे चूडाश्चाग्रभागे कृतौ । शिरसोऽग्रभागे कुरलरोमशा स्त्रिय प्रागुल्फेभिः प्रथिता । नापितः कर्तनेन श्मश्रुणोरलङ्करणं कृतवान् ।[6]

प्राचीनयुगस्य केशरचनासमकालिकमूर्तिचित्रादिषु प्रत्यक्षीकर्तुं शक्यते । अजन्ताबाघादिषु स्थानेषु गुहानां चित्रेषु खजुराहोभुवनेश्वरादिषु स्थानेषु मन्दिराणां मूर्तिसहस्रेषु च केशकल्पः प्रत्यक्षं वर्तते । ग्रन्थेषु केशरचनानेकधा वर्णिता । तथाहि नाट्यशास्त्रे—

अवन्तियुवतीनां तु शिरः सालककुन्तलम् ।
गौडीनामलकप्रायं सशिखापाशवेणिकम् ॥

---

१ शतपथे १ ४ ५.२२, पतञ्जलौ ३५५
२ बृहत्संहितायां ७७ अध्याये
३ ऋग्वेदे ८ [redacted] ९,१० ११४ ३ अथर्ववेदे ६ १३६,८ २ १७,शतपथे ५ ५ ३ ?
४ अमरकोशे ३ ४४ बृहत्संहितायां ७७ १
५ रघुवंशे १६ ५० । विविधानां सुगन्धितैलधूपवासनद्रव्यकेशकल्पानां निर्माणविधिः बृहत्संहितायां ७७ ४ २० वर्तते । तथा हि १७६७२० विधा गन्धा षोडशद्रव्याणां मिश्रणेन सम्भवन्ति । अत्र एतत्सम्बन्धिनां वराहमिहिरस्य उल्लेखः 'कलात्मक रसायनो' ग्रन्थे प्रथमाध्याये विद्यते ।
६ महाभाष्ये १ १ ९, ४ १ ६० तथा १ २ ९

आभीरयुवतीनां तु द्विवेणीधरमेव च ।
शिरः परिगतं कार्यं नीलशायमथाम्बरम् ॥
तथा पूर्वोत्तरस्त्रीणां समुद्गतशिखण्डकम् ।
आकेशं छादनं तासां वेशकर्मणि कीर्तितम् २१ ६५-६७

केशस्यैकस्मिन्नेव दिने वारं वारं संस्करणं कृतम् ।[1]
अमरकोशे मनुष्यवर्गे केशरचनामधिकृत्य निदर्शितम्—

अलकाश्चूर्णकुन्तलाः काकपक्षः शिखण्डकः ।
कबरी केशवेशः, अथ धम्मिल्लः संयताः कचाः ॥
शिखा चूडा केशपाशी व्रतिनस्तु जटा सटा ।
वेणिप्रवेणी शीर्षण्यशिरस्यौ विशदे कचे ॥
पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ।

केशेषु पुष्पग्रथनं सुप्रचलितरीतिरभवत् । चित्रमाल्यानुकीर्णकेशपाशस्य वर्णनं कालिदासेन कृतम्—

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥ रघुवंशे ९ ६७

## अलंकाराः

सौन्दर्यसंवर्धनाय दम्भप्रदर्शनाय सौभाग्याधानाय च प्रायः सर्वदैवालङ्कारधारणविधिः प्रचलितोऽभवत् ।[2] अलङ्कार-निर्माणाय मृत्तिका-शुक्ति-पत्र-पुष्प-लता-फल-धातु-रत्न-मणि-हस्तिदन्त-काचादीनां प्रायोऽनायासप्राप्यानां महार्घाणां च वस्तूनामुपयोगः कृतः । विशाले भारते अलङ्कारार्थं बहुविधानामुपादानानां प्रायः सर्वत्र प्राचुर्यं वर्तते एव । शरीरस्य प्रायः सर्वाण्यङ्गानि विभूषणस्थानानि भवितुमर्हन्ति ।

---

१ मृच्छकटिके २ ९ ।

२ सौभाग्याधानायालङ्कारस्योपयोगिताऽथर्ववेदे वर्णिता । तथा हि—
अग्ने प्रजातं परिषद्धिरण्यममृतं दध्रे अधिमर्त्येषु ।
य एनद्वेद स इदेनमर्हति जरामृत्युर्भवति यो बिभर्ति ॥ १९ २६ १
गजमुक्ताधारणेन पुत्रविजयसौभाग्यानि प्राप्यन्ते । बृहत्संहितायां ८१ २२

### शिरसोऽलङ्काराः

सिन्धुसभ्यतायुगे शिरः मृत्तिकाहस्तिदन्तस्वर्णरजतादिभिर्निर्मितैः त्रिकोणैः सज्जितम्। स्त्रियः केशेषु पुष्पग्रथनं कुर्वन्ति स्म। ललाटे स्वर्णपत्रं बद्धम्। परवर्तिकाले विशेषकच्छेद्यविधिना निर्मितः पत्राणां ललाटतिलको धारितः।[1]

वैदिकयुगे केशगुच्छकाः कुरीरैराबद्धाः। राजा शिरसि स्वर्णमुकुटमशोभत। परवर्तियुगे चूडामणिमुक्तागुणकिरीटादयः शिरोऽलङ्काराः बभूवुः। स्त्रियः वेणीषु स्वर्णसूत्राणि बध्नन्ति स्म। तासामलकेषु मुक्ताजालानि ग्रथितानि।

भागवतानुसारं कृष्णस्य शिरसि मयूरपिच्छालङ्करणं बभूव। गोबाला लताप्रतानैः जटाजूटं बध्नन्ति स्म। कतिपयवनप्रिया शिरसि पुष्पालङ्कारमेव बहु मन्यन्ते स्म। राज्ञा मुकुटान्यपि मालतीकुसुमैः रचितानि।[2] राज्ञां मौलिषु पुष्पमाला ग्रथिता। स्त्रीणामलकेषु बालकुन्दपुष्पम्, चूडापाशेषु नवकुरबकपुष्पम्, सीमन्तेषु नीपपुष्पं ध्रियन्ते स्म। शिरसि पुष्पावतंसः प्रायः धृतः। विविधानां पुष्पमालानां वर्णनममरकोशे विद्यते। यथा हि—

> माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः।
> प्रभ्रष्टकं शिखालम्बि पुरो न्यस्तं ललामकम्॥
> प्रालम्बमृजुलम्बि स्यात्कण्ठात् वैकक्षकं तु तत्।
> यत्तिर्यक् क्षिप्तमुरसि शिखास्वापीडशेखरौ॥

स्त्रियः सीमन्तप्रदेशे मुक्तामयमलङ्कारं शशिकलेति ख्यातं धारयन्ति स्म। तासां ललाटे स्वर्णशृङ्खलाबद्धमङ्गुलातिलकोऽशोभत। कतिपयाः स्त्रियः ललाटिकां धारन्ति स्म।[3] पुरुषा अपि ललाटे सुवर्णपट्टिकां धारन्ति स्म। तेषां कपोलतले कुण्डलद्वयं विराजितम्।[4]

### कर्णालङ्काराः

सिन्धुसभ्यतायुगादेव कर्णेषु बहुविधा अलङ्काराः ध्रियन्ते स्म। तादृशानामलंकाराणां नामानि—कर्णोत्तंस, कर्णेन्दु, कर्णदर्पण, कर्णमुकुर, कर्णपाली, कर्णपूर, कर्णपाश, कर्णभूषणम्, कर्णवेष्ट, कुण्डलम्, कर्णिका, कर्णवलय, ताटङ्क, तारी, दंतपत्रं, पत्रकर्णिका, कर्णमुद्रा, कर्णोत्पलमिति साहित्यग्रन्थेषु प्राप्यन्ते। कर्णालङ्काराः प्रायः पत्रपुष्पैरपि

---

१ कामसूत्रे १ ३ १६ टीका
२ कादम्बर्यां ९ पृष्ठे
३. रघुवंशे १० २१
४. हरिवंशे २३ ३६ ३० ४० २६
५. नैषधचरिते १५ ६१ ६५

रचिता । ग्रामवधूटीना कर्णालङ्कारण शस्यकणिकेनापि कृतम् । पुरुषाणा कर्णालङ्कारा स्त्रीवद् बभूवु ।[1] कर्णालङ्कारधारणार्थं कर्णवेधस्य प्रचलनमासीत् ।

## ग्रीवालङ्कारा

ग्रीवालङ्काराणा सख्या सदैवात्यधिका बभूव । ग्रीवावलम्बनेन बहुमारवन्तोऽपि बहवोऽलङ्कारा धृता । ग्रीवाया धृतानामलङ्काराणा नामानि—सूत्र, हार , माला, ग्रैवम्, ग्रैवेयकम्, कण्ठाभरणम्, मणिमाला, रत्नावली, मुक्तालता, मौक्तिकसर , कनकसूत्रम्, कण्ठकञ्च प्राप्यन्ते । हाराणा वैदिकनामानि रुक्म निष्क सृङ्का प्राप्यन्ते । मणिग्रीवा निष्कग्रीवाश्च पुरुषा. समादृता बभूवु ।

परिवर्तियुगे मौक्तिकहाराणा प्रचलनं सविशेषमभवत् । दीर्घह्रस्वमुक्ताना संग्रथनक्रमवैविध्येन शीर्षकोपशीर्षकप्रकाण्डकावघाटकतरलप्रतिबन्धकादय यष्टयो बभूवु । हारेषु क्रमश १००८, ५०४, १००, ६४, ५४, ३२, २७, २४, २०, १० यष्टय सगृहीता । एतेषा नामानि—इन्द्रच्छन्दो विजयच्छन्दो, देवच्छन्दोऽर्धहार , रश्मिकलाप , गुच्छ , नक्षत्रमाला, अर्धगुच्छ , माणवकः, अर्धमाणवकश्चासन् । मुक्तामणिस्वर्णगुलिकादीना परस्पर सग्रन्थनेन यष्टीना रत्नावली, अपवर्तक , सोपानक, मणिसोपानकश्चेति भेदा कृता ।[2] नाट्यशास्त्रानुसारं हाराणा भेदा विभूषिताङ्गदृष्ट्यापि भवन्ति । तथा हि कण्ठविभूषण—'मुक्तावली, व्यालपक्ति , मञ्जरी, रत्नावली, रत्नमालिका, शृङ्खलिकादय ' कण्ठस्य शोभासंवर्धनाय भवन्ति । त्रिसरो हारश्च वक्ष स्थलशोभनाय भवत । देहभूषणेन समग्रशरीर शोभते । कटिप्रदेशशोभनाय तरलसूत्रकादय भवन्ति ।[3]

उपर्युक्तहाराणा रचना बहुमूल्यरत्नादिकैरभवत् । कण्ठस्य विभूषणाय पुष्पमालाना प्रचलन वैदिकसाहित्येऽपि दृश्यते । अश्विनौ देवौ पुष्करस्रजौ आस्ताम् । न केवल मनुष्या अपि तु पशवो गृहा अपि च हारै. मालाभिश्च समलकृता ।

उपकरणदृशा मालाश्चतुर्विधा —आर्द्रशुष्कोन्मुक्तमिश्रा बभूवु । पुष्पादीनामार्द्रमाला, शुष्कपत्रादिसम्भूता शुष्कमाला, सिक्थादिसम्भूतोन्मुक्तमाला, सर्वेषा मिश्रणेन मिश्रमालेति ख्यापितम् ।[4]

## भुजालङ्कारा

सिन्धुसभ्यतायुगादेव प्राय सदैव भुजयो प्रकोष्ठप्रदेशे धातुशुक्तिमृत्तिकाकाचादिभिर्निर्मिताः कङ्कणवलयादयोऽलङ्कारा धारिता । बाहुप्रदेशे भुजबन्धेन करशालाश्चाङ्गुलीये

---

१. नैषधचरिते १५ ६५
२ विशेषज्ञानाय अर्थशास्त्रे अधयक्षप्रचारोऽध्याय ११ द्रष्टव्य ।
३. नाट्यशास्त्रे २१ १०-३८
४. पद्मपुराणे २४.४४ ४५

विभूषिता । हिरण्यस्तादि कङ्कणवत् धारितं । भुजेषु रामायणमहाभारतानुसारं वलय केयूराङ्गदानां विभूषणं रराज । पुरुषाणां वलया रत्नमणिस्वर्णादिभी रचिता । नाट्य-शास्त्रानुसारं भुजालङ्कारा बहुविधा आसन् ।[१] तथा हि

अङ्गदं वलयं चैव बाहुमूलविभूषणम् ।
खर्जुरं स्वेच्छिद्रतीकश्च बाहुनालीविभूषणम् ॥
कटकं कलशाखा च हस्तपत्रं सुपूरकम् ।
मुद्राङ्गुलीयकं च स्यादङ्गुलीनां विभूषणम् ॥ २१ ३४-३५

रसिकानां वलयास्तु पद्मनालैरपि रचिता ।[२] हस्तेषु लीलाकमलानि धारितानि । स्त्रीपुरुषयोर्द्वयोरपि हस्ते छत्रं विभूषणाय बभूव ।

छत्रं यष्टिर्वा नागरिकैरवश्यमेव धारणीया इति सम्मानं मा'यताबोत् । राज्ञां छत्राणि पक्षिणां पिच्छैः निर्मितानि परितः शुल्कदुकूलैराच्छादितानि च बभूवु । यत्र यत्र तेषां छत्रेषु मणय उपविता मौक्तिकहाराश्च बहिर्भागादवलम्बिता । छत्रस्य मूलभागः स्फटि-कमणिना विरचितः, दण्डो वेतसेन निर्मितः । वैभवशालिनां छत्रं स्वर्णपत्रैराच्छादितं पुष्प-मालाभिः समलङ्कृतञ्च बभूव । मध्याकालमातपादर्पात् शीताच्च रक्षा छत्रेण कृता । यष्टि-हस्ता जना याष्टिका इति सञ्ज्ञिता ।

नायिका कुमुदिनीहस्ता नायकदर्शनं कुर्वन्ति स्म ।[३]

कटिभूषणानि

कटिप्रदेशे काञ्चीविभूषणं शिप्युसम्यतायुगात् प्रचलति । काञ्चीकलापे रत्नानि ग्रथि-तानि । तस्य वैविध्यं नाट्यशास्त्रे वर्णितम्—

काञ्चीमौक्तिकजाम्लाता कुलकं मेखला तथा ।
रशना च कलापश्च भवेच्छ्रोणीविभूषणम् ॥
एकयष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका ।
रशना षोडश ज्ञेया कलापः पञ्चविंशतिः ॥ २१ ३६,३७

पुष्पाणामपि काञ्ची कृता । तथथा कुमारसम्भवे

स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण मौर्वीं द्वितीयामिव कार्मुकस्य ॥ ३ ५५

पादभूषणानि

सिन्धुसभ्यतायुगे जानुप्रदेशादारभ्याप्रपदमलङ्करणमभवत् । पादयोर्नूपुरं सुप्रथितमेव । नाट्यशास्त्रे पादभूषणानामावर्णनं कृतम् । तथा हि—

१ कर्कोटमुद्रिका च स्यादङ्गुलिविभूषणम् ।
केयूरमङ्गदं चैव कूर्परोर्ध्वं विभूषणम् ॥ नाट्यशास्त्रे २१.१७-१९

२. विक्रमोर्वशीये ८ ४४; कादम्बर्यां १

३ हर्षचरिते १ २७

नूपुरं किङ्किणीकं च रत्नजालकमेव च ।
सघोषकटकं चैव गुल्फोपरि विभूषणम् ॥
पदयो पादपत्रं स्यादङ्गुलीष्वङ्गुलीयकम् ।
अङ्गुष्ठे तिलकं चैव पादयोश्च विभूषणम् ॥ २१ ३९-४०

पादेषु हंसकः पादकटको वा हंसवद् ध्वनिमकरोत् ।[१] हर्षस्य सामन्ता रत्नजटितं पादकटकमधारयन् । हरविजये पादाङ्गदस्य मञ्जीरकस्य वर्णनं वर्तते ।[२]

पादयोः सुरक्षार्थं पदत्राणधारणस्य रीतिः वैदिककालतः प्रवर्तते । पदत्राणस्य विविधभेदाः यथानुपादानरंगाकारापेक्षया बभूवुः । पदत्राणेष्वपि स्वर्णरजतसूत्रैः मणिरत्नमुक्तादिभिश्च शिल्पानि रचितानि । चर्मदारुकमलपत्राणादिभिः पादुका निर्मिताः ।[३] पादुका अपि स्वर्णभूषिता अलंकृता बभूवुः । कलकत्तासंग्रहालयस्य भौरियनटङ्क्ष्वाईति स्थाने प्राप्तस्य गौतमबुद्धस्य मूर्तौ आधुनिकचप्पलवत् पदत्राणं वर्तते ।[m]

भारते सदैव प्रसाधनानामाधिक्यं समृद्धिशालिनागरिकेभ्योऽभूत्, किन्तु साधारणजनाः सदैव सरलजीवनविन्यासेन परितुष्टा बभूवुरिति ह्वेनसांगेन प्रमाणितम्—The kshatriyas and Brahmins are cleanhanded and unostentatious, pure and simple in life and very frugal The dress and ornaments of the kings and grandees are very extraordinary Garlands and tiaras with precious stones are their head-adornments, and their bodies are adorned with rings, bracelets and necklaces, wealthy mercantile people have only bracelets Most of the people go barefoot and shoes are rare [४]

नागरिकाः नखस्य रंजनं कुर्वन्ति स्म ।[५]

## वस्त्र-विन्यासः

भारतीया जलवायुः यथा यत्र समशीतोष्णो वर्तते । स्वभावतो जना द्वन्द्वविनिर्मुक्ताः सन्ति । अस्यां स्थितौ वस्त्राणामावश्यकता नात्यधिका भवति । अपरं च प्राचीनयुगे शृङ्गाराणां प्रदर्शनार्थं नाधिकवस्त्रधारणमपेक्षितमभवत् । तथापि शरीरशोभाय बहुमूल्य-

१ शिशुपालवधे ७ २३
२ हर० १८ ८, १५ ५
३ तै० सं० ५ ४ ४ । गतपथ० ५ ४ ३ १९, महाभाष्ये ५ १ २ १४ महाभाष्ये ५ २ १ ८५ ८ १ ३
M S K Saraswati A Survey of Indian Sculpture Plate XIV Fig 63
४ ह्वेनसांगे वाटर्सकृते भागे १ पृ० १५१
५ महाभाष्ये ६ १ ७३

वस्त्रपरिधानेनापि करणीयमिति नागरिकाणां शाश्वतधारणाऽभूत्। तेषां प्राच्यानां वस्त्रविन्यासपरिज्ञानं चित्रमूर्तिशिल्पसाहित्यादीनामनुशीलनेन भवति।

स्वभावतो वस्त्राकलनमृतुमपेक्ष्य भवति। तथा हि ऋतुसंहारानुसारं—

हेमन्ते—न बाहुयुग्मेषु विलासिनीनां प्रयान्ति सङ्गं वलयाङ्गदानि।
नितम्बबिम्बेषु नवं दुकूलं तन्वंशुकं पीनपयोधरेषु॥ ४.३

शिशिरे—गुरूणि वासांसि प्रयान्ति सेव्यताम्। ५.२
मनोज्ञकूर्पासकपीडितस्तनाः सरागकौशेयकभूषितोरवः॥ ५.८

वसन्ते—कुसुम्भरागारुणितैर्दुकूलैर्नितम्बबिम्बानि विलासिनीनाम्।
तन्वंशुकं कुङ्कुमरागगौरैरलङ्क्रियन्ते स्तनमण्डलानि॥ ६.५
गुरूणि वासांसि विहाय तूर्णं तनूनि लाक्षारसरञ्जितानि।
सुगन्धिकालागुरुधूपितानि धत्ते जनः काममदालसाङ्गः॥ ६.१५

रात्रिदिवसयोर्वस्त्राण्यपि विभिन्नान्येव।[1] तथा हि—

सुरतसमयवेषं नैशमाशु प्रहाय
दधति दिवसयोग्यं वेषमन्यास्तरुण्यः॥ ऋतुसंहारे ५.१४

बौद्धभिक्षूणां वर्षर्तुयोग्यं वस्त्रं निर्धारितमासीत्। तेषां स्नानवस्त्राण्यपि निर्दिष्टानि।[2]
स्थानभेदानुसारं वस्त्रवेषवैविध्यं वर्तते। तथाहि काव्यमीमांसानुसारम्—

गौडदेशेषु—सीमन्तचुम्बिसिचयः स्फुटबाहुमूल
महोदयदेशेषु—आश्रोणिगुल्फपरिमण्डलितान्तरीयम्।
केरलदेशेषु—कक्षानिवेशनिबिडीकृतनीविरेष
वेषश्चिरं जयति केरलकामिनीनाम्॥ काव्यमी० तृतीयाध्याये

## वस्त्रविन्यासाभिरुचिः

सिन्धुसभ्यताया निर्वर्त्तकेष्वपि वासे जनानां विशेषाभिरुचिः प्रमाणीक्रियते। वैदिक-युगे सुरम्यं विन्यस्तानि वस्त्राणि 'सुवसनानि' इति ख्यातानि। सुवसनधारिणो जना सुवा-

---

१ ऋतुसंहारे ५.१४ महाभारतानुसारं तु—
अन्यदेव भवेद्वासः शयनीये नरोत्तम।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि॥ अनु० १०४.८८

२ महावग्गे ८.१५.११

सस इति प्रतिष्ठिता। वस्त्रविन्यासस्यापरं विशेषणं 'सुरभि' इति बभूव।[1] अथर्ववेदानुसारं नववस्त्रधारिणे कामना वर्तते—

हिरण्यवर्णो अजरः सुवीरो जरामृत्यु प्रजया सं विशस्व।
तदग्निराह तदु सोम आह बृहस्पतिः सविता तदिन्द्रः ॥ १९.२४.८

अधोवासविन्यासेन हस्तिशुण्ड-मत्स्यजाल-चतुष्कोण-तालवृन्त-शतवल्लिकादीनामाकारा रचिता।[2] शरीररंगानुरूपं वस्त्रं भवेदिति रीतिरासीत्।[3]

परवर्तिसाहित्येऽपि निर्मलवस्त्रधारणेन विशेषयोग्यताधानं निर्दिशितम्। चरकानुसारं निर्मलवस्त्रैः सौन्दर्यं यशः आयुश्च वर्धन्ते, दारिद्र्यं दूरं भवति, मनः प्रसन्नं जायते, सुश्रीकता सम्भवति, परिषदि च सम्मानो जायते। वस्त्रविन्यासैः सौजन्यं व्यज्यते।[4] श्वेतवस्त्रे नागरिकाणां विशेषाभिरुचिरभवत्।

वैदेशिकवस्त्रविन्यासं प्रति भारतीयानां रुचिः प्राचीनकालेऽपि अभूत्। शककुषणादि-जातीनां 'टोपकचुकपायजामाशलवारादीनि' शीर्षाब्दस्यारम्भिकयुगादेव समृद्धिशालिभिर्जनैः परिगृहीतानि।

## वस्त्रोपादानानि

प्रारम्भिकयुगे चर्मवल्कलपत्रादीनां वस्त्रवदुपयोगो वनवासिभिरपि कृतः। एषामुपयोगः परिधानार्थं न कदापि निरुद्धः। सिन्धुसभ्यतायुगे 'ऊर्णकार्पासादीनां' वस्त्राणि निर्मितानि।

वैदिकवस्त्रोपादानानि मृगचर्मोर्णवल्कलक्षौमादीनि बभूवुः। क्रिमितन्तस्य कौशेयवस्त्रस्य वा प्रचलनं शीर्षाब्दं समारम्भात् प्रागेवासीत्।[5] वस्त्रनिर्माणाय पिच्छानां तृणानामपि योगः आसीत्। वस्त्रनिर्माणाय पत्रेभ्योऽपि ऊर्णं गृहीतम्। नागलिकुचबकुलवटादीनां पत्रोर्णनिर्मितानि वस्त्राणि क्रमशः पीतगोधूमश्वेतनवनीतवर्णानि बभूवुः।[6] पतञ्जलिः कार्पास, माङ्गीन, कौशेयमौर्णं च वस्त्रकोटिकमुपादानानुसारं वर्णयति।[7]

## वस्त्रालंकरणम्

सिन्धुसभ्यतायुगे वस्त्राणां चित्रणं प्रचलितमासीत्। समृद्धिशालिनामुत्तरीये पत्रपुष्पाणां चित्राणि शोभन्ते स्म। कतिपयवस्त्राणि रञ्जितानि आसन्।

---

१ ऋग्वेदे १.१२४.७,९.९७.५०,६.२९.३
२ चुल्लवग्गे ५.२९.४
३ महापरिनिब्बानसुत्ते २.१८
४ चरकसंहितायाः सूत्रस्थाने ५.९२,८.१८.१९
५. पाणिनौ ४.३.४२, रामायणे २.४०.९, महावग्गे ८.१.३६
६. अर्थशास्त्रे कोशाध्यक्षप्रकरणे ११२.१२०
७. महाभाष्ये ५.१२,४.३.१५८

वैदिकयुगे राजसूययज्ञाय दीक्षितस्य राज्ञ तार्प्यपरिधाने सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति स्म।[1] वधूम्य वाधूये परिधाने चित्रालङ्करण सविशेषमासीत्।[2] हिरण्मयचित्रशिल्पै अलङ्कारपिपरिधानानि द्योतितानि।[3] रजयित्री तु वस्त्ररञ्जिका स्त्री बभूव।[4] ऊर्णं प्रथम रञ्जितम्। पश्चात् तेन पट निर्मितम्।[5] पतञ्जलि नीली-मञ्जिष्ठा-शकल-कर्दम काषाय हरिद्रा-पीतादीभी रगैर्वस्त्ररञ्जन वर्णयति।

बौद्धयुगे वस्त्ररंजनाय वनस्पतीना मूलस्कन्धवल्कलपत्रपुष्पफलादिभ्यो वर्णा प्राप्ता।[6] एभिर्वर्णैर्गृहस्थाना विविधरगेषु परिधानेषु पुन्नागफणादयश्चित्रिता।[7] परिधानानां वर्णस्य स्वशरीरवर्णानुरूपीकरण प्रचलितमासीत्।[8] वस्त्राणा गन्धं सुवासन, आतपवायुभिश्च परिशोधनमक्रियत।[9] मृगचर्मपरिधानानामलङ्करण नैसर्गिकमेव रमणीयमासीत्।

नाट्यशास्त्रानुसार राज्ञो वस्त्राणि प्रायश चित्रितानि बभूवु। अन्त पुरकर्मचारिण वस्त्राणि कषायवर्णानि चाभवन्।[10] गुप्तयुगे पटवासेन वस्त्राणा सुवासन प्रचलितम्।[11] सत्कारार्थं तदा वस्त्राणि धौतानि घृष्टानि मृष्टानि सप्रधूमितानि च बभूवु।[12] कतिपयवस्त्राणि रत्नजटितानि कारितानि। स्त्रीणामुत्तरीयेषु रत्नशोभा दर्शनीयासीत्।[13] धनिकाना दुकूलेषु हसमिथुनानि गोरोचनेन चित्रितानि, हसदुकूलेषु हसानामसख्यचित्राणि निर्मितानि च। तत्रैव पुष्पपरिणाममपि चित्राणि कृतानि।[14] लोकाना वस्त्रेषु चित्रकरण गुहाचित्रै समर्पितम्। अजन्ताचित्रेषु वस्त्राणां पत्तिपत्रपुष्पतारावृषभादिभिरलकरण सुसम्पन्नमेव। विविधवर्णाना सूत्राणा सयोजनेन वस्त्राणां वर्णवैविध्य निष्पादितम्। दशपुरस्थपट्टवायकानां प्रशस्ति तदेव समर्थयति—

स्पर्शवता वर्णान्तरविभागचित्रेण नेत्रसुभगेन।
यै सकलमिद क्षितितलमलकृत पट्टवस्त्रेण ॥

---

१ शतपथे ५. ३.५.२०
२ ऋग्वेदे १० ८५ ३४, अथर्ववेदे १४ २.४१
३ ऋग्वेदे १ १२२ २, ५ ५५ ६, १ १६६ १०, १ २५ १३
४ शुक्लयजुर्वेदे ३० अध्याये
५. शतपथे ५ ३ ५ २१
M महा० ४ २ १
६ महावग्गे ८ १०
७ महावग्गे ८ २९
८ सिरिकालकण्णिजातके ३८२
९ आचाराङ्गसूत्रे २ ५ १ २०, राजप्र० ४ १२७
१० नाट्यशास्त्रे २१ ११७—१२४
११ अनुयोगद्वारे १ १४ कादम्बर्यां २१९ पृष्ठे, बृहत्संहितायां च
१२ बृहत्कल्पसूत्रभाष्ये ३ १००१
१३ रघुवंशे १६ ४३ १४ रघुवंश १७ २५, कादम्बर्यां ९ पृष्ठ

# सूचीकर्म

भारते सुदूरप्राचीनकालत सीवनस्य कला प्रवर्तते।[१] प्रथमतर सिन्धुसभ्यतायां सूचय प्राप्यन्ते। महाभाष्यानुसार तीक्ष्णसूचिकया वस्त्राणि स्यूतानि। त्रुटितवस्त्राणां नवीकरणस्य रीतिरासीत्। परवर्तियुगे वैदेशिकानां प्रभावे 'कुर्ता ब्लाउज-फ्राक-पायजामा' आदि स्यूतवस्त्राणां प्रचलन धनिवर्गेऽभूत।

सीवनस्य विशेषोपयोगो वस्त्राणां शिल्पकर्मणि बभूव।[२] सीवनेन वस्त्राणां मण्डल, विवर्तमनुविवर्तं ग्रैवेयक जाघेयक बाह्वन्तश्च कृतानि।[३] बौद्धसाहित्यानुसार सीवनस्य कला सुविकसितासीत्। बौद्धभिक्षव सीवने निष्णाता बभूवु।[४]

## परिधानानि

पतञ्जलिमतानुसारं शरीर तु वास्त्रयुगिकमेव। अर्थात् साधारणजनानां कृते द्वे वस्त्रे आस्ताम्। तयोरुपरिभागे उत्तरीयमधोभागे चान्तरीय शरीरस्य परिधानार्थं बभूवतु। द्वयोर्वस्त्रयोरेका सञ्ज्ञा उपसंव्यानमासीत्। अन्तरीय नाभिप्रदेशादारभ्य जानुपर्यन्त क्वचिच्चरणपर्यन्त चासीत्। शाटकमाप्रपदीनमभवत्। कन्यकानां शाटकमाप्रपदीनमभवत्। कन्यकानां शाटकमपरोरुक इति ख्यातम्।[५]

### शिरावस्त्राणि

सिन्धुसभ्यतायां स्त्रीपुरुषा शिरसि पताकार वस्त्र बध्नन्ति स्म। कतिपयपुरुषा शिरोवेष्टन धारयन्ति स्म। अपरे केचिदुष्णीषेण शिरो भूषयन्ति स्म। वैदिकयुगेऽपि तत्रासीदुष्णीषधारणस्य प्रचलनम्। तदा स्त्रीपुरुषयोरपि शिरसि उष्णीषबन्धोऽभवत्।

परवर्तिकाले उष्णीषे चित्रणमलङ्करण च सविशेषमभवत्। उष्णीषबन्धेन ध्वज-मृदङ्ग-गोलक स्तूप-वृत्त तोरण-पुष्प-पत्रादीनामाकृतयो विरचिता। स्त्रीणां शिरसि तदाऽवगुण्ठनवस्त्र पुष्पलताचित्रादिभिरलङ्कृतमासीत्।

---

१. सीवनं वस्त्रकुप्यादीनां विज्ञान हि कलात्मकम्। शुक्र० ४ ३२९

२ तन्तुसन्तानयोगेन बहुवर्णेन वस्त्राणां मनोहारित्व सम्पादितम्। पद्मपुराणे २४ ५८। कामसूत्रस्य १ ३ १६ टीकानुसारं सूच्या वस्त्रसन्धानकरण तत् सूचीवानं त्रिविधं सीवनं, ऊतन, विरचनम्। तत्राद्य कञ्चुकादीनाम्, द्वितीयं त्रुटितवस्त्राणाम् तृतीय कुथास्तरणादीनाम्।

३ विशेषविवरणाय महावग्गे ८ ४ २ द्रष्टव्यम्। ४ चुल्लवग्गे ५.११ ३ महावग्गे ७ १.५।

५ महाभाष्ये ५ १६९ १.१ ३७,१ ? ४५।

स्कन्धवस्त्राणि

स्कन्धस्याश्रयेणोत्तरीयं सामान्यतो धारितम् । वैदिकयुगे स्कन्धाश्रितानि वस्त्राणि–अत्क-प्रतिधि-द्रापि-पर्याणहनोपवसनादीनि बभूवु. ।

वैदिककालत. चेलकधारणस्य रीति प्राय सदैव प्रचलिताऽभवत् । विभिन्नयुगेषु च चेलकधारणस्य विविधकल्पाः चित्रमूर्तिषु दृश्यन्ते ।

वक्ष प्रदेशस्यावरणाय कञ्चुकोऽभवत् । कञ्चुकेन समग्रभुजयोरावरणं बभूव । तस्य प्रतान आ जानु आसीत् । स्त्रीणां कंचुको नाभिपर्यन्तोऽभवत् ।

गुप्तयुगे स्कन्धादारभ्य कटिपर्यन्त चोल-कूर्पासकादिवस्त्राणां परिधानमासीत् । स्तनांशुकेन स्तनानामावरण कृतम् । अमरकोशानुसारं प्रपदीनवस्त्रेण स्कन्धात् पदपर्यन्तमावरण विहितम् ।

कटिवस्त्राणि

सिन्धुसभ्यतायुगेऽपि कतिपयजना कटिप्रदेशात् पदपर्यन्त वस्त्रं धारयन्ति स्म । किंतु बहवस्तथामन् जना ये कटिप्रदेशे वस्त्र नाममात्रमेव धारितवन्त । वैदिकयुगे कटिप्रदेशे नीवि धृता । नीवित प्रपात-वातपानादीनि वस्त्राण्यवलम्बितानि । नीव्या उपरि वासो धारित । वासोधारणमनिवार्यमेवासीत् । स्त्रीणां वास. पट्ट शाटकं वा बभूव ।

कटिप्रदेशस्य दृढीकरणाय तत्र वस्त्रपट्टिका बद्धा । अस्या पट्टिकातो गुलिका अवलम्बिता ।

प्रावरणम्

प्रावरणस्यावश्यकता प्राय हेमन्तशिशिरयोर्भवति । तेषां रचना प्राय बहुमूल्योर्णादिभि कृता । तत्र प्रथम कम्बलमेव प्रावरणं देशकालशैलीभेदेन विविधशासमन्वित दृश्यते ।[1] अमरकोशानुसार 'नीशार स्यात्प्रावरणे हिमानिलनिवारणे ।'

'निचोल प्रच्छदपट , समौ रल्लककम्बलौ ।

प्रसाधनस्य परिधानस्य च सौभाग्यं दर्पणदर्शनेन पुरापि निभालितम् । महाभाष्यानुसार दर्पणो द्विविध आसीत्-पश्चामुखीन , सम्मुखीनश्च । पश्चामुखीन. उन्नतल सम्मुखीनश्चोन्नतोदरोऽभवत् ।[2] कतिपयदर्पणा रत्नजटिता आसन् ।[3]

---

१ विभिन्नदेशेषु विभिन्नकालप्रावरणानां परिचयोऽमरकोशस्य द्रष्टव्य । कोशाल्पमहार्णवे ७७.१११ । तत्र वर्णितं वस्त्रं गल्लकपार्श्वं च कम्बलभेदा ।

२. महाभाष्ये ५.२.६ ।

३ हरविजये १४६,१२ ६२ ।

# आवासः

नगराणां ग्रामाणां गृहाणां च विन्यासस्तत्रत्यानां न केवलं सुखाय विश्रमाय रक्षणायासीदपितु आत्मनो वैभवस्य रसिकत्वस्य च प्रदर्शनार्थमपि बभूव । सुदूरप्रागैतिहासिकयुगे वन्या जनाः पर्वतानां गुहासु वृक्षकोटरेषु वाऽवसन् । तेषु केचिदेव पर्णकुटीररचनामपि कुर्वन्ति स्म । अधुनापि तादृशानां शरणानि पूर्ववत् प्राप्यन्ते । अनेन मानवसंस्कृतेः सनातनत्वं व्यज्यते ।

सर्वप्रथमं तावत् सभ्यानां नगरविन्यास सिन्धुसभ्यताया एव दृश्यते । तेषां नागरिकसभ्यता प्राचीनयुगे सिन्धु-पंजाब-काठियावाड़-राजस्थान-महाराष्ट्र प्रदेशेष्वपि प्रसारिताऽऽसीत् । 'हड़प्पा-मोहनजोदड़ो' इति ख्याते द्वे नगरे बभूवतु, बहवः ग्रामाश्च विविधप्रदेशेषु प्रसृता ।

सिन्धुसभ्यताया नगरयोः स्थितिर्नदीतटे बभूव । नगरस्य रक्षार्थं प्राकारो निर्मितः । सरलराजमार्गैर्नगरं बहुषु भागेषु विभक्तमासीत् । तेषां मार्गाणामन्वयेन प्रकाशः स्वच्छवायुश्च नगरे प्रसृतौ । गृहेषु बहवः कक्षाः प्राङ्गणं च बभूवुः । गृहेभ्यः मलिनजलनिर्गमनाय प्रणालिका निर्मिता । सार्वजनिकोपयोगाय अवकरनिचयस्थानानि बभूवुः । सिन्धुसभ्यतागृहाः सुविन्यस्ता विशालाः स्वास्थ्यप्रदाः सर्वथा सुरक्षिताश्च । तेषां निर्माणं प्रायश्चूर्णमयोजितैरिष्टकाभिः कृतम् ।

सिन्धुसभ्यताया गृहविन्यासस्य कलाविज्ञानयोर्वा सातत्यमद्यावधि नास्ति सुप्रतीतम् । तस्याः प्रायशः द्विसहस्रवर्षं पश्चात् भारते महाराजस्याशोकस्यानुगाता गृहा दृष्टिगोचरा बभूवुः । अस्मिन्नन्तराले भारतीयगृहविन्यासस्य प्रगतिः कीदृशी बभूवेति ज्ञातुं साहित्यमेवावलम्बनाय वर्तते ।

वैदिकयुगे भारतीयानामार्याणां जीवन-विन्यासो ग्राम्य आसीत् । तेषां कृषिप्रधाना सभ्यता ग्रामेषु प्रसृता । तत्रैव तेषां पशूनां चरणाय पानाय चापेक्षितसामग्रीणां प्राचुर्यमभवत् । गृहमेव तेषां प्रायः सर्वसंग्राहकं सुन्दरं विस्तृतं च तृणकाष्ठादिभिर्निर्मितमासीत् । तथाऽथर्ववेदे—

> इहैव ध्रुवां नि मिनोमि शालां क्षेमे तिष्ठाति घृतमुक्षमाणा ।
> इहैव ध्रुवा प्रतितिष्ठ शालेऽश्वावती गोमती सूनृतावती ।
> ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय ॥
> धरुण्यसि शाले बृहच्छन्दाः पूतिधान्या ।
> आ त्वा वत्सो गमेदा कुमार आ धेनवः सायमास्पन्दमानाः ॥

ऋतेन स्थूणामधि रोहवंशोग्रो विराजन्नप वृङ्क्ष्व शत्रून् ।
इमा आप प्रभराम्ययक्ष्मा यक्ष्मनाशनी ॥
गृहमुप प्रसीदाम्यमृतेन सहाग्निना ॥[1] ३.१२

समृद्धिशालिनामार्याणामार्येतराणां च गृहा दुर्गवत् निर्मिता । तथा हि वरुणगृहं सहस्रद्वारमेव ।[2] दासानां राज्ञः शम्बरस्य शतदुर्गा बभूवुः । अन्येषामपि दासनेतॄणां दुर्गा विख्याता सन्ति ।[3] गृहविन्यासस्तु प्रायः कलात्मक एवासीदार्याणाम् ।[4] केषाचिन्नागरिकाणां गृहा प्रासादवद् बभूवुः । कश्चित् कविः सदनायाकामयत—

इन्द्र त्रिधातुशरणं त्रिवरूथं स्वस्तिमत् ।
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥

धनिकानां गृहं हर्म्यमिति ख्यातमासीत् ।[5]

परवर्तिगृहविन्यासस्य परिचयः तदानीन्तनसाहित्ये प्राप्यते । रामायणे अयोध्या किष्किन्धालङ्कादीनां नगराणां अनेन वर्णनेनार्याणामार्येतराणां च प्रायः समग्रभारतीयानां वास्तुविन्यासः स्पष्टो भवति । तथा हि अयोध्यानगरी—

आयता दश च द्वे च योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ।
उद्यानाम्रवणोपेता महतीं सालमेखलाम् ॥ बाल० ५ ७,८,१२ ।

तत्रैव रामवेश्म—

महाकवाटसंयुक्तं वितर्दिशतशोभितम् ।
काञ्चनप्रतिमैकाग्रं मणिविद्रुमतोरणम् ॥
मणिभिर्वरमाल्यानां सुमहद्भिरलङ्कृतम् ।
मुक्तामणिभिराकीर्णं चन्दनागुरुधूपितम् ॥
सारसैश्च मयूरैश्च निनदद्भिर्विराजितम् ।
महेन्द्रधामप्रतिमं नानापक्षिसमाकुलम् ॥ अयो० १५ ३२ ३५, ३७ ।

नेदं वर्णनं केवलं काव्यकल्पनात्मकम् । तत्समर्थितमेव 'एलियन' महोदयस्य चन्द्रगुप्तप्रासादस्य सौत्रिकवर्णनेनापि—

---

१ अपरमपि वर्णनमथर्ववेदे ९ ३ ईदृशं गृहविन्यासं समर्थयति ।
२ बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते । ऋग्वेदे ७ ८८ ५ ।
३ ऋग्वेदे १ ५१ ५,६ २० ६,६ १८ ८, २ १४ ६, २ २४ २ ।
४ ऋग्वेदे १ १३ ६, १ ५१ १४, ५ ४१ ८
५ ऋग्वेदे ७ ५६ १६ अथर्ववेदे १८ ४ ५५ ।

In the Indian royal palace there are other wonders besides In the parks tame peacocks are kept and pheasants which have been domesticated There are shady groves planted with trees and branches of trees which the art of the woodsman has deftly interwoven, while some trees are native to the soil, others are brought from other parts, and with their beauty enhance the charms of the land-scape Within the palacegrounds are artificial ponds in which they keep fish of enormous size but quite tame [१]

एतद्धि काममूत्रे समर्थितम्—तत्र भवनमासन्नोदक वृक्षवाटिकावत् विभक्तकर्मकक्ष द्विवासगृह कारयेत् ।m

रामायणसदृश नगरवर्णन बुद्धचरिते, सौन्दरनन्दे, मिलिन्दप्रश्ने च लभ्यते । महाभारते इन्द्रप्रस्थस्य विशदवर्णन तदानीन्तननागरिकसभ्यतायाः आदर्शं प्रस्तौति ।n

किष्किन्धायामार्येतराणा वसति पर्वतगुहासु बभूव । गुहानगरेषु काननोपवनशोमा सविशेषमभवत् । पर्वतेषु हर्म्यप्रासादादय बहुभूमिका निर्मिता । लङ्कायामपि मनोरमोपवनाना कलनिनादकारिणा पक्षिणा वापीजलाशयक्रीडाना प्रतोलीना स्वर्णकतोरणाना दिव्यलताना च शोभाऽभीत् ।[२] रावणस्य प्रासादे चित्रशाला क्रीडागृहा कामगृहाश्च बभूवु । वर्णीकृता गृहा चित्रिताश्चातिशय विराजन्ते स्म ।[३]

महाभारतानुसार सर्वेषु ऋतुषु सुखदायिनो गृहा विरचिता ।[४] तेषा जालानि स्वर्णमयानि रत्नानि मणिजटितानि च बभूवु । सगिमर्दामभिश्च गृहा अलकृता ।[५] रात्रिकाले दीपवृन्दैर्नगरक्षेत्र प्रकाशितमभवत् । गृहसमीप निष्कुटकमिति क्रीडोपवन बभूव ।[६]

राजकीयवास्तूनि वास्तुकानामाध्यक्ष्ये निर्मीयन्ते स्म । राजभवने वासगृह मोहनगृह भूमिगृह च निर्मितानि । सुरङ्गमार्गे यथेष्ट राजभवने प्रवेश सम्भावित ।

---

१ Mc Crindle Ancient India as described in Classical literature P 141 142 ।

M कामसूत्रे १ ४ ४ ।

N आदि० १६९-२८-५० ।

२. सुन्दरकाण्डे २ सर्ग ३ सुन्दरकाण्डे ६ सर्ग । ४ सभापर्वणि ३१ २०, २३ महारण्यादगाते २६४ तदेव समर्थितम् । ५ सभापर्वणि ३४ २० २३ ।

६ आदिपर्वणि २११ ३,२१०.१६

राजभवनस्य पश्चभागे अन्त पुर-प्रसूतिगृहारोग्यगृहादीनि निर्मितानि । बहिर्भागे कुमाराणामावासो रचित । नगरसमितिर्नागरिकाणामावासव्यवस्था कौशलेनाकरोत् ।[1]

नगरस्य स्वच्छतायै समीचीना व्यवस्थासीत् । सार्वजनिकमार्गेषु केनापि विधिना मलकर्दमकिट्टजम्बालादिकारिणो दण्डिता । नगरात् शवस्य निर्गमनाय मार्गो नियत आसीत । नगराद् जलनिष्कासनाय प्रणालिका निर्मिता । यदि कस्यापि गृहमवैज्ञानिकरीत्या निर्मितम, तत्कारणात् परेषा कष्ट च बभूव, तर्हि गृहस्वामी दण्डनीयोऽभवत् । नगरस्याग्निभयाद्रक्षणार्थ सुचारुव्यवस्थासीत् ।[2]

महाभाष्यानुसार नगरस्य व्युत्पत्तिरस्ति नग + र (मत्वर्थीय ), अर्थात् वृक्षै सुशोभितमिति । नगरकारो नगरस्य व्यवस्थापन सुनिपुण आसीत्। नगरेषु बहुभौमा प्रासादा राजन्ते स्म । तत्र नगराणा चतुर्द्वाराणि आसन ।[M]

गुप्तयुगे ग्रीष्मर्तो सन्तापेभ्य आत्मन रक्षितु धारागृहा निर्मिता । तदर्थ जलयन्त्रमन्दिराणा निर्माणमभवत् । जलाशयतटे जलमण्डपाना रचना कृता । जलमण्डपेन ग्रीष्म पराजित इवासीत् ।[3] जलाभ्यन्तरे समुद्रगृहाणा निर्माणमभवत् ।[4] गृहेषु क्रीडामयूराय यष्टिनिवासो निर्मित । भित्तिषु गृहभित्तयश्चित्रिता । गृहस्तम्भेषु रमणीनामा कृतय उत्कीर्णाः । शयनगृह रचितकुसुमगन्धि बभूव । वात्स्यायनो गृहविशेषमाकलय्याह—वेश्म च शुचि सुसमृष्टस्थान विरचितविविधकुसुम सवलक्षणभूमितल हृद्यदर्शन भवेत् ।

भारतीयगृहेषु प्राय केन्द्रभागे प्राङ्गणमभवत् । प्राङ्गण परितोऽलिन्दयुक्ता शाला बभूवु । ईदृशा गृहा चतु शालानि स्यात: । अपरे गृहा त्रिशालानि, द्विशालानि, एकशालानि वा बभूवु । एतेषा प्रत्येकविधस्य गृहस्य बहवो प्रकारा — सर्वतोभद्र-नन्द्यावर्त-वर्धमान स्वस्तिकादयोऽभवन् । सर्वेषा वर्णाश्रमपदाधिकारिणा गृहविशेषा निर्णीताः ।[5]

राजानो जनपदनिवेशार्थ ग्राम सग्रहण-खार्वटिक द्रोणमुखस्थानीयानामुपनिवेशायायोजयन्ति स्म। दशग्रामाणामध्ये सग्रहण द्विशतग्रामाणा मध्ये खार्वटिक चतु शतग्रामाणा मध्ये द्रोणमुखमष्टशतग्रामाणा मध्ये स्थानीय च स्थापितानि । स्थानीयोपनिवेशाय

---

१ अर्थशास्त्रे दुर्गनिवेशप्रकरणे २ अर्थशास्त्रे नागरिकप्रकरणे, गृहवास्तुप्रकरणे च ।

M महाभाष्ये ५ २ १०७,१ २ ५१ १ १ २९,४ ३ १३४ ।

३ रघुवंशे १६ ४९, ऋतुसहारे १ २, कादम्बर्या २८३ पृष्ठे ।

४ कामसूत्रे, स्वप्नवासवदत्ते, विष्णुस्मृतौ ५ ११७ । P नैषधे १८ ५ १० ५ बृहत्सहितायाम् मत्स्यपुराणे २५४ अध्याये च ।

वास्तुकः नदीनां तटेष्वस्मिन् वृत्ताकारमायताकारं वा क्षेत्रमचिनोत्। स्थानीयानि जल-स्थलमार्गै सुसम्बापितानि बभूवु ।[1]

महाभाष्यानुसारं कुटीराणां काण्डच्छादनं तृणैः कृतम्। भित्तयः पक्वेष्टकचिता आसन्। भवनस्य तलं प्रस्तरखण्डैः कृतं कुट्टिममिति कथ्यते स्म। वायोः प्रकाशस्य चागमनाय गवाक्षा निर्मिता आसन्। स्नानस्य स्थानं प्रस्नं इति संज्ञितम्। तत्र वस्त्राणि नागदन्तेष्वर्पितानि आसन्। दीपस्थानं दीपाल्य इति ख्यातम्। महागृहमगारो वेश्म वा प्रथितमासीत्। अगारस्योपद्वारं कपोतवक्ष इति मजिता। गृहस्य शिखरमामलकोति ख्यातमासीत्। हर्म्यमिति धनिकानां गृहमासीत्।

न केवलं गृहं वैभवसम्पन्नमासीत्, अपितु गृहकार्यविभिन्नवस्तूनां समाहारस्तत्रासीत्। गृहस्योदारस्य करणं महार्हैर्भाण्डैः परिचारकैश्च गृहपरिच्छेदस्योज्ज्वलता इति वात्स्यायनः कामसूत्रे निर्दिशति।

अपरञ्च—तत्र रात्रिशेषमनुलेपनं माल्यं सिक्थकरण्डकं सौगन्धिकपुटिका, मातुलिङ्ग-त्वचस्ताम्बूलानि च स्युः। भूमौ पतद्ग्रहः। नागदन्तावसक्ता वीणा, चित्रफलकं, वर्तिकासमुद्गकौ, यत् किञ्चित् पुस्तकं कुरण्टकमालाश्च। आकर्षफलकं द्यूतफलकञ्च। तस्य बहिः क्रीडाशकुनिपञ्जराणि। एकान्ते तर्कुतक्षणस्थानमन्यासां च क्रीडानाम्। स्वास्तीर्णप्रेङ्खा दोला, वृक्षवाटिकायां सप्रच्छाया स्थण्डिलपीठिका च सकुसुमेति भवन-विन्यासः।[M]

शयनासनानि

शयनासनानां सर्वेषु युगेषु प्राचुर्यमभवत्। सिन्धुसभ्यतायुगे आसन्दानामुपयोग उपवेशनाय कृतः। अपरविधानां शय्यासनानां परिचयोऽप्राप्य एवाधुना। वैदिकयुगे तृणानामासनानि निर्मितानि। बर्हिर्दर्भः कूर्चं बृषी कशिपु नड्वला कटा सर्वेऽपि तृणनिर्मिता उपवेशनाय बभूवुः।[2] तस्मिन् युगे उच्चासनानि काष्ठनिर्मितपाटनल्पप्रोष्ठादीनि बभूवुः। तल्पास-न्दीभिः समृद्धिशालिदम्पतीनां शिथ्यामागाराः सुशोभिताः। प्रोष्ठासनं स्वल्पं चतुष्पदिकमासीत्।[3] आसन्दः प्रस्तारोपाश्रयमाधित्याधन्यामुपवेशनं कृतम्।

राज्ञामुपवेशनाय सिंहासनमासीत्। आस्तरणाच्छादितस्वर्णपर्यङ्काः राज्ञां नित्योपवेशनाय बभूवुः। आसनानामलङ्करणं रत्नमणिस्वर्णादिभिः कृतम्। भद्रासनानि रत्नमणि-जटितानि राजभ्यो बभूवुः।

---

1 अर्थशास्त्र दुर्गविधानप्रकरणे।                M कामशास्त्रे १ ४ । १५ ।

2 ऋग्वेदे १० १४ ८, अथर्ववेद ९ ६, शतपथ १० ४ २ १९, ११ ५ ३ ४ ७ बृहदारण्यकोपनिषदि ४ २ १ ।

3. वाजसनेयिसंहितायां ३० २१, तैत्तिरीयब्राह्मणे ३ ४ १७ १, अथर्ववेद १४ १ ६० ।

शयनाय चतुष्पदिका शय्या सुदूरप्राचीनकालत प्रवर्तते। शय्याया बहुभेदा यथारुचि सदैवाभवन्। उपबर्हस्योपयोग शिरस आधानाय कृत। मशककुटिकया मशकेभ्य शयनकाले त्राण कृतम्।[1]

महाभाष्यानुसार मंचा मचका वा शिशूना शयनार्थं बभूवु। खट्वा शय्या वा प्रौढाना जनाना कृते बभूव। तृणशायिनस्तु सदैव भवन्त्येव। आसनार्थं द्विपदिका त्रिपदिका चासीत्। आसन्दी पूर्णविश्रामार्थमासनमभवत्। पादाशक्ताना कृते पर्य इति नामकमासन सचक्रमभवत्।[2]

गुप्तयुगे वेत्रासनानि सुप्रचलितानि बभूवु। राजन्य पर्यङ्किका चन्द्रकान्तमणिनिर्मितासीत। पादपीठ स्फटिकेन रचितम्। रमणीनामुपवेशनाय चित्रास्तरणाच्छादितोपबर्हसमन्वितमचकमभवत्। पृष्ठाश्रयायोपाश्रयगोलकमुपयोजितम। कतिपयमञ्चकाना पादा सिंहाकारा निर्मिता। अमरकोशानुसार तु—

उपधान तूपबर्ह शय्याया शयनीयवत्।
शयन मञ्चपर्यङ्कपल्यङ्का खट्वया समा॥

विष्णुपुराणानुसारतु

नातिविशाला न वै भग्ना आसमा मलिना न च।
न च जन्तुमयी शय्यामधितिष्ठेदनास्तृताम्॥ ३ ११ १०९।
प्रतिपादितविन्यस्तरत्नमयोपशोभिनि।
हसत्यालम्बिभिर्मुक्ताजालकैर्हसिताभियम्॥
कुन्देन्दीवरमन्दारसान्द्रामोदाश्रितालिनि।
चित्रभित्तिगतानेकल्पकर्ममनोहरे॥
वासगेहेऽन्यदा शिश्ये तल्पे मृदुनि हारिणि।
गगासैकतनिर्भासिदुकूलप्रच्छदोज्ज्वले॥ महापुराणम् ९ २२ २४

## यात्रासाधनानि

मानवाना यात्रा प्राचीनयुग स्थलमार्गेर्जलमार्गैश्चाभूदिति सुनिश्चितम्। आकाशे यात्रा समभवदिति केचित् सदिहन्ति।

---

१ महावग्गे ५ १२ ३ दीघनिकाये १ १ बहुविधानि आसनानि वर्णितानि सन्ति। तद्यथा-आसन्दी-पल्लङ्क-गोनक-चित्तक-पटिक-पटलिक-तूलिक – विकतिकउद्दलोमिक-एकन्तलोमिक-कट्टिस्स-कोसेय्य-कुत्तक-हत्थत्थरण-अस्सत्थरण रथत्थरण-अजिनप्पवेणि।

२ महाभाष्ये ४ १ ४८, ३ ३ १९, ३ २ ११०, १ १ ५७, ८ २ १०, ४ ४ ९।

स्थल-यात्रा

साधारणतः सर्वेषां जीवधारिणां पदयात्रा भूमौ दृश्यते, किन्तु शिघ्रगामिना पशूनां पृष्ठे आसाद्य यात्राकरणं बुद्धिमतां मानवानां वैशिष्ट्यम् । तथा हि— प्रथमं तावत् हस्ति-घोटकवृषभादीनां पृष्ठे यात्राकरणं संस्कृते समारम्भादेव प्रारब्धम् । यानेषु घोटकरासभ-वृषभादीनां संयोजनं यात्राकरणे द्वितीयोपक्रमः । सिन्धुसभ्यतायुगे बलीवर्दोह्यशकटिका प्रचलिता । तासां प्रचलनं भारते शाश्वतिकमेवाभवत् । तस्मिन् युगे शकटेषु चत्वारि चक्राणि रथेषु च द्वे चक्रे बभूवतुः । कतिपयरथानामाकृतिः पशुसमा पक्षिसमा च बभूव ।

वैदिकयुगे आर्याणां रथेषु प्रायशो द्वौ घोटकौ संयोजितौ । रथेषु रासभा उष्ट्राश्चापि योजिताः । कतिपयरथेषु सप्त दश वा चक्राणि बभूवुः । रथा गोचर्मच्छादिता आसन् । रथानां धौत्रसञ्चरणाय 'परिरथ्या' इति ख्याता मार्गाः निर्मिताः । वैदिकयुगेऽश्वहस्तिरास-भोष्ट्रादीनां पृष्ठेऽपि यात्रा कृता । वाहनयोग्या हस्तिनस्तु स्वर्णभूषणैरलंकृताः ।

रामायणमहाभारतयोः रथशकटादीनि यानानि वर्णितानि सन्ति । शिबिकानां विशिष्टप्रचलनमभवत् । शिबिकासु प्रायः स्त्रीणां यात्राऽभवत् । शिबिका नरवाहियान-मासीत् ।

महाभारतानुसारं रथैर्दीर्घा यात्रा कृता । तथाहि अयोध्यातो विदर्भपर्यन्ता यात्रा कतिपयहोरामिरेव कृतेति रथानामतिरंहसः प्रमाणम् । तदा रथेषु हस्तिनोऽपि संयोजिता बभूवुः । राजानोऽपि रथचारणे निपुणा आसन् ।[1]

अर्थशास्त्रानुसारं श्रेष्ठाश्वसमायुक्ता रथाः प्रतिदिनं द्वादशयोजनान्यगच्छन् ।

महाभाष्यानुसारं शकटे शकटया च बलीवर्दा योजिता आसन् । बृहच्छकटेषु अष्टान-डुवाहो योजिता बभूवुः । रथस्तु सुखदायक आसीदिति तस्य व्युत्पत्त्या 'रमन्तेऽस्मिन्' इत्यनेन ज्ञायते । वास्त्राः काम्बलाश्चार्मणाश्च रथाः क्रमशः वस्त्रेण, कम्बलेन, चर्मणा चावृता बभूवुः । आश्वा औष्ट्रा गार्दभाश्च रथाः क्रमशोऽश्वेनोष्ट्रेण गर्दभेन च वाहिता आसन् ।M

स्त्रियोऽपि हस्तिघोटकरासभादीनां पृष्ठे यात्रां कुर्वन्ति स्म ।[2] रथाश्वहस्तिचर्यासु नागरिका राजकुमाराश्च सुशिक्षिता बभूवुः । स्वयं भगवान् कृष्णः सारथिरासीत् ।

बलीवर्दयुक्तेषु प्रवहणेषु नागरिका नगरेऽभ्रमन् ।[3]

---

१. समापर्वणि ४८.२९ ।

२. शिशुपालवध ५.७,१८ ।

M. महाभाष्ये १.२.२४,८.१.३०, ६.३.४६, १.४.२४, ४.२.१० ।

३ गणिकाप्रवहणं गणिकायाः नागरप्रयोगाय बभूव ।
गोयानं वृषभयानं च अभिजनैर्निम्नवर्गैश्चाचलताम् । ग्रामीणा ग्रामशकटे यानमकुर्वन् ।
मृच्छकटिके षष्ठाङ्के ।

## जलयात्रा

प्राचीनतमे हडप्पमोहेंजोदडोनगरे नदीपथेन सम्बद्धे आस्ताम्। तदानीन्तनमुद्रासु नौकाकृतय सन्ति। तस्या स्थितौ द्वयोर्नगरयो नौकाभिर्यातायातसम्बन्धोऽवश्यमेवासीत्। वैदिकयुगे विशालनौका रचिता। कतिपयासु नौषु शतारित्राणि सम्प्रयोजितानि। सिन्धुषु नौका व्यतरन्।

रामायणयुगे नौका सागरगामिन्यो बभूवु। तीर्थेषु नौकानामवस्थानमभवत्। प्रयागे गंगातटे पचशतनौका बभूवु। नौकानिर्माणकला तदा सुविकसितासीत्। तथा हि—कतिपयनौका स्वस्तिकयैलोमनूकृत्य रचिता। अपराश्च नौका पाण्डुकम्बलसवृता नन्दिघोषसमन्विता बभूवु। नौकाभि घोटका रथाश्च नदीपार नीता। नौकावेगो महाभारते वायोर्मनसो वा वेगेनोपमित। प्रभजनोद्वेजने सत्यपि नौकाना स्थैर्यं तासा दाढर्यं व्यनक्ति।[1]

अर्थशास्त्रानुसार नौकाध्यक्षो नौमार्गाणा सुव्यवस्थार्यं नियुक्त। महानौकासु नियामकदात्र-रश्मिग्राहकोत्सेचकादय पचाधिकारिणोऽवर्तन्त। नौशुल्कस्य निर्धारण राजकीयप्रशासनेन कृतम्।[2]

उडुपेन भस्त्रया च प्रायशो जना नदीपार गतवन्त। राजकीया नौका उदवाहनमासीत्। उपादानाकारदृष्ट्या उरसङ्कु-पिटकोत्सदादयो बहुविधा नौका आसन।[M] घटेन नदीतरिण्यो घटिका इति ख्याता। गोपुच्छिका गोपुच्छ धृत्वा नदीमतरत्।

प्राचीनयुगे नौभि समुद्रयात्रा कृता। विशालासु नौकासु व्यापारसामग्री विहायानेकशतयात्रिणा भारोऽभवत। तै कतिपयमास निरन्तर जलयात्रा कृत्वैव कदापि द्वीपदर्शनं कृतम्। प्रभजनोद्वेजिता यात्रिणस्तु सशयितप्राणा अर्धमृता एव बभूवु। चन्द्रतारादीना गत्या दिशाज्ञानमभवत्। दिशाकाका अपि दिशाज्ञानाय प्रयुक्ता। गुप्तशिलोच्चयै क्वचिन्नौकाप्रभङ्ग सजात।[3]

## आकाशयात्रा

आकाशयात्राया वर्णनानि प्रथम वैदिकसाहित्ये वर्तन्ते। देवानामाकाशयात्रा विदितचरमेव। रामायणमहाभारतयोरनेकत्र देवासुरराक्षसमानवानामाकाशयात्रावर्णनमुल्लिखितम्।[4] पुष्पकविमान कुबेरात् रावण रावणाद्रामश्च प्राप्तवानिति सुप्रसिद्धम्।

---

१. आदिपर्वणि १४० ५।
२ मनुस्मृतौ ८.४०४ ४०६।
M महाभाष्ये ५ ४ १९, ४ ४ ५, ४ ४ ४६।
३ फाह्यानमहोदयस्य यात्रावर्णनं दर्शनीयम्।
४ सुन्दरकाण्डे ४ २७, मोरजातके १५६, रामायणे युद्धकाण्डे १२२ ३६, १२३ २१।

भारद्वाजरचितवैमानिकशास्त्रानुसार विमानरचना १८९० खीष्टशतके कृता । विमान प्राय सहस्रहस्तपर्यन्तमुत्पतित । विमानरचनाविज्ञानमिति प्रकरण समराङ्गणसूत्रेऽपि वर्तते ।[१]

## मार्गाः

सिन्धुसभ्यतायुगाद् विस्तृतराजपथा अभवन् । तस्मिन्युगे तत्रत्यनिवासिना भारतस्य विविधप्रदेशेषु विदेशेषु च यातायाते बभूवतुरिति सुनिश्चितम् । तेषा कृते सुमार्गाणा व्यवस्था देशान्तरेष्वपि कल्पनीया ।

वैदिकयुगे प्रपथमहापथाध्वानश्चेति विविधभेदा मार्गाणा बभूवु । प्रपथस्तु विस्तारेऽत्यधिकोऽभवत् । महापथेन ग्रामाणा परस्पर सम्बन्ध कृत । मार्गाणा सुरक्षार्थे तेषु शान्तिव्यवस्थार्थे च सुप्रबन्ध आसीत् । वनमध्ये मार्गनिर्माणाय वनानि प्रदग्धानि । शाकटिकमहापथेषु वृक्षा आरोप्यन्त । तत्र स्थाने स्थाने जलाशया निर्मापिता । विश्रामस्थलेषु यात्रिभ्यो भोजनादीना क्वचित्त शुल्कापि प्राप्तिरभवत । अतिथियज्ञविधानेन यात्रिणा सौविध्यमासीत् ।

अशोकस्य राजकीययात्राव्यवस्थास्तु निरुपमा एव विद्यन्ते । मार्गेषु वृक्षारोपणम्, विश्रामागारस्थापनम्, आपान प्रतिष्ठा च महाराजस्य माहात्म्य निदर्शयन्ति ।[२] यात्रिणो निपद्यायामवस्थान कुर्वन्ति स्म । परवर्तिकाले कश्मीराणा राजानो यात्रिकेभ्यो मठान कारयामासु । कतिपयमठा अवारितातिथय आसन । मठेषु यात्रिकेभ्यो भोजनादे सुव्यवस्थासीत् ।[३] यात्रिभ्य सुखविधानेन महापुण्यलाभ इति पुराणवचनम ।

---

१ पुस्तकमिद बरौदानगरीन ओरियण्टलसीरीजप्रकाशनम् ।

२ परवर्तियुगेऽपि राजान समृद्धिशालिनश्च जना उपयु क्तादर्शानुसार यात्रिभ्य सुखानि सुखमयानि साधनानि च कारितव । द्रष्टव्यश्च नासिकगुहालेख १७

३ महाभाष्ये ३ २ ६६, कथासरित्सागरे ३ ४३१, राजतरंगिण्याम् ८ २३२० ।

# व्यवसायाः

प्राचीनभारतस्य निवासिनामुपभोग्यवस्तूनां परिचयेन स्पष्टं प्रतिभाति यत् तेषां सङ्ग्रहणाय प्रचुरपरिश्रमेण ते प्रायतन्त । राष्ट्रस्याधिभौतिकाभ्युत्थानाय सर्वेषां देशवासिनामुद्योगपरायणता आवश्यकी एव । अधिकाधिकश्रमेण पुरा सर्वोत्तमवस्तूनां निर्माणार्थं लोकानां सुवृत्तिरासीदिति—

न मृषा श्रान्तं यदवन्ति देवाः । ऋग्वेदे १.७९ ३
न ऋते श्रान्तस्य सख्याय देवाः ॥ ऋग्वेदे ४ ३३.११

अभ्युदयस्तु भारते धर्मेण साध्यः ।[1] गीतायां लोकसङ्ग्रहप्रतिपत्तिः कर्मण्यताधानाय वर्तते । भागवतेऽपि कर्मभिरुद्यमुत्पादयता प्रोक्तम्—

यथावर्णविधानमपवर्गश्चापि भवति ५ १९ १९

भारते व्यवसायपरायणता समादृता, किन्तु बौद्धिका व्यापाराः श्रेष्ठा न तु शारीरिका इति लोकनीतिरासीत् ।[2] तथा हि महाभारते उद्योगपर्वणि—

बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घा जघन्यानि भारप्रत्यवराणि च ॥३५ ६५

अस्यां स्थितौ ज्ञानमयप्रवृत्तयो दारिद्र्याभिमुख्योऽपि सर्वश्रेष्ठा इति विचार्य मनीषिणो लोकवैभवसङ्ग्रहार्थं यथाविदेव यतन्ते स्म, यतो हि नाम बुद्धेः सर्वोत्तमोपयोगो मोक्षाधिगमार्थं भवति ।

## कृषि

पुरा त्रयो व्यवसायाः प्रधानरूपेण प्रचलिता आसन्—कृषिः पशुपालनं शिल्पं च । एतैर्निष्पन्नानि वस्तूनि व्यापारद्वारा देशेषु विदेशेषु प्रेष्यन्ते स्म । क्षत्रधर्मपरायणास्तु शस्त्रास्त्रबलैः राष्ट्ररक्षामकुर्वन् ।

### कृषेर्लोकप्रियता

आर्याः कृषिप्रधाना इति तेषां नाम्नैव व्यक्तं भवति । परवर्तियुगे एतत् सम्यक् समर्थितममरेण 'ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः ।' अर्यं एवार्यं वैदिकसंस्कृते ।[3]

---

१ यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ।

२ ऋग्वेदानुसारं यज्ञादिकर्मणि व्यापृता जना श्रेष्ठा, न तु कृषकाः । १० ७१ ९ ।

३. आर्यं ऋ+ण्यत् । अर्यं ऋ+यत् । उभौ समानार्थौ वर्तेते । ऋधातोः समकक्षौ लैटिनभाषायां area, ग्रीकभाषायां aroein शब्दौ कृषिद्योतकौ ।

माङ्गलिक कृषेः समारम्भोऽभूत्।[1] कृषिकर्मणो दिव्यत्वं तस्य लोकप्रियतामा-संवर्धनार्थंच। तथा हि ऋग्वेदे

अर्वाची सुभगे भव सीते वन्दामहे त्वा।
यथा नः सुभगाससि यथा नः सुफलाससि॥
शुनं नः फाला वि कृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः।
शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम्॥ ४ ५७

अन्नस्य महिम्ना कृषेर्गौरवं जायते। तथा हि—अन्नं न निन्द्यात्। अन्नवानन्नादो भवति। अन्नं न परिचक्षीत। अन्नं बहु कुर्वीत। तद्व्रतम्।[2]

अन्न ब्रह्मेति मतम्। तदर्थिकृष्यारम्भस्य संवर्धनाय कविताथर्ववेदे प्रगीतम्—

उच्छ्रयस्व बहुर्भव स्वेन महसा यव।
मृणीहि विश्वा पात्राणि मा त्वा दिव्याशनिर्वधीत्॥

कृषिसमृद्ध्या राष्ट्राभ्युदयो भवतीति सम्मतम्।[3]

अन्नात् सृष्टेः समारम्भ इति धर्मशास्त्रमतम्। तथा हि तैत्तिरीयोपनिषदि—अन्नात्पुरुषः। अन्नाद्वै प्रजाः प्रजायन्ते इति।[4]

कवयोऽपि कृषेर्लोकप्रियतामाधायानुमादिकाव्येऽगायन्।[5] तथा हि वाल्मीकी रामायणे—

खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः।
शोभन्ते किंचिदालम्बाः शालयः कनकप्रभाः॥ अरण्य० १६ १७

कालिदासो निदर्शयति—

काशांशुका विकचपद्ममनोज्ञवक्त्रा सोन्मादहंसरवनूपुरनादरम्या।
आपक्वशालिरुचिरानतगात्रयष्टिः प्राप्ता शरन्नववधूरिव रूपरम्या॥

---

१ तदथर्ववेदे—यस्यामन्नं व्रीहियवौ यस्या इमाः पञ्च कृष्टयः।
भूम्यै पर्जन्यपत्न्यै नमोऽस्तु वर्षमेदसे॥१२ १ ४२

२. तैत्तिरीयोपनिषदि भृगुवल्ली ७-९।
अथर्ववेदेऽपि निदर्शितम्—
उत्सम शतधार सहस्रधारमक्षितम्।
एवास्माकेदं धान्यं सहस्रधारमक्षितम्॥३ २४.४

३ अर्थशास्त्रे दश इत्यत्र वसिष्ठाना शस्यानि च वर्तन्ते। महाभाष्ये।

४ तैत्तिरीयोपनिषदो मतमिदं मनुस्मृतौ ३ ७६ समर्थितम्।

५. शिशुपालवधे १२ ४२-४३, ६.४९ महापुराणे ४ ६२-६३, ३० ३०।

काव्यमीमांसाया च

गेहाजिरेषु नवशालिकणावपात-
गन्धानुभावसुभगेषु कृषीवलानाम् ।
आनन्दयति मुसलोल्लसनावधूत-
पाणिस्खलद्वलयपद्धतयो वधूट्य ॥१८ अध्यायत

अस्या स्थितौ समग्र राष्ट्र कृषेरभ्युदयाय आगरूकमभवत् । महर्षीणामाश्रमेषु राज्ञा प्रासादपरिधिषु दरिद्राणा कुटीरष्वपि कृषे शस्यश्यामलता गौरवमाधत्ते स्म ।

## कृषि-विज्ञानम्

नवीनप्रस्तरयुगे वन्यानामन्नाना भोज्यत्वमभोज्यत्व वा परिज्ञातु प्रयासोऽभवत् । खाद्यान्नाना कृषियोजनया कृत्रिमोपायैर्विकास समारब्ध । तस्मात् कालादारभ्य कस्मिन्नृतौ कीदृशे क्षेत्रे कियन्मात्र बीज वपनीयम्, तस्य सुखवर्धनाय च कियद्वार सेचन कर्तव्यम, भूमेरुत्पादनशक्ति कथ वर्धनीयेति समस्या अधिकृत्य सम्यग्गवेषण कृतम् । प्रमतमानाश्च त कृषका अस्या दिशाया वैदेशिकानि बीजानि फलादीनि च स्वदेशे सवर्धितवन्त नित्यमेव वन्यानामन्नाना कृषिकल्प कृतवन्तश्च ।

सिन्धुसभ्यतायुगे जना नदीभ्य सेचनार्थ कुल्या विधाय नालिकाभि कूपजल चोद्धृत्य क्षेत्रेषु जलाधान कुर्वन्ति स्म । सिन्धुनदस्य जल सेचनायोपयोजितम् ।[1]

वैदिकयुगे हल कदाचित चतुर्विंशतिबलीवर्दा सयोजिता ।[2] द्वादशानामष्टाना षण्णा च बलीवर्दाना हले सयोजनमपि प्रचलितमासीत ।[3] क्षेत्राणामुत्पादनशक्तिभूमिलेपेन करीषादिना सवर्धिता । घृतन मधुना च समक्ता सीता सुशोभना भवतीति सम्मतम् ।[4] कृषिकर्मण सर्वा प्रक्रिया वैदिके युगेऽपि प्रायशस्तादृश्यो बभूवु, यादृश्योऽधुना वर्तन्ते । कृषियोग्या भूमि 'अप्नस्वती' इत्याकलिता । अयोग्या भूमि 'अर्तना' इति ख्याता ।[5] क्षेत्राणा माप कृत । शकधूमप्रयोगैं कदा कियन्मात्र वर्षण भवेदिति ज्ञेयमासीत ।[6]

परवर्तियुगेऽर्थशास्त्रानुसार कृषिविज्ञानस्य त्रयो भेदा —कृषितन्त्र, गुल्म वृक्षायुर्वेदश्च

---

१ In Sindh, even if the rainfall was heavier in prehistoric times, cultivation *must have depended to a large* extent on irrigation works connected with the Indus Piggott Prehistoric India P 10

२ काठकसहितायां १५ २ ।

३ तैत्तिरीयसहितायां १ ८ ७ १,५ २ ५ २ अथर्ववेदे ६ ९ १ शतपथब्राह्मणे ७ २ २ ६ ।

४ अथर्ववेदे ३ १७ ६ ।

५ ऋग्वेदे १ १२७ ६ ।

६ अथर्ववेदे ६ १२८ १–४ Vedic Index शकधूम ।

बभूवु । कृषिकर्मणि सीताध्यक्षादयो राजकर्मचारिणः कृषिविद्याविशारदा बभूवु । विविध-प्रदेशानां वर्षाप्रमाणमनुमतम् । तदनुकूलं तत्रत्योत्पाद्यान्नानां निर्णयः कृतः । वर्षाया उपयोगित्वमनुपयोगित्वं च निर्णीतम् । शाकफलादीनामुत्पादनाय विशिष्टा भूमिः पर्यालोचिता । बीजानामुपकल्पनं वैज्ञानिकविधिना कृतम् । तथा हि—तुषारपायनमुष्ण-शोषणं चासप्तरात्रादिति धान्यबीजानां त्रिरात्रं पञ्चरात्रं वा कोशीधान्यानां मधुघृतसूकर-वसाभिः काण्डबीजानां छेदलेपो मधुघृतेन कन्दानामस्थिबीजानां शकृदालेपः शाखिनां गर्तदाहो गोऽस्थिशकृद्भिः काले दौहृदं च । प्ररूढांश्चाशुष्ककटुमत्स्यांश्च स्नुहिक्षीरेण वापयेत् ।[1]

राज्ञा कृषिकर्मणि वैज्ञानिकानुसन्धानं पुरस्कर्तुं सचेष्ट आसीत् । तथा हि मेगस्थनीजस्यानुसार—

Any philosopher who may have committed any useful suggestion to writing, or observed any means for improving the crops and the cattle, or, for promoting the public interests declares it publicly [2]

नगरे क्षेत्राणि प्रदाहेन बहुसस्यप्रदानि कृतानि । धान्यानि द्विः रोपितानि । धान्यक्षेत्रान कृष्णानामुर्वीणामक्रियत ।[3] अभिनवक्षेत्राणि कृषियोग्यानि संस्कृतानि । तेषां तृणानि वनानि च प्रदग्धानि । कार्पासबीजस्य लाक्षारसावसेचनेन रक्तवर्णः कार्पास उत्पादितः ।[4]

## सेचनसाधनानि

सिन्धुसभ्यतायुगे सेतुबन्धेन नदीनां जलं समाहृत्य प्रणालीभिः प्रवाह्य क्षेत्राणां सेचनं कृतम् । वैदिकयुगे कूपजलं चक्रेणाकृष्य नालिकाभिः क्षेत्रसेचनाय प्रयुक्तम् ।

महाभारतयुगे प्रायशो जलाशयानामुपयोगिता सेचनाय बभूव ।[5] नदीतटवासिनस्तु नदीमातृका बभूवु ।

अर्थशास्त्रानुसारं सर्वेषां ग्रामीणानां जनानां सहयोगेन सेचनार्थं सेतुबन्धा निर्मिताः । महाजलाशया उच्चतमप्रदेशे निर्मापिताः । तेषां जलं निम्नस्थलेषु स्थितानां जलाशयानां पूरणार्थं प्रयोजितम् । शासका सेचनयोजनानां विषये समुत्सुका आसन् । सौराष्ट्रप्रदेशे

---

१ अर्थशास्त्रस्य सीताध्यक्षप्रकरणम् ।

२. M Crindle : Ancient India p 83.

३. मनुस्मृतौ ७ ११० सुश्रुत सूत्रस्थान ४६ । १७,२० ।

४ [illegible] अन्तर्दर्शनप्रकरणे ।

५ कच्चिद्राष्ट्रे तडागानि पूर्णानि च बृहन्ति च ।
भागशो विनिविष्टानि न कृषिर्देवमातृका ॥ सभापर्वणि ५ ६७ ।

गिरिनगरस्य सुदर्शनतडागस्येतिहास मौर्ययुगाद् गुप्तयुगपर्यन्त भारतीयाना राज्ञा तत्सम्बन्धि-प्रयत्न निदर्शयति । चन्द्रगुप्ताशोक-खारवेल रुद्रदाम-स्कन्दगुप्त-वाक्पतिभोज-करिकाल-राजेन्द्रादीना नृपतीना सेचनकार्याणि प्रख्यातानि सन्ति । क्वचित्तुलाकोटि सेचनाय प्रयुक्तासीत् ।[1]

काश्मीरको महाराजो ललितादित्यस्तु 'अरघट्टाली' निर्माय वितस्ताया जल बहुषु ग्रामेषु सचारयामास । तद्यथा कल्हण

चक्रे चक्रधरे तेन वितस्ताम्भःप्रतारणम् ।
विनिर्मायारघट्टालीस्तास्तान् ग्रामान् प्रयच्छता ॥ राज० ४ १९२

## कृषिसमृद्धि

भारतस्य मूलत एव प्राप्तव्यानि कृषिफलानि—शालि, इक्षु, कार्पासश्च सन्ति । एषा कृषि विदेशेषु भारतादेव प्रसृता । सिन्धुसभ्यतायुगे गोधूमयव-तिलादीनामपि कृषिरक्रियत । ऋग्वेदे यवशालिधान्यानामुल्लेखो वर्तते । परवर्तियुगे व्रीहि-यव-मुद्ग-माष-तिल-गोधूम-नीवार-प्रियङ्गु-श्यामाकादीनामन्नानामुर्वारुकादीना शाकानामुत्पत्ति कृता । बहुविधा शालय —व्रीहि-महाव्रीहितण्डुल शारिशाकाशु-अलाबुकादय उत्पादिता । अथर्ववेदानुसारमिक्षुकृषि कृता । तैलदानाना—तिलसर्षपैरण्डादीना कृषि सुप्रचलितासीत् । दर्भं धान्यमेव श्रुत वैदिकयुगे । सम्भवत तस्यापि कृषि कृता ।

महाभारतयुगे धान्य-यव तिल माष कुलत्थ-सर्षप चण कलाप-मुद्गगोधूमातसीना कृषि कृता । अर्थशास्त्रानुसार तु सीताध्यक्षो धान्यपुष्पफलशाककन्दमूलफलवाल्लिक्यक्षौमकार्पासबीजानि यथाकालमगृह्णात ।

तत्र पूर्ववापास्तु—शालिव्रीहिकोद्रवतिलप्रियङ्गुदारकवरका ।
मध्यवापा —मुद्गमाषशिम्बिकादय ।
पश्चाद्वापा —कुसुम्भमसूरकुलत्थयवगोधूमकलायातसीसर्षपा ।

अर्थशास्त्रानुसारमिक्षवो हि बह्वाबाधा व्ययग्राहिणश्च । फेनाघात प्रदेशा वल्लीफलाना कूपपर्यन्ता शाकमूलानाम्, उपनदप्रदेशा मृद्वीकेम्पूणा हरितप्रदेशा हरितकाना शाकादीना गन्धभैषज्योशीरह्रीबेरपिण्डालुकादीनामुत्पादनाय वरेण्या आसन् ।

चरकसुश्रुतसहितानुसार परवर्तियुगे भारते शालीनामिक्षूणा च बहवो भेदा विविधप्रदेशेषूत्पादिता ।[2] एषु ग्रन्थेषु ग्रामयोग्यानि कृषिफलान्यपि परिगणितानि सन्ति । तेषा सख्या तु शतपर्यन्तास्ति । आधुनिकयुगस्य प्राय सर्वाणि शाकमूलफलान्यन्नादीनि

१ चाणक्यसूत्रे २ ७४ ।
२ चरके सूत्रस्थाने २७ २१५ २२८ सुश्रुते सूत्रस्थाने ४५ अध्याये इक्षुवर्गे च ।

प्राचीनकालेऽपि उत्पादितानि । भारते केसर पिप्पली-लवङ्गैलाकुङ्कुमगिरेरहरिद्रादीनां कृषि समुन्नतासीत् । दक्षिणभारतादेषामुपस्कराणा—विशेषत. पिप्पलीना निर्यात रोमक-प्रदेशेषु विक्रयाय बभूव ।

## राजकीयसंरक्षणम्

कृषिफलेषु राज्ञो भागो बभूव । अत कृषिमधिकृत्य नृपनीति सर्वदाधिकोत्पादनाय कृषकाणां प्रोत्साहनाय चाभवत् । महाभारतानुसार राजा तु साधुपुरुषान् कृषिकर्मणि नियोजयेत् ।

कच्चित् स्वनुष्ठिता तात वार्ता ते साधुभिर्जनै ।
वार्तायां संश्रितस्तात लोकोऽयं सुखमेधते ॥

कृषिफलानि बहूलीकर्तुमर्थशास्त्र राजकीययोजना समुत्थापिता । तथा हि—अकृष्टा-मारिछद्याऽऽयेभ्य प्रयच्छेत् । अकृषन्तोऽसहीन दद्यु । सहोदकमाहार्योदकं वा सेतुं बन्धयेत् । अन्येषा वा बध्नता भूमिमार्गवृक्षोपकरणानुग्रह कुर्यात् । नटनर्तकगायनवादकवाग्जीवन-कुशीलवा वा न कर्मविघ्न कुर्यु । निराश्रयत्वाद् ग्रामाणा क्षेत्राभिरतत्वाच्च पुरुषाणा कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवति ।

दण्डविष्टिकराबाधै रक्षेदुपहतां कृषिम् ।
स्तेनव्यालविषग्राहैर्व्याधिभिश्च पशुव्रजान् ॥
एवं द्रव्यद्विपवनं सेतुबन्धमथाकरान् ।
रक्षेत्पूर्वकृतान् राजा नवांश्चाभिप्रवर्तयेत् ॥[1]

कुल्यबीजानि शुल्करहितान्येव राष्ट्रे आनेतव्यानीति राजनियमोऽभवत् ।[2] कृषिविवा-देषु निर्णय स्वल्पव्ययसमयसाध्य विधातु निकटवर्तिन सज्जना निर्णायका नियुक्ता । स्पर्धनिवादिन कठोरदण्डार्हा इति नीतिरभवत् । राष्ट्रियकृषेर्हानि कुर्वता दण्डो विहित । कृषिसम्बन्धिनी हानि निवारयितु नियमा कृता । सेचनकर्मणि बाधाकारिणो दण्ड्या अभिमता । अपरेषा जलाशयानामुपयोगकारिणस्तेषा जलाशयाना नवीकरण कुर्युरीति विधानमासीत् ।[3] कृषिरक्षणाय राजकीयनियमाना कठोरता स्मरणार्हा । तथाहि उदक-धारण सेतु भिन्दतस्तत्रैवाप्सु निमज्जनमिति ।[4] विवीतक्षेत्रखलवेश्मदीपिकमग्निना दाह-येत् इति च ।[5]

---

१ अर्थशास्त्रे जनपदनिवेशप्रकरणात् २ अर्थशास्त्रे शुल्काध्यक्षप्रकरणात् ।
३ अर्थशास्त्रे धर्मस्थीय सीमाविवादप्रकरणे ।
४ अर्थशास्त्रे कण्टकशोधने चतुर्थेऽधिकरणे । मनुस्मृतौ ९ २७९ ।
५ तत्रैव

वैश्यानां कृषिकर्मणि नियोजनमपि राजधर्मः । तथा हि मनुस्मृतौ

वाणिज्यं कारयेद्वैश्यं कुसीदं कृषिमेव च ॥ ८.४१०

नवक्षेत्राणां स्वामित्वं तु मृगबाणन्यायेन समीहितं मनुना । तथा हि—

पृथोरपीमां पृथिवीं भार्यां पूर्वविदो विदुः ।
स्थाणुच्छेदस्य केदारमाहुः शल्यवतो मृगम् ॥ ९.४४

याज्ञवल्क्यानुसारमलसाः कृषकाः दण्डनीयाः । राजा तेषां भूमिं कार्यक्षमकृषकेभ्यो दद्यात् ।[1] महापुराणानुसारन्तु

तथा भूपोऽप्यतन्द्रालुर्भक्तग्रामेषु कारयेत् ।
कृषिं कर्मान्तिकैर्बीजप्रदानाद्यैरपकर्मं ॥
देशेऽपि कारयेत् कृत्स्ने कृषिं सम्यक्कृषीवलैः ॥ ४२.१७६-१७७

कश्मीरकोऽयं महाराजो ललितादित्यः कृषिसंवर्धनेन महत्तमं महिमानं लेभे इति कल्हणस्य तत्सम्बन्धिवृत्तेन प्रमाणितमेव । तद्यथा राजतरंगिण्याम्—

ललितादित्यभूभर्तुरुद्योगेन बलीयसा ।
किंचिद्वाकृष्टसलिलं प्रायोऽर्पितं मनाक्क्षतं ॥५.६९

अवन्तिवर्मणो महाराजस्य प्रजा सूय्य इति नामकस्य विज्ञानविदो योजनाभिः समृद्धीकृतेति वर्णयति कल्हणः —

असिन्धुजं जलैर्ग्रामान् ग्रामाम्बुदमुपाहृताम् ।
या यावता क्षणेनागाच्छोष तां तावता हृदि ॥५.११०
कालेन मत्वा सेकार्हां प्रतिग्रामं जलस्थिते
परिमाणं विभाग च परिकल्प्य निरत्ययम् ॥५.१११
चकार चानूलाराभिः सिन्धुभिः सर्वतो दिशः
सत्फलोदारकेदारसम्पत्सम्पन्नविभ्रमाः ॥५.११२
न कश्यपेनोपकृतं न यत्संकर्षणेन वा हेलया
मण्डलेऽमुष्मिंस्तत्सुय्येन सुकर्मणा ॥५.११३

## धार्मिकनियोजनम्

कृषेः समृद्धिरधिकांशतो दैवाधीना भवति । देवतानामनुग्रहेण कृषिर्वर्धते इति लोकधारणा । सिन्धुसभ्यतायुगे शस्यशालिनीदेव्याः पूजा कृता । वैदिकयुगे मन्त्रप्रयोगैर्यज्ञादिभिः कर्मकाण्डैश्च यथाकालं वृष्टिप्रवर्तनं कृषिरक्षणं फलबाहुल्यं च सुकरं विहितम् । आग्रयणयज्ञे

---

१ याज्ञवल्क्ये २.१५८।

गृहपतिर्नवान्नानि दवेभ्य समर्प्य स्वय भुक्तवान्।[1] जलवर्पणाय 'कारीरी' इति ख्यातो यज्ञ सम्पादित ।

धर्मशास्त्रेषु तडागनिर्माणस्य पुण्यात्मक प्रभावो निर्दिष्ट । एभिस्तडागै सेचनकर्म सरलमजायत । जलदान सर्वोच्चमिति व्यवस्थापित् ।[2]

बलीवर्दानां सुलकर्षण धर्म्यमिति सम्मतम् ।[3] तत्र विधानमासीदापस्तम्बस्मृतौ—

हलमष्टगव धर्म्यं षड्गव मध्यम स्मृतम् ।
चतुर्गव नृशसानां द्विगव वृषघातिनाम् ॥ २२-२३

स्वस्थबलीवर्दानां कर्षण ब्राह्मणेभ्योऽपि पौराणिकयुगे समीचीन विहितम् । बलीवर्देभ्योऽवकाशदिवसा—अमावस्यासक्रान्ति पूर्णिमादयो निर्धारिता ।[4] परवर्तियुगे बलीवर्दानामलङ्करण पूजन हलविधान हलयोजनमुहूर्त कर्षण वपन क्षेत्रचयन चाधिकृत्य धार्मिकविधानमनुदिष्टम् ।[5]

## उपवनम्

पुष्पफलपत्रादीनामुपयोगिता प्रागेव निर्दिष्टा उपभोग्यप्रकरणे । वनानामधिकोपगिवृक्षलतादीना स्वाधिकारस्याकांक्षा स्वाभाविकी भवति । तेषां कृत्रिमोपायै स्वाधिकृतभूमौ सवर्धनमुपवनविधानस्य प्रयोजनम् ।

लोकप्रियता

ऋग्वेदानुसार फलेषु लोकानां दचिरासीत् । तथा हि—

एषा ह्यस्य सूनृता विरप्शी गोमती मही पक्वा शाखा न दाशुषे ॥१ ८ ८

इदं वाटिकानां प्रशस्ति सोपम व्यज्यते । वैदिकयुगे आरण्यकाना मुनीना वनप्रवृत्ति प्रायश उपवनाना सग्रहणार्थं बभूव । मुनयस्ते सुवृक्षाणामभ्युदयाय निकृष्टवृक्षाणां दूरीकरणाय च स्वभावत सचेष्टा बभूवु । तत प्रभृति सदैवोपवनसवर्धन लोकसाधारण कर्मासीत् ।

मुनीनामाश्रमेषु भिक्षुकाणा विहारेषु नगरीणामञ्चलेषु प्रासादाना परिधिषु च सर्वत्रोपवन सुस्निग्ध विराजितम् । तद्यथामरकोशे

---

१ ऋग्वेदे ४-५७ ६ ८ शुक्लयजुर्वेदे १२ ७०, ७२, अथर्ववेदे ३ १७, ६ १४२, ६ ७९ आपस्तम्बश्रौतसूत्रे २ ९.१ ।

२ अनुशासनपर्व ५८ अध्याये ३ रामायणेऽयोध्याकाण्डे ६४ सर्गे ।

४ पद्मपुराण सृष्टिखण्डे ४७ १११ १२० । ५. पराशरस्मृतौ ३ अध्याये ।

गृहारामास्तु निष्कुटा ।
आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ।
अमात्यगणिकागेहोपवने वृक्षवाटिका ।
पुमानाक्रीड उद्यानं राज्ञ साधारणं वनम् ।
स्यादेतदेव प्रमदवनमन्त पुरोचितम् ॥

उपवनाना क्रीडार्थमुपयोग प्राचीनकालतो वर्तते स्म ।[1] अयोध्या-कपिलवस्तु-उज्जयिनीषूपवनाना शतान्यासन् । उपवनेषु लतागृहं शैलगृह जलक्रीडापुष्करिणी आरामागाराश्च बभूवु । बहवो माङ्गलिकवृक्षा आरोपिता । प्रायो वसन्तोत्सवेषु प्रमदवने आम्रमञ्जरी-कुरबकपुष्पस्तबकादीना मनोहारित्व सार्वजनिकप्रमोदाय बभूव । तत्र राजदम्पतीना विहारस्थली बभूव । सर्वेषु समृद्धिशालिना गृहायतनेषु प्रतिष्ठितो मदनवृक्ष कामदेवपूजार्थमभवत् । भवनसहकारशाखासु शुकपञ्जरावस्थानमभूत् । वृक्षास्तु कुटुम्बसदस्या इव सम्मानिता. ।

तत्र पुष्पशकटिकाकला नागरेषु प्रचलितासीत् । तदर्थं पुष्पोपादानेन शकटिका प्रणीता ।[3]

भारतीयकाव्येषु सौन्दर्यशालिनामुपवनाना चारुता प्रायशो निदर्शिता । तत्र बाला. पयोघटैस्स शिशुवृक्षाणा सपोषण कुर्वन्ति स्म । तथा हि कुमारसम्भवे—

अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणैर्व्यवर्धयत् ।
गुहोऽपि येषा प्रथमाप्तजन्मना न पुत्रवात्सल्यमपाकरिष्यति ।५ १४

पयोघटैराश्रमबालवृक्षान्संवर्धयन्ती स्वबलानुरूपै ।
असशय प्राक्तनयोपपत्ते स्तनंधयप्रीतिमवाप्स्यसि त्वम् ॥ रघु० १४.७८

उपवनेषु मानवाना चित्तवृत्तय उल्लसिता सुखे । दु खे वा तेषूपवनेषु मानवाना समवेदनाप्रतीतिरभवत् । लतावृक्षादीना पुष्पै शरीरालङ्करण भवति । देवपूजार्थं पुष्पफलादीना भूय उपयोगितासीत् । फलदानं तु साधारणधर्मो वृक्षाणाम् । उत्सवावसरे पुरा पुष्पगृहा विरचिता ।

वृक्षास्तु कुटुम्बिन इवेति प्रवदति कल्हण. । तद्यथा—

सप्रसूनफला वृक्षा गृहस्था इव पातिता ।
कुटुम्बैरिव रोलम्बैरशोच्यन्त पदे पदे ॥ राजत० ७.१२२४

---

१. अंगुत्तरनिकायानुसार समृद्धनागरिकस्य चत्वारि लक्षणानि बभूवु—उपवनभोग, रमणीयवस्त्रधारणम्, ऋतुयोग्यावास, स्वादुभोजनं च १ १४५ ।
२ कादम्बर्या ३१६ पृष्ठे । अभिज्ञानशाकुन्तले चतुर्थाङ्के च ।
३ कामसूत्रटीकायाम् १ २ १६

### वृक्षविज्ञानम्

वृक्षविज्ञानेनोपवनानां समृद्धिर्विस्मयकारिणी बभूव । तथा हि—'आम्रफलानि घटाकाराणि सम्भावितानि । तृतीये वर्षे आम्रवृक्षाः फलदा बभूवुः । पुष्पफलादीनामकाले प्रसवः सम्भावितः ।'[1] आरामिका वृक्षविज्ञाने तेषां संवर्धने च विशारदा बभूवुः । शुष्यमाणानां वृक्षाणामपि संवर्धनं सर्वौषधयोगेन कृतम् ।[2]

अर्थशास्त्रानुसारं वृक्षायुर्वेदनिष्णाताः जनाः सीताध्यक्षपदे नियोजिताः । वृक्षारोपणात् प्राग् गर्तं प्रदाह्य गोऽस्थिशकृद्भिः काले दौहृदं च । प्ररूढांश्चाशुष्ककटुमत्स्यांश्च स्नुहिक्षीरेण वापयेत् ।[3]

वराहमिहिरस्य बृहत्संहितायां वृक्षायुर्वेदस्य गुप्तयुगं यावत् प्रगतिर्निदर्शिता । तदनुसारं वृक्षाणां रोपणं कलमवद्धत्याऽक्रियत । विभिन्नर्तौ वृक्षकाणां सेचनकालो नियत आसीत् । वृक्षाणां रोगाणां लक्षणानि तेषां निदानानि च कृतानि । तेषां शल्यचिकित्साऽपि प्रचलिताऽऽसीत् । वृक्षाणां शीघ्रसंवर्धनाय नवविधानि कल्पानि रचितानि । कलात्मकविधिना समुद्दीर्घमहावृक्षलतादीनामुपवने विन्यासो निष्पाद्यते स्म ।[4]

फलानां षड्विधत्वं वैज्ञानिकदृष्ट्या पर्यालोचितम्—

> अन्तर्व्याप्तं बहिर्व्याप्तं बाह्यान्तर्व्याप्तमेव च ।
> सर्वव्याप्तं बहुव्याप्तं निर्व्याप्तं च तथा फलम् ।।

काव्यमीमांसायाम् १८ अध्याये

### उपवनसमृद्धिः

वृक्षारोपणस्य बहुविधानि प्रयोजनानि प्राचीनकालता बभूवुः । तथाहि छायार्थं शरणार्थं वा फलार्थं पुष्पार्थं लतापत्रादीनां सौन्दर्यार्थं च । छायार्थं शरणार्थं वा वटवृक्षा रोप्यन्ते स्म । तेषां शरणे पञ्चशतजना अपि शरणं प्राप्नुवन्ति स्म ।[5] पुष्पाणामेव षड्विध उपयोगो ज्ञात आसीत् ।M

राजकीयोद्यानस्य संरक्षणाय द्वाराट्टालिकाभिः समन्विताः प्राकारा रचिताः । उद्यानस्य केन्द्रभागे पुष्करिण्याः कमलशोभाऽवर्तत । तत्रैवारामागारो निर्मितः ।[6]

---

१. दधिवाहनजातके १८६ ।

२ छान्दोग्ये ६ ३ ७–१३ ।

३ रोपणपुष्टिचिकित्सादीन्यत्र गृहोद्यानानां । कामसूत्रटीकायाम् १ ३.१६ ।

४ अस्य विषयस्य विवरणं बृहत्संहितायामग्निपुराणे च द्रष्टव्यम् । आनुषङ्गिकरूपेण नैषधीयचरिते १६.८२, १.८७, रत्नावल्यां ३ ८ च द्रष्टव्यस्थलानि ।

५. महजातके २१३ ।

M शोभाधिगन्धरसैः फलार्चनाभ्यां च पुष्पमुपयोगि ।

६ धम्मद्धजजातके २२० ।

नगराणामुपवनेषु कर्णिकार खर्जूर-प्रियाल-मुचुलिन्द कुटज-केतकप्रियङ्गु-नीप सप्तच्छद कोविदारासन-करवीरादीना शोभासीत् । एषां वृक्षाणां पुष्पप्रदत्वमेव विशिष्टम् । वृक्षाणामङ्काश्रयप्रणयिन्यो लता सर्वधिता ।

आम्रवृक्षाणा भारते सदैव प्रथमस्थानमुपवनेषु दृश्यते।[1] वहुविधा फलपुष्पप्रदा वृक्षा चरकसुश्रुतसहितयो परिगणिता ।[2] ह्वेनसागेन भारतस्य विविधप्रदेशाना विशिष्टफल पुष्पादीना वृक्षाणा वर्णन कृतम ।[3]

राजकीय-सरक्षणम्

उपवनारोपणविषये राज्ञामभिरुचि सातिशय विद्यते । वैदेशिकवृक्षाणामायातस्य व्यवस्था राजभि कृता । तेषामुपवने प्रथम सर्वधिता वैदेशिकवृक्षा साधारणनागरिकाणामुपवनेषु पश्चात् प्रत्यानीता । चन्द्रगुप्ताशोकखारवेलादीना नृपाणामुपवनरुचि: प्रसिद्धा । अर्थशास्त्रानुसार राजकीयशासनमनुसृत्य निर्जलप्रदेशेषु कूप-कासारोत्सा निर्मिता । तत्र पुष्पफलादीनामुपवनानि च रोपितानि ।

उपवनवृक्षाणा हानिकरणे घोरदण्डस्य व्यवस्थासीत् । तथा हि—

वनस्पतीना सर्वेषामुपभोगो यथा यथा ।
तथा तथा दम कार्यो हिंसायामिति धारणा ॥मनु० ८ २८५

राजशासनानुसार सीमाप्रवर्तिनो वृक्षा —वट किंशुक शाल्मलि-साल-तालादय प्रतिग्राम रोपिता ।

## धार्मिकनियोजनम्

धार्मिकनियोजनेन प्रधानतो वृक्षाणा पुण्यात्मकप्रभावोऽभिव्यक्त । तेषा सुरक्षार्थं च योजना विहिता । तथा हि— वृक्षारोपणेन पुरुषस्य कीर्तिर्वर्धते, मरणानन्तर शुभ कल्प्यते । वृक्षारोपणेन पूर्वापरवशजा उद्धृता । पुत्र एव वृक्षो जायते आरोपकारिण पुरुषस्य । देवगन्धर्वमानवा सर्वे वृक्षाश्रिता । वृक्षा पुत्रवत् पाल्या ' ।[4] वृक्षाणा हानिकर्तु प्रायश्चित्तविधानमासीत् । तथा हि—

तिर्यग्योनिवध कृत्वा द्रुमांश्छित्त्वेतरान्बहून् ।
त्रिरात्र वायुभक्ष स्यात्कर्म च प्रथयन्नर ॥शान्ति० ३५-३३४

---

१. बृहदारण्यके ८ ३ ३६ ।
२ फलवर्गपुष्पवर्गयो ।
३ ह्वेनसागे वाट्संकृते प्रथमे भागे पृ० ६३ ।
४. महाभारतेऽनुशासनपर्वणि ५८ २३ ३१ ।

वृक्षारोहणमनिष्टमेव ।[1] राजभ्योऽपि वृक्षाणां नमस्कारः साधु समादिष्टः ।[2]

प्रायश्चित्तविधानेन यावत् वृक्षारोपणस्य व्यवस्था कृता । तथा हि—प्रतिमार्गञ्जनकर्ता त्रिवर्षं यावत् पिप्पलवृक्षसेचनं करोतु । स्त्रीहन्ता दशपिप्पलवृक्षारोपणं करोतु ।[3] वृक्षहत्या तु प्रायश्चित्तविधानानुसारं गोहत्यावदभिमता ।

पिण्डदानसामर्थ्यमपि वृक्षाणामध्यारोपितम् । पिप्पलवृक्षस्तु सहस्रपुत्रेण समीकृतः । विविधवृक्षाणामारोपणस्य विविधानि पुण्यफलानि सम्मितानि । यथा—चन्दनपनसवृक्षौ क्रमशः पुण्यलक्ष्मीप्रदौ । चम्पकस्तु सौभाग्यदः, बकुलेन कुलवृद्धिर्भवति ।[4] विविधदेवानां परितुष्टिर्विविधपुष्पैः सम्मता ।[5]

## पशुपालनम्

कृषिपशुपालनयोः साहाय्यमेव । पुरा जनसंख्यायाः स्वल्पत्वे सति वनप्रदेशेषु गोचरेषु च घासस्याधिक्यमभवत् सर्वत्र । जलं सर्वत्र प्राप्यमेवासीत् । धार्मिकविचारेणापि प्राचीनयुगे पशूनां विशेषमहत्त्वमासीत् ।

### पशूनां लोकप्रियता

सिन्धुसभ्यतायां बलीवर्दानां प्रतिकृतीनां दर्शनेन स्पष्टं प्रतिभाति यत् तत्रत्यजनानां पशुपालने विशेषाभिरुचिरासीत्, यतो बलीवर्दास्तेषामतिशयप्रियतरा आसन् । वैदिकयुगे गोपालने रुचिरनेन मन्त्रेण प्रमाणिता—

आ गावो अग्मन्नुत भद्रमक्रन्त्सीदन्तु गोष्ठे रणयन्त्वस्मे ।
प्रजावतीः पुरुरूपा इह स्युरिन्द्राय पूर्वीरुषसो दुहानाः ॥
यूयं गावो मेदयथा कृशं चिदश्रीरं चित्कृणुथा सुप्रतीकम् ।
भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु ॥ ऋग्वेदे, ६.२८.१,६ ।
परिष्कृधि सत्य सोमपा अनाशस्ता इव स्मसि ।
गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ऋ० १.२९.१

गोभिरश्वैश्च वैदिका ऐश्वर्यवन्तो भवन् ।[6] तथा हि गा अधिकृत्य प्रोक्तमथर्ववेदे—

शिवो वो गोष्ठो भवतु शारिशाकेव पुष्यत ।
इहैवोत प्रजायध्वं मया वः सं सृजामसि ॥

---

१. चरके सूत्रस्थाने ८.२० ।
२. सभापर्वणि ५.१०२ ।
३. शातातपस्मृतौ ३.१८, २.१७ ।
४. पद्मपुराणे सृष्टिखण्डे २८ अध्याये ।
५. अग्निपुराणे २०२, २०७ अध्याययोः
६. ऋग्वेदे १.२९, १०.६८.१२ अथर्ववेदे ३.१२ ।

मया गावो गोपतिना सचध्वमयं वो गोष्ठ इह पोषयिष्णुः ।
रायस्पोषेण बहुला भवन्तीर्जीवाजीवन्तीरुप व सदेम ॥ ३ १४ ५६

अश्वास्तु मुक्तास्वर्णादिभिरलङ्कृता ।[1] गोष्ठं तु गृहपतेरायतने निर्मितम् । दर्शपूर्णमासयज्ञे यजमानोऽकामयत—पशवस्तु मया प्रसन्ना भवन्तु । अनेन यज्ञेनाहं सन्तानैं पशुभिश्च सह पवित्रो भूयासम् ।

अश्वस्तु वैदिकयुगस्य प्रकृष्टतमो बलिष्ठ शक्तिसम्पन्नो महावेग पशुरासीत् । तस्य मूल्य सहस्रगवा सम बभूव ।[2] पशून् प्रति वैदिकानामुपनिषद्युगे धारणा प्रशस्या वर्तते । तथा हि–यशोऽधिष्ठानं पशव इति ।[3] पशुमान् भवितुमेव पशुषु पञ्चविधं सामोपासन निर्णीतम् ।[4]

रामायणमहाभारतयुगे पशुषु जनरुचि समवर्धत । गोषु स्वभावत सम्पन्नता सम्मता ।[5] महाभारतानुसारं राजानो राजकुमारास्तु स्वहस्तेन गवामपरेषां च प्रियपशूनां सेवामकुर्वन् ।[6] नकुलसहदेवौ पशुसेवाविशारदौ बभूवतु ।[7] गवां पयोऽमृतमेव मतम् । गौस्तु प्रतिष्ठाकामाय श्रेष्ठसाधनमिति मान्यताभवत्[8] । हस्तिनोऽश्वाश्चालङ्कृता । उपहारार्थं पशव काञ्चनमालाभिरलङ्कृता । राजभ्यस्तेषामुपहार प्रकल्पित ।[9] नगरस्य शोभा हस्तिरथाश्वसङ्कुलत्वेनाभिमता । गोपास्तु राज्ञां स्नेहास्पद बभूवु ।[10]

अर्थशास्त्रानुसारं पशुपालनविधि पशूनामतिशयलोकप्रियत्व समर्थयति ।[11]

परवर्तियुगे कालिदासेन वर्णित दिलीपस्य गोपालनव्रत विदितचरमेव । भागवते कृष्णस्य गोपालनचरितं स्पृहणीयं वर्तते । पशूनां कृते महोत्सवानामायोजन कृतम् । कृष्णस्य गोवर्धनपूजा गिरियज्ञरूपाद्यावधि सम्प्रतिष्ठिता । अन्येपूत्सवेषु पशवो गृहसदस्या इवालङ्कृता ।

भारतीयकाव्येनापि पशूनां लोकप्रियत्व प्रसाधितम् । वैदिकयुगे गोर्माता तस्या वत्स पुत्र एव मत तद्यथा—

---

१. ऋग्वेदे १ ६८ ११ ।
२ शतपथब्राह्मणे १३ १ २.५-६, ३ ३ १,१३.४ २ १ ।
३ तैत्तिरीयोपनिषदि भृगुवल्ली १० ३ ।
४ छान्दोग्ये २ १७ २, २ ६ २ ।
५ रामायणे युद्धकाण्डे १६९ ।
६ वनपर्वणि २३८ २०, २३९ ४ ६ ।
७ वनपर्वणि ६८ २ ६, ७१ १२ १८ विराटपर्वणि ३ ३ ।
८ वनपर्वणि यक्ष युधिष्ठिरसंवादे ।
९. सभापर्वणि ५२ अध्याये । रामायणेऽयोध्याकाण्डे ७० २० २३ हस्तिनां स्वर्णालङ्कारमण्डिता वैदिकयुगेऽपि प्रसिद्धा । ऐतरेयब्राह्मणे ८ २३ ३ ।
१०. रामायणे अयोध्याकाण्डे १० ४०, ४४, ४७ ।
११. अर्थशास्त्रे ४२ प्रकरणात् ।

अनड्वान् दाधार पृथिवीमुत द्याम्,  
अनड्वान् दाधारोर्वन्तरिक्षम् ।  
अनड्वान् दाधार प्रदिशः षडुर्वीः,  
अनड्वान् विश्वं भुवनमाविवेश ॥

बौद्धसंस्कृतौ गावः कौटुम्बिकसदस्या इव मताः । गवामार्जवं स्निग्धत्वं च गौतमेन सुष्ठु प्रतिपादितम् ।[1]

गोवत्सपूजा दधिमन्थनं कस्य हृदयं न हरतीति पुराणवचनम् ।[2] भागवतवचनं गोपाः समधिकृत्य सुप्रियमेव—

गावश्च कृष्णमुखनिर्गतवेणुगीत-  
पीयूषमुत्तभितकर्णपुटैः पिबन्त्यः ।  
शावाः स्नुतस्तनपयःकवलाः स्म तस्थु-  
र्गोविन्दमात्मनि दृशाश्रुकलाः स्पृशन्त्यः ॥ १०.२१.१३

## पशुसमृद्धिः

सिन्धुसभ्यतायुगात् भारते सदैव हस्ति-गो-महिषाजाविगर्दभोष्ट्रशूकरादीनां परिपालनं विविधप्रदेशेषु बभूव । प्रधानतः आर्याः गोबलीवर्दादिकान् परिपालयन्ति स्म । एवं पशूनां सहस्रा समृद्धिशालिनां स्वामित्वे लक्षावधिरपि बभूव ।[3] अश्वानां पालनमपि कृतम् । गर्दभाः भारितमाः भारहाराः सन्तः सर्वेषां कृते उपयोगिनः बभूवुः ।

रामायणानुसारं राज्ञां कृते हस्तिगोरासभाश्वानां सहस्राण्यपि पालितानि । हस्तिनो नागवने पालिताः ।[4] वनवासिनामाचार्याणां सहस्राणि गावो बभूवुः । महाभारतानुसारं कौरवपाण्डवानामनेकलक्षगावो बभूवुः ।[5] युधिष्ठिरस्य कृते पशूनां पालनं सिन्धुप्रदेशात् पर्णाशां यावदक्रियत ।[6] ऐतिहासिकयुगेऽपि राज्ञां लक्षाधिकगवामुल्लेखा वर्तन्ते । हर्षचरितानुसारं महाराजो हर्षोऽर्बुदशो गवां दानमकरोत् ।[7] उषावदातेन त्रिलक्षगवां दानमक्रियत ।[8]

---

१ सुत्तनिपाते ब्राह्मणधम्मिकसुत्ते ।  
२. मत्स्यपुराणे २८.३२-३६ ।  
३ ऋग्वेदे ५.३०.१२–१५, १.२९, ऐतरेयब्राह्मणे ८.४.२२, २३ ।  
४ अयोध्याकाण्डे १००.५० ।  
५, विराटपर्वणि १०.१०, वनपर्वणि ३९.४ ।  
६. सभापर्वणि ४८.६ ।  
७. हर्षचरिते सप्तमोच्छ्वासे ।  
८. नासिके गुहालेखे सप्तदशे ।

अर्थशास्त्रानुसारं राज्ञा कृते पशुपालनाय—अश्वाध्यक्ष, गोऽध्यक्ष, हस्त्यध्यक्षश्च नियुक्ता। गो-महिषी-खराजोष्ट्रवराहादीना पालनं गोऽध्यक्षेण कृतम्।[1] अश्वा राजकीय-प्रयोजनाय बहुभ्यो देशेभ्य: काम्बोजसिन्धुवनायुमौवीरारट्टबाह्लीकपापेयशैतलेभ्य आनीय पालिता।

राज्ञ: सेनासु हस्त्यश्वबलीवर्दादीना महत्या गणनाबाह्यासीत्। तथा हि युधिष्ठिरसेना-परिमाण द्रष्टव्यम्—

अयुतं त्रीणि पद्मानि गजारोहा: ससादिन:।
रथानामर्बुदं चापि पादाता बहवस्तथा॥ सभापर्वणि ५२.४४

विनयाधानम्

अश्वाना कार्यक्षमत्व विधातु सम्यग्विनयनं कृतम्। साधारणोपयोगाय वल्गनलघन-धोरणनारोष्ट्रादीना शिक्षा दत्ता। युद्धार्थमश्वाना शिक्षका सारथय एव नियुक्ता।

अर्थशास्त्रानुसारमश्वाना चिकित्सकास्तेषामारोग्याय ऋत्वनुकूलाहाराय च सचेष्टा अभवन्। सूत्रग्राहकोऽश्वबन्धको यावसिको विधापाचक: स्थानपालक: केशकारो जाङ्गली-विच्चापरे सेवका अश्वाना सुखार्थं नियुक्ता। किमधिकम्—

द्विरह्न: स्नानमश्वाना गन्धमाल्य च दापयेत्।
कृष्णसन्धिषु भूतेज्या: शुक्लेषु स्वस्तिवाचनम्॥ अश्वाध्यक्षप्रकरणे

'हस्त्यध्यक्षो हस्तिवनरक्षा दम्यकर्मक्षान्ताना हस्तिहस्तिनीकलभाना शालास्थान-शय्याकर्मविधानयवसप्रमाण कर्मस्वायोग बन्धनोपकरण साङ्ग्रामिकमलंकार चिकित्सकानी-कस्थौपस्थायिकवर्ग चानुतिष्ठेत्। हस्तिना शिक्षण भोजनादिक च विशिष्टमेवासीत्। युद्ध-शिक्षया हस्तिना योग्यता सवर्धिता। शिक्षिता हस्तिन: भित्ति-स्तम्भ-द्वार-तोरणादीना भञ्जने दक्षा बभूवु:। भारतीयाना हस्तिशिक्षा विदेशेऽपि सम्मानिता।[2] अग्निपुराणे गज-चिकित्साश्वचिकित्साप्रकरणे स्त:। तत्र पशूना रोगाणामुपचारविधि वैज्ञानिकपद्धतिमनु-सृत्य पर्यालोचित:।

सुशिक्षिता अश्वा स्वामिनो रक्षार्थं प्राणपणेन समुद्यता बभूवु:। तद्यथा राजतरङ्गिण्या विजयमल्लस्य मन्त्रिणोऽश्वस्य गाथा कल्हणो वर्णयति—

---

१ गोऽध्यक्षप्रकरणात्।

२. The proficiency of the Indians in this art ( management of elephants ) early attracted the attention of Alexander's successors, and natives of India were so long exclusively employed in this service that the term Indian was applied to every elephant driver to whatever country he might belong Wilson Theatre of the Hindus p. 92

हलियनमहोदयस्य लेखानुसारं शिक्षिता हस्तिन: चन्द्रगुप्तस्याङ्गरक्षका नियुक्ता।

सत्ववानकरोत् पत्न्या मज्जनं रिपुसङ्कटे ।
सिन्धुं प्रवृद्धामुत्तीर्य तुरङ्गोऽपि तमन्वगात् ॥ ११०

महाराजप्रतापस्य चेतक इति ख्यातस्याश्वस्य जीवनवृत्तं सुविदितमेव ।

## धार्मिकनियोजनम्

वैदिकधर्मानुसारं पूषा पशूनां संरक्षको देवः । पशवस्तु धार्मिकविचारेण समृद्धिसूचका इति सम्मतम् । गवां नामकीर्तनं नामश्रवणं दानं दर्शनं च महाभारतानुसारं प्रशस्यम् । ततः पुरुषस्य कल्याणोत्पत्तिरभिमता । गावस्तु यज्ञस्य नेत्रं मुखं वा मताः । स्वर्गसोपानमेव गावः ।[1]

मनुना पशूनां कल्याणार्थं योजना कृता । तदनुसारं तु—

नाविनीतैर्व्रजेद् धुर्यैर्न च क्षुद्व्याधिपीडितैः ।
न भिन्नशृङ्गाक्षिखुरैर्न वालधिविरूपितैः ॥ ४ ६७

बलीवर्दानां प्रतोदनं दोषावहमिति कल्पितम् । गवां पृष्ठे आरुह्य यात्रा न कर्तव्या ।[2]

पूर्वजानां कल्याणार्थं पौराणिकयुगे वृषभोत्सर्जनं श्रेष्ठकर्म इति सम्प्रधारितम् । गोदानं तु पृथ्वीदानसमं प्रसिद्धम् । सवत्सगोदानेन ब्रह्मलोकः सुलभ इति धारणासीत् । गोदानं कुर्वतो जनस्य सेविका ब्रह्मलोके चन्द्रवदन्यः, स्वर्णवर्णा नितम्बिन्यः, तन्व्यो रमण्यश्च भवन्तीति धारणा । नीलवृषभोत्सर्गेण पितॄणां परितृप्तिर्भवति । ग्रामेषु मंगलवृषभस्य पूजा कृता । तस्य निधने ग्रामवासिनः शोकनिमग्ना अभवन् ।

## राजनीतिकसंरक्षणम्

महाराजाशोकेन पशूनां हिंसा निषेधिता । तेन तेषां कृते चिकित्सालया निर्मापिताः । पशूनां छायार्थं राजमार्गमभितो वृक्षा आरोपिताश्च । यदि कोऽपि जनः सदोषमपि पशुं दण्डयेत् स तावन्मात्रं दण्डं स्वयमेव भोक्तुं निर्णीतः । पशुचौराणां कृते घोरराजदण्डव्यवस्थासीत् ।

अर्थशास्त्रानुसारं पशूनां हानिकारिणः मृत्युदण्डमार्हन् । गवां दोहनेऽपि नियम आसीत् । तथा हि गोवत्सानां स्वल्पे वयसि गोदोहनं सकृदेव प्रतिदिनं कर्तव्यम् । राजकीयपशुविभागानामध्यक्षा नियुक्ता आसन् । हस्तिनां संवर्धनाय कृत्रिमवनानि रक्षितानि बभूवुः ।[3]

---

१. अनुशासनपर्वणि ५१ २६-३३ ।
२ मनुस्मृतौ ४ ६७,७२ ।
३ जनपदनिवेशप्रकरणात् ।

गोवध सर्वथा निषिद्धो बभूवार्यशास्त्रानुसारम् ।[१]
पशुपालनं वैश्येभ्यो जीविकार्थं एकाधिकाररूपेण नियोजितम् ।[२]

कतिपयनृपा पशुप्रिया बभूवु । कश्मीरराज सुस्सलोऽश्वप्रिय आसीत् । राजानो राज्यश्च गोकुलानि निरमापयन् । महाराज्ञो रत्नादेव्या गोकुलस्य वर्णनं कल्हणेन कृतम्—

गवामभ्याहृतस्वैरसञ्चारचरकाञ्चिते ।
तत्र वैतस्तलोयाख्ये प्रदधौदामय वपु ॥ राज० ८ २४३७

## व्यापारः

व्यापारस्यापरं नाम वाणिज्यमस्ति । व्यापारोऽयं प्राचीनयुगे वणिग्वृत्तीनां वैश्यानां प्राय एकाधिकारं प्रणीत । उपभोग्यानां वैविध्यं सर्वेषु देशेषु कालेषु च व्यापारद्वारा प्रसिध्यति । क्षेत्रमस्य कुटुम्बादारभ्य ग्रामनगरप्रान्तदेशविदेश यावत् नि सीममेव । लाभदृष्ट्या व्यापारस्य सर्वोत्कृष्टता सुविदितैव । कौटिल्यानुसारं शतप्रतिशतं लाभं व्यापारिणं कर्तुं शक्नुवन्ति ।

पण्यानि

प्रायश सर्वोपभोग्यानि वस्तूनि तेषामुपादानानि च वाणिज्ययोग्यानि भवन्ति । अपरं च साधनरूपाण्यस्त्रशस्त्राणि भाण्डूपकरणानि विभूषणार्हाणि मणिरत्नदन्तसुवर्णादीनि औषधादीनि व्यजनानि च वाणिज्यवस्तूनि सन्ति । पशुपक्षिणो तेभ्य प्राप्याणां चर्मणां च व्यापार प्राचीनकालत प्रवर्तते ।

खीष्टत त्रिसहस्रवर्ष प्राग् दक्षिणभारतेभ्य प्रेषितसर्णकाष्ठ काल्डियाप्रदेशस्थचन्द्रमन्दिरे प्रयुक्तम् ।[३] प्राय तस्मिन् युगे मिस्रप्रदेशस्य शवानामावरणाय भारतीयवस्त्रं समीहितमासीत् । सिन्धुसभ्यताया निर्माणे बिलोचिस्थानाफगानिस्थान पारसीकादिभ्यो देशेभ्य प्राप्तानि धातुमणिस्वर्णरजतानि प्रायुज्यन्त । सिन्धुवासिनां कार्पासवस्त्राणां निर्यात सुमेरप्रदेशेऽभवत ।[४]

वैदिकसभ्यतायां कृषक - पशुपालक - कुम्भकारायस्कारस्वर्णकारमणिकारतन्तुवाय - चर्मम्न-तक्षक-रथकारादीनामुत्पादितानां वस्तूनां परस्पर व्यापारोऽभवत् । सोमविक्रेतार सम्भवत पर्वतप्रदेशेभ्य आगता । दूर्शपवस्त्राजिनानां व्यापारोऽथर्ववेदे निर्दिष्ट ।[५]

---

१ सूनाध्यक्षप्रकरणात् ।
२ मनुस्मृतौ ८ ४१०,१ ३२८ ।
3 Hibbert lectures 1877
४ Piggott Prehistoric India p 208
५. अथर्ववेदे ४,७६ ।

सिन्धुप्रदेशादश्वन्क्षणादीनां निर्यातिमभवन् । वैदिकयुगे भारतीयानां व्यापारोऽन्यदेशवासिभिः सह बभूव । व्यापारेऽस्मिन् लौहवस्तूनां व्यञ्जनानां सुगन्धिद्रव्याणां रत्नादीनां च बाहुल्यमासीत् ।[१]

कश्मीरदेशे कलिङ्गगजाः सेनायां प्रयुक्ताः आसन्निति तेषां व्यापारेण देश-विदेशप्रचारं प्रकटयति । एतत्समुद्दिश्य कल्हणो वर्णयति—

पश्यन्ति जन्मवसुधां सेर्ष्यातोरणमस्थिताः ।
तस्मात्तज्जैः कलिङ्गेभ्यः कथंचित् प्रस्थित पथि ॥४,१४७॥

खीष्ट. सप्तशताब्दं प्राग् भारतदेशस्य कस्तीरं हस्तिदन्तश्च ग्रीसदेशे निर्यातितम् । भारतीयानां बीजवृक्षाणां निर्यातमभवत् फ्रप्रदेशायाम् ।[२] पशूनामपि निर्यातिमभवत् । तथा हि—'टालेमी फिग्गाडेल्फस' इति ख्याताय महाराजाय भारतीयकुक्कुर-गो-दारादीनां निर्यातं कृतम् । कप्तादिभिर्भारव्हारैस्तदा भारतीयव्यंजनानि विदेशेषु प्रेषितानि । रमणीनामपि निर्यातं श्रूयते ग्रीसप्रदेशात् ।mm

खीष्टतः चतु शताब्द प्राक् भारतीयकौशेयानां पारसीकदेशे बहुमानोऽभवत् । कौशेयस्य तत्तुल्यस्वर्णं मूल्यमासीत् ।[3] भोगविलासे षितवस्तूनां रोमदेशेऽतिशयसमादरो बभूव । तदर्थं भारतेऽतुलितस्वर्णराशि समागतः । तदधिकृत्य लिखितं प्लीनीमहोदयेन—There was no year in which India did not drain the Roman Empire of a hundred million sesterces ( £ 10,00000 ) --- so dearly do we pay for our luxury and our women.[४] अपरं च तस्य समर्थनम्—The annual drainage of gold from Rome was estimated at 500 steria, equal to abont Rs 4000,000[५]

चीनप्रदेशस्य कौशेयं प्रथमं भारते आनीतं पश्चात् विदेशेषु प्रेषितम् ।[६] भारतीयमं-

---

१ अरब और भारत के सम्बन्ध पृ० ६१ ६२ ।

२. Rawlinson-Intercourse Between India and the Western World p 93-94

MM It represents the fondness of the princes of India for the fascinating hetaerae of Greece and the readiness of Greek traders to make the high profits to be drained from shipping these youthful cargoes Keith - Sanskrit-Drama p 62

३, India shipping p 83 ।

४. Natural History

५ Encyclopaedia Brittanica pt XI p 460

६ Warmington Commerce Between the Roman Empire and India p 176, 212, Periplus p 172

शुक 'मलमल' इति ख्यात अफ्रीकादेशेऽरबे सकोत्राया च प्रेषितम्।[1] सर्वेषु देशेषु भारतीयकलाकृतीनां समादरो बभूव।

उपर्युक्तवस्तूना वैदेशिकव्यापार. प्रायश खीष्टस्य सप्तशताब्दपर्यन्त भारतीयवणिग्भि कृत। पश्चादरबदेशवासिनो भारतीयवस्तूना पश्चिमदेशेषु निर्यातं कुर्वन्ति स्म।[2] कतिपयव्यापारवस्तूना भारतीयनाम्नामरबपर्याया दर्शनीया एव—

| संस्कृतम् | अरबभाषायाम् | संस्कृतम् | अरबभाषायाम् |
|---|---|---|---|
| एला | हेल | कनकफल | करनफल |
| कर्पूर | कापू | मूषक | मश्क |
| चन्दन | सन्दल | जातिफल | जायफल |
| ताम्बूल | ताम्बोल | त्रिफला | इत्रीफल |
| नीलोत्पल | नीलोफेर | पिप्पली | फिलफिल |
| भिल्लातक | बलादर | बिभीतक | बलीलह् |
| हरीतकी | हलीलज | गोपदल | फोफल |

अरबदेशवासिनस्तु भारतीयवस्तूनि चीनप्रदेशे प्रेषितवन्त.।

विदेशेभ्यो भारते बहूनि वस्तून्यपि वैदेशिकव्यापारिभिरानीतानि। मिस्रप्रदेशात् हीरकाङ्गुलीयकानि सुरा च पारसीकदेशात् जपापुष्पजलं बसराप्रदेशात् खर्जूरमरबदेशादरवश्च भारते आनीय विक्रीतानि।[3]

व्यापारसाधनानि

व्यापारास्तु प्राचीमयुगे स्थलमार्गैर्जलमार्गैश्चाभवत्। स्थलमार्गेषु पण्यवहनं पशुभि कृतम्। जलमार्गे नौकायानमुपयोजितमासीत्।

सुदूरप्राचीनकालतो नगरेषु गमनागमनरीत्या प्रशस्तमार्गा निर्मिता इति नि सन्देहं प्रतिभाति। सिन्धुसभ्यतायां व्यापारिकसम्बन्धा देशेषु विदेशेषु चाभवन्। व्यापारयोग्या मार्गास्तदा बभूवु। तेषु मार्गेषु व्यापारिणामवस्थानायाश्रया निर्मिता। पण्यानां वहनाय गर्दभा बलीवर्दशकटिका उष्ट्राश्चोपयोजिता।[4] तथा नगरेषु विस्तृतराजमार्गा आसन्।

वैदिकयुगे 'अनस्' इति ख्याता बलीवर्दशकटा बभूवु। उष्ट्रा गर्दभाश्च भारहारा बभूवु। प्रपथ-महापथ-पथ-वर्त्मादीनि शकटाना पशूना च गमनागमनायाभिप्रेतानि।

महाभारतयुगे महासार्थो हस्त्यश्वरथोष्ट्रसंकुलोऽभवत्। सार्थवाहस्तु नेताऽभवत्।[5]

---

१ The Periplus p. 42, 72, 73, 179–180

२ अरब और भारत के सम्बन्ध।

३ अरब और भारत के सम्बन्ध पृ० ६७-६८।

४ Piggott, Prehistoric India p. 174–177।

५ वनपर्वणि ५१'१०६,६२९।

बौद्धसाहित्यानुसारं श्रावस्तीनगराद्राजगृहपर्यन्तं यावत् वाराणसीपुरम्, उज्जयिनीं यावत् विदेहाद् गन्धारं यावत् च स्थलमार्गः सार्थानां गमनागमनं बभूव।[1] सार्थानां बलीवर्दशकटानां पङ्क्तिः बृहती यावद् अभूत्। मरुस्थलेषु यात्रायै सार्था जलकाष्ठतैलादीनि पाथेयानि सङ्गृहीतवान्। रात्रावेव यात्राभवत्। स्थलनियामकाः तत्र मार्गनिर्देशका बभूवुः। दिशाज्ञानं तारादर्शनेनाभवत्। गहनानि स्थलपथमिश्राः व्यापारमार्गाणां पर्यन्तेऽनाय नियुक्ताः। ते विविधदेशेभ्य आगतपण्यानि पूर्वमेव जानन्ति स्म।[2] वनरक्षकाः सार्थेभ्यः शुल्कं गृहीत्वा तेषां वनमध्ये सुरक्षितं यानमकारयन्। वनरक्षकाणां सहाया पक्षगत यावत् पुरुषा बभूवुः। भारवाहकास्ताः पृष्ठे नीत्वा ग्रामाद् ग्रामं विचरन्तः पणं कुर्वन्ति स्म। तेषु कतिपया हीरकमौक्तिकादीनि पण्यानि विक्रीणते स्म।[3]

व्यापारार्थिभ्यो राजानो बहुविधानुग्रहान् प्राप्तवन्तः। ते पण्यानि करमुक्तानि कुर्वन्ति स्म सार्थेभ्यश्चावासाय सुप्रबन्धं अविदधति स्म।[4]

अर्थशास्त्रानुसारं व्यापारद्वारा दक्षिणापथेभ्यः स्वर्णशङ्खहीरकरत्नमुक्तादीनां प्राप्तिः सम्भवासीत्। तस्मिन् व्यापारे लाभस्य मात्राप्यधिकासीत्, किन्तु व्यापारमार्गो दुर्गमोऽभवत्। व्यापारमार्गा बहुविधा बभूवुः। तथा हि—चक्रपथः, पादपथः, खरोष्ट्रपथः, अजपथश्च। वारिस्थलपथयोर्वारिपथः श्रेयानिति निर्दिष्टम्।[5]

मौर्ययुगे पथानां दीर्घा बभूवुः। भारतस्य प्रायः सर्वे प्रदेशा राजमार्गैरनुस्यूता बभूवुः। प्रधानराजमार्गा अधोलिखिता आसन्—

| | | |
|---|---|---|
| पाटलिपुत्रात्[6] | वाराणसी | १७ योजनानि |
| वाराणसीतः | कौशाम्बी | १३ योजनानि |
| कौशाम्बीतः | भारहुतम् | १० योजनानि |
| भारहुतात् | विदिशा | २३ योजनानि |
| विदिशातः | उज्जयिनी | १५ योजनानि |
| उज्जयिनीतः | भरुकच्छम् | २५ योजनानि |
| उज्जयिनीतः | हैदराबादम् ( सिन्धप्रदेशे ) | ६३ योजनानि |

अस्मिन्युगे एको राजमार्गः पाटलिपुत्र-मथुरा सिन्धुप्रदेशस्य गान्धारबैक्ट्रियापर्यन्तं प्रसृतः। भारतीयसीमातो बहिः पश्चिमोत्तरप्रदेशेभ्यः चीनदेशे गमनाय पन्थानोऽभवन्।

1 चुल्लवग्गे ६४, कुटिदूतजातक २४३ गन्धारजातक च।
2 वण्णुपथजातक २ चुल्लसेट्ठिजातक ४।
3 सेरिवाणिजजातक ३।
4 पाराशयकाश्रमो परिच्छेद ३।
5 अर्थशास्त्रे वर्णनमिदमस्त्यत्र।
6. पाटलिपुत्रादेका राजमार्गं वैशाली-श्रावस्ती-नेपालपर्यन्तं प्रसृत।

पूर्वभारतप्रदेशेभ्यो हिन्दचीन तत्रत्योऽन्यप्रदेशं गन्तुं मार्गा बभूवु । परवर्तियुगे आन्ध्रप्रदेशस्य केन्द्रभागो वेङ्गीप्रान्त उत्तरकोसल कलिङ्ग-महाराष्ट्र-कर्णाटक-द्रविडप्रदेशैस्तत्कालीन राजमार्गं सुसम्बद्ध । गुप्तयुगस्य मार्गव्यवस्थाया वर्णनं कालिदासेन कृतम् । तथा हि रघुवंशे—

> वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव ।
> सार्था स्वैरं स्वकीयेषु चेरुर्वेश्मस्विवाद्रिषु ॥१७ ६४

भारितमानि वस्तूनि हस्तिभिर्दूरतर नीयन्ते स्म । मगधेभ्या मूर्तय कश्मीरान् हस्तिपृष्ठ उद्धृता इति कल्हणो निर्दिशति—

> गजस्कन्धेऽधिरोप्यैतन्मागधेभ्यो यदाहृतम् ।
> दत्त्वा सुगतबिम्ब तज्जनोऽस्यकनुगृह्यताम् ॥ ४ २५९

ते साहसिका महाजना प्रात स्मरणीया सन्ति ये प्रागैतिहासिकयुगेषु लघुनौकाभिरपि समुद्रस्योत्तालतरङ्गाणामुपरि द्वीपाद् द्वीप ययु । तेषा नदीषु गमनागमनयोर्जलयानानि सम्भावितव्यान्येव ।

सिन्धुसभ्यतायुगे हडप्पामोहेंजोदडोनगरवासिन पारस्परिकसम्बन्ध जलयानसचारेण दृढीकृतवन्त । ते नौकासचारणे निष्णाता आसन् ।[1] वैदिकार्याणा नाव शतारित्रा अपि बभूवु ।[2] नौव्यापारस्य परिचय ऋग्वेदेन प्राप्यते । तथा हि—

> गर्तयो नेमश्रिय वपीणस समुद्र न सचरणे सनिष्यव ॥ १ ५६ २
> उवासोषा उच्छाच्च नु देवी जीरारथानाम् ।
> ते अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्य ॥ १ ४८ ३
> वेदा यो वीना पदमन्तरिक्षेण पतताम् वेद नाव समुद्रिय ॥ १.२५ ७
> आ देवो ददे बुध्न्या ३ वसूनि वैश्वानर उदिता सूर्यस्य ।
> आ समुद्रादवरादा परस्मादाग्निर्ददे दिव आ पृथिव्या ॥ ७ ६ ७

बौद्धयुगस्य स्थलयात्राणा वर्णन त्रिपिटकसाहित्ये भूरि विद्यते । जलयात्रा षाण्मासिकी अपि बभूव । दिशाकाकानुपयुज्य तत्र दिशा ज्ञायन्ते स्म । द्वीपद्वीपान्तरेषु नाविकाना प्रगमन सुविदितम् । नदीष्वितरेऽपि नागरिकेभ्य पण्यानि नीतानि । नदीतटेषु पत्तने नौस्थान नियतमासीत् । पत्तनाना पर्यवेक्षणाय जलपथकर्मिका नियुक्ता आसन् । बृहत्तरा नावस्तै समयोजिता । कासाचिन्नावा दीर्घत्वमष्टशतहस्तायाममभूत् ।[3] एकस्यां

---

१ सिन्धुसभ्यतावासिना समुद्रयात्रया सुमेर प्रभृतिदेशै सम्बन्ध स्थापित इति मैकेमहोदयस्य मतम् ।

2 It is not easy to refuse to recognise here the existence of large vessels with many oars voyage Vedic Index मो । ३ समाठके ।

नावि सहस्रतक्षका यात्रा कर्तुं शक्नुवन्ति स्म ।[१]

खीष्टात् प्राक् प्रथमशताब्दे मिसरभारतयोः साक्षात्सम्बन्धो व्यापारद्वारा समपद्यत । खीष्टात् प्राक् २५ वर्षे १२० नावो मिसरदेशस्य रक्तसागरीयनौकाश्रयात् प्रतिष्ठन्ते स्म ।[२] कतिपयग्रीकव्यापारिणो नौभिर्दक्षिणभारतस्य समुद्रतटं पर्यटन्तो गंगासागरसङ्गमं यावदा-जग्मुः । हिप्पाल्स इति ख्यातेन नाविकेन 'मानसून'—वायुवेगस्य साह्यं प्राप्य समग्रारब-सागरः सरलमार्गेण पारितः । अभिनवोऽयं मार्ग आसीत् ।[३]

नावः सुरक्षायै कुशलधनुर्धरा नियुक्ताः । परवर्तियुगे शतघ्नीगोलादिभिराक्रमणकारिणां प्रत्याघातः कृतः । अस्मिन्युगे भारतस्य कावेरीपत्तने ग्रीसतः चीनं यावत् सर्वेषां देशानां नावः समागताः । भारतीयनाविका अपि तेषु सर्वेषु देशेषु गतवन्तः ।[४]

गुप्तयुगस्य नावां प्रतिकृतयोऽजन्तागुहाचित्रणे बोरोबुदुरमूर्तिषु च प्राप्यन्ते । विशालास्ता बभूवुरिति प्रत्यक्षमेव । अस्मिन्युगे गंगासागरसंगमात् आसिन्धुसंगमं प्रायशः विशालनौकाश्रया बभूवुः । चीनदेशगामिनीनां नावां विशालता प्रमाणितैव वर्तते, यतस्तासु सहस्रजना जलयानचारणाधिकारिणो बभूवुः । तासु खलु शतधनुर्धरा बभूवुः । लघुनावः दुर्घटनाकाले रक्षणार्थं सम्बद्धा असन् । खीष्टात् पश्चात् सप्तमशतकात् प्रभृति भारतीयसा-मुद्रिकव्यापारोऽरबदेशवासिनां हस्ते गतः । भारतीयपण्यानामापणाः पारसीकसमुद्रकच्छे 'उबलामैराफकैश' पत्तनानि, ईराकप्रदेशे बरसापत्तनं च बभूवुः । भारतीयवस्तूनि रक्तसा-गरं यावन्नौभिर्नीतानि ।[५]

नौभिर्नदीनामुपरि सेतुनिर्माणस्य प्रचलनं कल्हणेन वर्णितम्—

> वितस्तायां स भूपालो बृहत्सेतुमकारयत् ।
> ख्याता ततः प्रभृत्येव तादृङ् नौसेतुकल्पना ॥ ३ ३५४

एकादशशतके भोजराजेन रचिते युक्तिकल्पतरुग्रन्थे तदानीन्तननौनिर्माणविज्ञानस्य परिचयः प्राप्यते । तदनुसारं दीर्घा उन्नताश्च विविधा नावः । दीर्घाणाः दशभेदाः—

---

१ समुद्रवाणिज्ये नावके । रालिंसन महोदय इदमभिकृत्य लिखति—Evidently from early days the Indian sea men built ships larger than those usually employed even at a much later date in the mediterranean Inter course Between India and the Western World p 4

२ Straieo II C 118 ।

३ स्वाफ पेरिप्लसे ।

४ Dr W Vincent The Commerce and Navigation of the Ancient Book IV p 475 Cambridge History of India vol I P 214-213, मिलिन्दपञ्हो ।

५ अरब और भारत के सम्बन्ध पृ० १८–३९ ४२–४६, ४७ ७२ ।

दीर्घिका, तरणी, लोला, गत्वरा, गामिनी, तरी, जंघाला प्लाविनी, धारिणी वेगिनी च। उन्नतानां पञ्चभेदा -ऊर्ध्वा, अनूर्ध्वा, सुवर्णमुखी, गर्भिणी, मन्थरा च । सर्वाश्च ताः समुद्रतरणाय बभूवुः । नदीषु तरणाय क्षुद्रा भीमा मध्यमा च नावो बभूवुः । नावामलङ्करणं स्वर्णरजतताम्रमयमासीत् । महानौका १८४ × २४ × १८ घनहस्तायामासीत् ।m

## मुद्रा

पुरा प्रायः सदैव व्यापारस्य संवर्धनाय रत्नादीनि मुद्रारूपेण स्वीकृतानि । वैदिकयुगे स्वर्णमुद्रा निष्कृष्णलशतमानादयो बभूवुः ।[१] गावोऽपि मुद्रावत् प्रयुक्ताः । अन्येऽपि धातुखण्डा मुद्रा बभूवुः । निष्कादीनामलङ्कारवदुपयोगोऽपि बभूव। बौद्धसाहित्ये निष्क सुवर्ण-हिरण्य धरण कार्षापण रूपि कंस पादमाषक-काकणिकादीदय मुद्रा आसन् ।[२] आहतमुद्रा रूपीनि ख्याता ।[3] काकणिका स्वल्पतमा मुद्रासीत् । मुद्राणां धातुपरिमाणं मनुना निर्दिष्टम् ।[४] भारतस्य विविधप्रदेशेषु बहुविधा मुद्रा प्रवर्तिता ।[५]

प्राचीनभारते वैदेशिकमुद्राणां प्रचलनमपि बभूव । अधुनापि ग्रीसपारसीकानां शासकानां बहुधा मुद्रा प्राप्यन्ते । परवर्तियुगे कुशनराजानां सुसस्कृतमुद्रा प्रचलिता आसन् ।

गुप्तवंशीयानां राज्ञां बहुविधा मुद्रा बभूवुः । तासु मुद्रासु राज्ञामुपाधयः पराक्रमद्योतका वर्तन्ते । राज्ञां पराक्रमाणां द्योतनमभिरुचीनां च प्रदर्शनं तेषां प्रतिकृतिमुद्राभिः कृतम् । तथा हि—गरुडध्वज धनुर्धर-वीणावादकाश्वमेधपरायणरूपाणि दर्शितानि, उपाधयश्च तत्र वर्तन्ते—पराक्रम अप्रतिरथ, कृतान्तपरशु, सर्वराजोच्छेत्ता, व्याघ्रपराक्रम, अश्वमेध-पराक्रम, श्रीविक्रम, विक्रमादित्य, रूपकृती, सिंहविक्रम, नरेन्द्रचन्द्र नरेन्द्रसिंह, सिंहचन्द्र, अजितविक्रम, परमभागवत, विक्रमाङ्क । चन्द्रगुप्तस्य मुद्रा स्वर्णरजतताम्राणामेव प्राप्यन्ते । महाराजहर्षस्य मुद्रा पूर्ववत् निर्मिता ।

कतिपयमुद्रा व्यापारिभिः, तेषां संघैश्च प्रचारिता आसन् ।

---

M In the 13th century Marcopolo saw Indian ships carrying ten small boats slung on the sides with falls and tackle. The boats could be lowered into the water or hauled over the sides These vessels had 60 cabins below the main deck, many were four or five masts and had an equal number of sails.

१ इमा मुद्रा प्रायः परस्परं शतगुणा दशगुणा वा बभूवुः ।

२ अष्टाध्यायीग्रन्थे पाणिनिना कंसशतमानकार्षापणपादमाषनिष्कादीनां मुद्राणामुल्लेखः कृतः ।

३ रूप्यकं रूप्यं रूपका वा पर्यायः । आहतं रूपमस्यास्तीति रूप्यम् ।

४ मनु० । ८ । १३१ १३७ ।

५. Life in Ancient India p 120 ।

परिगणनमानोन्मानम्

परिगणनमानोन्मानस्य समारम्भ संस्कृते समारम्भादेव सम्भाव्यते। सिन्धुसभ्यता युगीनाना नागरिकाणामुन्मानेषु १, २, ८/३, ४, १६, ३२ ६४, १६०, २००, ३२०, ६४० इति गुणनविन्यास इव दृश्यते। सर्वेषा मानयोगो दृढ प्रतिभाति।

हस्त प्रमाणितो मापदण्डो गृहीत। १३ २ इचममो मापदण्डोऽवर्तत। हस्तायाम २० ६२ 'इच' इति सम्मित।

वैदिकयुगे तुलाप्रयोगेण पात्रप्रयोगेण च मान नियतम्। कृष्णल (गुजाबीज) प्रभृतमो मानभारोऽभवत्। माषस्तु कृष्णलसमोऽभवत्।[1] परवर्तियुगे विविधप्रकाराणा मानभाराणा प्रचलनमभवत्। प्रतिमाना लौहस्य प्रस्तरस्य वा निर्मिता। अर्थशास्त्रानुसार प्रतिमानविन्यासोऽत्र दीयते—

| | | |
|---|---|---|
| १० माषा (५ गुजाबीजानि) | = | सुवर्णमाष |
| १६ सुवर्णमाषा | = | १ सुवर्ण वा कर्ष |
| ४ कर्षा | = | १ पलम् |

अपराण्यपि प्रतिमानानि बभूवु।

तुलाया दण्डस्यायामो बहुविध आसीत्। तस्या द्वया पर्यन्तभागयो पात्रमवलम्बितम्। तुलाया वैविध्य तोलनीयद्रव्यानुकूल कृतमासीत्।

अर्थशास्त्रानुसार मापदण्डा अधोलिखितविधा बभूवु —

| | | |
|---|---|---|
| ८ यवा | = | १ अगुलम् |
| ८ अगुलानि | = | १ धनुर्ग्रह |
| २ धनुर्ग्रहौ | = | १ धनुर्मुष्टि |
| ३ धनुर्ग्रहा | = | १ वितस्ति छाया पुरुष वा |
| २ वितस्ती | = | १ अरत्नि प्राजापत्यहस्त वा |
| ४ अरत्नय | = | १ दण्ड |

गुप्तयुगस्य मानोन्मानादीना परिचयोऽमरकोषात प्राप्यते। तथा हि

यौतव द्रुवय पाय्यमिति मानार्थक त्रयम्।
*मान तुलाङ्गुलिप्रस्थै गुजा पचाद्यमाषक ॥*
ते षोडशाक्ष कर्षोऽस्त्री पल कर्षचतुष्टयम्।
सुवर्णबिस्तौ हेम्नोऽक्षे कुरुबिस्तस्तु तत्पले ॥
तुला स्त्रिया पलशत भार स्याद्विंशतिस्तुला।
आचितो दशभारा स्यु शाकटो भार आचित ॥

---

1 वाजसनेयिसंहितायां ३० १७ तैत्तिरीयसंहितायां ३ ३ ८ १।

अस्त्रियामाढकद्रोणौ खारी॰ वाहो निकुञ्चकः ।
कुडवः प्रस्थ इत्याद्याः परिमाणार्थका पृथक् ॥

## राजकीयसंरक्षणम्

व्यापारस्य प्रगतिः सर्वप्रथमं राज्ञो भर इति निश्चप्रचम् । तद्यथाथर्ववेदे आर्याणां सम्राजः इन्द्रस्य स्तुतिः —

इन्द्रमहं वणिजं चोदयामि स न ऐतु पुर एता नो अस्तु ।
नुदन्नरातिं परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम् ॥ ३।१५।१

महाभारतानुसारं राजा सर्वोच्चव्यापाराधिकृतः प्रतिभाति । तथा हि शान्तिपर्वणि—

अजस्रमुपयोक्तव्यं फलं गोमिथुनं भारत । प्रभावयन्ति राष्ट्रं च व्यवहारं कृषिं तथा ॥
सर्वत्र क्षेमचरणं सुलभं नाम गोमिथु । न ह्यतः सदृशं किंचित् वरमस्ति युधिष्ठिर ॥

अर्थशास्त्रानुसारं व्यापारस्याभ्युदयाय सर्वा व्यवस्था राज्ञा कृता, तेन पण्यपत्तनं प्रतिष्ठापितं व्यापारमार्गाणां नवीकरणं विधापितं च । राजा मानोन्मानादीनां सत्यव्यवहारार्थं सचेष्टोऽभवत । राज्ञा नियुक्तः पौतवाध्यक्षः तुलाप्रतिमानमापदण्डानां निर्माणमकारयत् ।

राज्ञा नियुक्तः पण्याध्यक्षः प्रजानां लाभाय विक्रेयाणामुचितं मूल्यं निर्धारितवान् । वैदेशिकव्यापारिणां लाभार्थमपि पौतवाध्यक्षः सचिन्तो बभूव । शुल्काध्यक्षो राज्ञा नियुक्तो वैदेशिकव्यापारिणामितिवृत्तं संगृहीतवान् । अन्तपालाः स्वसीम्नि विनष्टानां पण्यानामन्वेषणमकारयन् । नौकाध्यक्षो जलमार्गे प्रवर्तितस्य व्यापारस्य सुरक्षार्थं प्रयत्नमकरोत् । स नौकाश्रये शान्तिस्थापनाय कृतप्रयत्नो बभूव । विवीताध्यक्षो निर्जनप्रदेशानां भयकारणानि—चौरहिंसकपशुशत्रुबाधादीनि दूरीकृतवान्, जलरहितस्थानेषु सेतुबन्धकूपव्यवस्थामकरोच्च । स व्यापारिणः सार्थं रक्षितवान् । समाहर्त्रा नियुक्ता गुप्तचरा व्यापारिणां चौर्यादीनां सूचनां ददति स्म ।

आपणस्य विक्रयप्रक्रियायां नियमाः प्रणीता आसन् । अनार्जवस्य कपटस्य चावकाशः स्वल्पतमोऽपि नासीत । अशुद्धवस्तूनां कपटाचरणाः विक्रेतारो दण्डनीया बभूवुः । संस्थाध्यक्षः पण्यपत्तने मानोन्मानमापादीनां परिशुद्धये प्रायतत । यदि वैदेशिकवस्तूनामायातं स्वदेशीयवस्तूनां प्रचारे बाधकं बभूव, तर्हि राजपण्यानां देशान्तराहरणं निषेधितवान् ।[1]

अन्नानां राशीकरणाय कतिपयव्यापारिणो नियुक्ता आसन् । अन्नमूल्यं प्रजालाभं विचिन्त्य निर्णीतम् । खीष्टस्य १०७७ वर्षं पश्चाद् भारतीयनरेशेन कुलोत्तुङ्गेन व्यापा-

---

१. स्वराष्ट्रोपघातीनि वा ॰ पण्यानि निवर्तयिष्यामि ।

रिकाभ्युदयार्थं चीनदेशे प्रतिनिधय प्रेषिता । काकातीयवंशी राजा गणपतिदेव सामुद्रिकचौराणा समूलविनाश कृत्वा चीनजंजीबारादिदेशै सह व्यापार समवर्धयत् ।

व्यापारिणा प्रजापीडन प्राय सदैव लोकविदितमभूत् । सोमदेवेन सुष्ठु पर्यालोचित यत्—

> मानेन किंचित् मूल्येन किंचित् तुलयाऽपि किंचित् कलयापि किंचित् ।
> किंचिच्च किंचिच्च प्रहीतुकामा प्रत्यक्षचौरा वणिजो नराणाम् ॥

## धार्मिकनियोजनम्

व्यापारे सिद्धिर्दैवायत्ता हि भवतीति लोकधारणा । देवाना साहाय्येन व्यापारे लाभ ग्रहीतुकामा व्यापारिणस्तेषामुपासना कुर्वन्ति स्म । अवश्यमेव तेषा देवाना चरित्रैर्व्यापारिण प्रभाविता बभूवु । व्यापारिणा चरित्रप्रतिष्ठायै वसिष्ठेन नियम कृत—ब्रह्महाऽपि न तावान् पापभाक् यावानल्पमूल्यस्य वस्तुनोऽधिकमूल्यग्राही वणिग् भवति । व्यापारकार्यं वैश्यानामेवाधिकार साधारणतो बभूव । सर्वासु धार्मिकसंस्कृतिषु व्यापारिणामार्जव प्रशसार्हमेव । तथापि तेषा कौटिल्य विगर्हणीय प्रायश्चित्तार्ह वा निन्दितमेव । पण्यसिद्धिरितिधार्मिकविधानेन पण्यस्य कस्यचिदंशस्य हवनेन व्यापारे लाभस्य सम्भावनाभवत् पण्याजीवानाम् ।m

## व्यापारिणा साहसम्

व्यापारिणा समक्ष बहुविधानि सकटानि बभूवु । स्थलमार्गेषु हिंस्रजन्तुभ्यो भयमवर्तत । वनमार्गेषु कदाचित् रात्रौ वनगजानामाक्रमणेन समग्रसार्थं पण्यानि च तस्य विनष्टानि ।[1] मरुप्रान्तरेषु भ्रान्ताना सार्थाना दुर्गतिरभवत् । कदाचित् जलविरहिताना तेषा कूपखननेनापि जलप्राप्तिर्यदि नाभवत् तर्हि पिपासितास्ते मृता ।[2]

समुद्रगामिना वणिजा सकटान्यधिकतराणि बभूवु । मार्गे यदि तेषा नाव क्वचिदवरुद्धास्तर्हि तत्कारण कोऽप्यशोभनीयो जनो भवेदिति शलाकाद्वारा निर्णीय त समुद्रे प्राक्षिपन् । अपरं च जलजन्तूना प्रत्याक्रमण स्थलीरसोदनमय जलान्तर्हितपर्वतै. प्रत्याघात प्रभञ्जनश्च विनाशाय बभूवु । दुर्वृत्ताना राज्ञा तेषा कर्मचारिणा च भय नाल्पमासीत् ।[3]

स्थलमार्गेषु सर्वापहारिणा प्रवचकाना च भयमासीत् । वनेषु कदाचित् दावाग्निना परिवृत सार्थं दग्ध । वशावन यदि समक्षमापतित तर्हि प्रत्यावर्तनमावश्यकमभवत् ।

---

M हिरण्यकेशी गृ० सू० १ १५ १ ।
१ वनपर्वणि महाभारते ६२ १२२ ।
२ वण्णुपथजातके ।
३. दिव्यावदाने धर्मरुच्यवदानाख्यायाम् ।

तत्र कदाचित् वन्याना म्लेच्छादीनामाक्रमणभयमासीत् । विषवृक्षाणा सम्पर्केण वणिजा पीडनमभवत ।[1]

## वणिजा वर्चस्विता

व्यापारिणामदम्योत्साह कर्मण्यता बुद्धिकौशल साहस प्राणभये जातेऽपि निर्भीकत्व विघ्ने जातेऽपि कार्याभिनिवेशश्च महान्तो गुणा आसन ।

इन्द्रो वणिगिति वैदिकधारणा । वणिगिन्द्रगुणै समन्वितो भवत्विति तत्र मान्यता प्रतीयत । इन्द्रवत्पराक्रमिणो व्यापारे योग्या सन्तीति प्रमाणमासीत् । व्यापारिणो धार्मिकाभिरुचि प्रशस्ता ।

व्यापारिणस्तु सर्वासु स्थितिषु कालानुवर्तिनो यथाकालव्यवहारिणो वा बभूवु । अपरिचितदेशेषु ते केवल बुद्धिकौशलेन स्वकार्येषु सफलता लभन्ते स्म । व्यापारिणा योग्यता प्रतिपादयन मनुलिखति—

> सारासार च भाण्डाना देशाना च गुणागुणान् ।
> लाभालाभ च पण्याना पशूना परिवर्धनम् ॥
> भृत्याना च भृति विद्यात् भाषाश्च विविधा नृणाम ।
> द्रव्याणा स्थानयोगाश्च क्रयविक्रयमेव च ॥ ९ ३३१-३२

साहसरसिकत्वेन जीवन पारावारे सशयितप्राणा अपि महोत्साहशालिन इमे वणिजो राष्ट्रियसमृद्धिसवर्धका सर्वथा प्रशस्या ।

## प्रकीर्णव्यवसायाः

उपभोग्यानामाधिक्येन प्रतिभाति यत् पुरा कृषिपशुपालनादीनि विहायासख्यविधा व्यवसायास्तत्रासन् यानाश्रित्य नागरिकाणा जीवनावश्यकता सम्पूरिता बभूवु । तद्यथा भोजन-पेय-वस्त्र-प्रसाधन द्रव्य गृहास्त्र शस्त्रादीनामुपकल्पन सगीतनृत्यादीना मनोरजनो-पायाना सम्पादन रत्न धातु-काष्ठ पुष्प फलौषधीना प्रकृतस्वरूपे सग्रहण च बहुसख्यकाना जनानामुद्योगा बभूवु । अपर च ब्राह्मणाना याजन क्षत्रियाणा प्रजापालन युद्ध वा शूद्राणा शिल्प दासकर्म वा प्रमुखा प्रवृत्तयो बभूवु ।

सिन्धुसभ्यतायुगे वस्त्ररचनोद्योग उपाजीव्यत । तत्रत्यबालकाना मनोरजनार्थं बहुविधा क्रीडनका निर्मिता । शकटरचना तस्मिन्युगे विशिष्टव्यवसाय एवासीत् । नगरभवनाना निर्माणेऽसख्या इष्टकानिर्मातार स्थपतय तक्षकादयो नियुक्ता । गृहकार्यार्थं भाजनाना

1 Life in Ancient India p 116

रथनासनानां च निर्माणे बहुजना व्यापृता आसन्। अश्वगम्यकारिणः सख्या बहुलाः प्रतिभान्ति। अवश्यमेव सङ्ग्रामसम्बद्धाः अस्त्रशस्त्रप्रासनादीनां रचयितारस्तत्र बभूवुः। चित्रकाराः मूर्तिकाराश्च सर्वत्रालङ्कारप्रसाधकाश्चासन्।

सिन्धुसभ्यतायुगे आरभ्य विविधमार्गेषु खनिजपदार्था भूयः संगृहीताः। दक्षिणभारते, सौराष्ट्रे, राजस्थाने च खनिजव्यवसायः प्राधान्येनासीत्।[1] हिमालयाञ्चले वनवृक्षच्छेदकानां काष्ठिकानां व्यवसायः प्राचीनः। आभीरकाः वनेषु बहुदिवसानि पर्यटन्ति नागरिकाणामुपयोगाय वस्तूनि निहृत्यानयन्ति।

वैदिकयुगे प्रधानव्यवसायाः—काष्ठकर्म वस्त्रनिर्माणं धातुकर्म मृत्तिकाभाजनरचना चर्मकर्म च बभूवुः। बहवः वनवासिनोऽर्यसभ्यादच मृगयायां मत्स्यग्रहणे वा नियुक्ता बभूवुः। अपरे च धातुभिरस्त्रशस्त्रादीनामलङ्काराणां च निर्माणे दक्षाः आसन्। स्वर्णस्य धातून् ध्माता पर्यशोधयत्। वाजसनेयिसंहितायां व्यावसायिकानां सूची वर्तते—रथकार, तक्षा, कुलाल, कर्मार, मणिकार, इषुकार, धनुष्कार, ज्याकार, रज्जुसर्ज, मृगयु, श्वनी, भिषक्, सुराकार, दार्वाहार, चर्मम्नाता, चर्मम्न, धीवर, शौष्कल, कैवर्त, गणक इत्यादयः पुरुषा एव। स्त्रीषु विदलकारी, कण्टकीकारी, पेशस्कारी, रजयित्री, वासःपल्पूली, अञ्जनीकारी, कोशकारी च बभूवुः।[1] मनोरञ्जनमार्गे व्यापृतास्तु नृत्तगीताभिनय-तूण-वीणावादन-तूणववादन-शङ्खवादनादिषु विशारदा बभूवुः।[2] मौक्तिकसंग्रहणेऽपि कतिपयजनास्तत्परा आसन्।[3] याजकानां पुरोहितादीनां व्यवसायस्तु सुप्रतिष्ठितो बभूव।

पश्चाद्विधियुगेऽपि व्यवसायानां प्रवृत्तिः प्रायः पूर्ववदासीत्।[4] अभिनवव्यवसायानां प्रचलनं सम्भूतिसाहाय्येन सदैवाभूत्। सर्वेषु युगेषु श्रेष्ठनागरिका राजकर्मणि नियुक्ता बभूवुः। भारतीयशिल्पकलादीनां प्रख्यातिर्देशदेशान्तरं प्रसृता। तासामादर्शा विदेशेषु संगृहीताः। चित्रमूर्तिवास्तुशिल्पानां पुनरुत्थानं ख्रीष्टाब्दस्य प्रारम्भिकयुगाद्विशेषरूपेणाभवत्। अमरकोशे तदानीन्तनशिल्पिकादीनां सूची वर्तते—

---

१ तथा सुवर्णसंग्रहः सौन्दरनन्दे—सुवर्णहेतोरपि पांसुधावकाः विहाय पांसून् बृहतो यथादितः। जहाति सूक्ष्माण्यपि तद्विशुद्धये विशोध्य हेमावयवान्नियच्छति॥ १५.६६

१ वा० सं० ३०।

२ वा० सं० ३० ६,१०,२०।

३ ऋग्वेद १.३५.४।

४ उदाहरणार्थं महाभारते सभापर्वणि ५।२८-४०, ३१ १६, ४२ ५,६,६, १२, १५, ३६, ६२.५ रामायणे अयोध्याकाण्डे ८३।१०-११, अर्थशास्त्रे रत्नपरीक्षाप्रकरणमाकरकर्मान्तप्रवर्तनप्रकरणं सुवर्णाध्यक्षप्रकरणं सूत्राध्यक्षप्रकरणं कोष्ठागाराध्यक्षप्रकरणं सुराध्यक्षप्रकरणं कुप्याध्यक्षप्रकरणं गणिकाध्यक्षप्रकरणम्।

कुलक स्यात् कुलश्रेष्ठी मालाकारस्तु मालिक ।
कुम्भकार कुलाल स्यात् पलगण्डस्तु लेपक ॥
तन्तुवाय कुविन्द स्यात् तुन्नवायस्तु सौचिक ।
रङ्गाजीवश्चित्रकार शस्त्रमार्जोऽसिधावक ॥
पादकृच्चर्मकार स्यात् व्योकारो लोहकारक ।
नाडिंधम स्वर्णकार कलादो रुक्मकारक ॥
स्याच्छाङ्खिक काम्बविक शौल्विकस्ताम्रकुट्टक ।
तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट् ॥
ग्रामाधीनो ग्रामतक्ष कौटतक्षोऽनधीनक ।
क्षुरि-मुण्डि दिवाकीर्ति - नापितान्तावसायिन ॥
निर्णेजक स्याद्रजक शौण्डिको मण्डहारक ।
स्यान्माया शाम्बरी मायाकारस्तु प्रातिहारक ॥
शैलालिनस्तु शैलूषा जायाजीवा कृशाश्विन ।
भरता इत्यपि नटा चारणास्तु कुशीलवा ॥
मार्दङ्गिका मौरजिका पाणिवादास्तु पाणिघा ।
वेणुध्मा स्युर्वैणविका वीणावादास्तु वैणिका ॥
जीवान्तक शाकुनिक द्वौ वागुरिकजालिकौ ।
वैतंसिक कौटिकश्च मांसिकश्च समं त्रयम् ॥

एतै श्लोकैर्वैविध्यं प्रतीयते व्यवसायानाम् । भारतीयचतुष्षष्टिकलासु २४ कर्माश्रया सन्ति । ताः व्यवसायरूपेणाजीविकार्थं स्वीकृता आसन् ।

व्यावसायिकसंघा

प्रथमं तावत् सिन्धुसभ्यतायां संघात्मकव्यवसाया उपाचीयन्तेति सम्भाव्यते । तत्र-त्याधिस्थितौ निर्मितवस्तुषु समरूपता गणसंस्थया व्यवस्थापितेति विदुषां मतम् ।[1]

वैदिकसाहित्ये प्रारम्भतः गणानामुदयो दृश्यते । यथा हि—मरुदादीनां देवानां गण सुप्रसिद्ध ।[2] गणपतिस्तत्रासीत् । वैदिकजातिसंस्था परवर्तियुगस्य गणसंस्थासमाना एवासीत् ।

---

१ Within the area already described the uniform products of the Harappa civilisation can be traced with the monotonous regularity of a highly organised community under some strong system of centralised government, controlling production and distribution Piggott Prehistoric India p 138

२ स नैव व्यभवत् स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति बृहदारण्यके १ ४ १२ ।

प्रत्येकस्या जात्या विशिष्टव्यवसायोऽभवत् । त व्यवसायमपेक्ष्य ये जना सम्बद्धास्तेषां पृथक् जातिरभवत् । जातीना परिषदो बभूवु ,याभिर्जातीनामभ्युदयाय विधानानि विरचितानि।[१]

बौद्धसाहित्यानुसार द्विविधो सघो बभूवतु —सार्थाना शिल्पिनां च । सघाना स्थापना ज्येष्ठकानामध्यक्षत्वेऽभूत् । शिल्पिसघा शिल्पाचार्याणामध्यक्षत्वे व्यवस्थिता आसन् । तस्मिन्युगे चौराणमपि सघा बभूवु । एकस्मिन् दस्युसंघे ५०० लुण्टाका बभूवु ।

संघस्य नामानि रामायणमहाभारतादिषु निगम , गण श्रेणी वा प्राप्यन्ते । कतिपय-सघा आत्मरक्षार्थं सेनासमन्विता बभूवु ।[२] रामायणानुसार कैवर्तयुवकानामपि सघ आसीत् । तेषा नायको राजा इति ख्यातो गुहोऽभवत् । तस्य सेना महती बभूव ।

अर्थशास्त्रानुसार शिल्पिना सघा महत्त्वपूर्णा बभूवु । सघव्यवस्थायै राजकीयविधानानि बभूवु । तस्मिन्युगे श्रेणीबलानामतिशय माहात्म्यमासीत् । श्रेणीबलानि राजकीययुद्धेष्वपि क्वचिन्नियोजितानि बभूवु । श्रेणीबल जनपदबलमासीत् । ईदृशाना सैनिकाना प्राथमिकप्रवृत्ति स्वराष्ट्रस्य रक्षण बभूव ।

महाभाष्यानुसारं नियोजकास्तु अर्या इति ख्याता आसन् । भृत्यास्तु बहुविधा आसन् । तथा हि प्राय कर्मकरो गृहकार्येषु सहायक आसीत् । प्रसाधक स्वामिनोऽलङ्करणमकरोत् । भाक्तिकस्तु भोजनमात्रेण परितुष्टोऽभवत् । उदहारस्तु जलभरणे, छत्रधारश्छत्रधारणे, भस्तकर पाचने, आगवीनश्चारणे नियुक्ता आसन् । वाशभारिक भशयष्टचा भारवहनमकरोत् । प्रेष्यस्तु इतस्तत सचरन् कार्यं समपादयत् ।[३]

खीष्टाब्दस्य प्रारम्भिकयुगत श्रेणीना प्रतिष्ठा संवर्धिता । श्रेणीविवादमधिकृत्य श्रेणीविधानानुरूप न्यायकरणमिति मनुना प्रतिपादितम् । सघहितार्थमायोजन सम्पादयितव्यमिति प्रजासु राजकीयनियोग प्रसिद्ध [३]। सघेषु समृद्धिशालिना प्रजाना धन सवर्धनाय निक्षिप्तम् । धार्मिकसस्थाना सचालनार्थं धन सघेषु निक्षिप्त सुविन्यस्तमिति सम्मतम् ।[४]

सघाना शासनविधि सर्वेषा सदस्याना सम्मत्या प्रावर्तत । संघस्य प्रधान सर्वै सदस्यैर्निर्वाचित तस्य साहाय्यार्थं द्वौ त्रय पंच वा सहाया कार्यचिन्तका इति बभूवु । तेषां समिति संघस्य शासनव्यवस्थामकरोत् ।[५] सघे स्वेच्छाकारिताया अवसरो नासीत् ।

---

१ गौतमधर्मसूत्रे ११ २० २१ ।

२ आश्रमवासिकपर्वणि ७ अध्यायत ।

M महाभाष्ये १ १०३, ४ ४ ६८, ६ १ ६०, १ २ ७२, ५ २ १४, ५ १ ५० ।

३ मनुस्मृतौ ८ ४१, २१९ ।

4 Epigraphia Indica
Vol VIII P 82 86

५ बृहस्पतौ १७ ६, १०, १७ ।

नाटकपात्राण्येव प्रतिभान्ति ।[1] पाणिनिना नटसूत्राणां कतिपयरूपकाणां चोल्लेखः कृतः । परवर्तियुगेऽपि सदैव नाट्यप्रवृत्तिः समवर्धत ।

अभिनयाय विशाला नाट्यमण्डपा रचिता । तद्यथा ज्येष्ठमण्डपोऽष्टोत्तरशतहस्तायामो बभूव । नाट्यमण्डपस्य भित्तिषु चित्रकर्मप्रसाधनं कृतम्, मणयोऽपि खचिताः, यन्त्रजाल-गवाक्षादीनां व्यवस्था कृता च ।[2]

पूर्वरङ्गविधानेनाभिनयस्य माङ्गलिकसमारम्भः कृतः । प्रथमं तावद्वाद्ययोजनं गायनं च, पश्चात् नान्दीपाठः नृत्यं च समारब्धानि । अन्ततः सूत्रधारपारिपार्श्वकादीनां प्रवेशः नाट्यविषयस्य प्रकाशनं च कृते ।[3]

नाट्याभिनयाश्चतुर्विधाः—आङ्गिकः, वाचिकः, आहार्यः, सात्त्विकश्च । आङ्गिकोऽपि त्रिविधः—शारीरः मुखजः चेष्टाकृतः । तत्र शारीराभिनयेऽङ्गानामनेकानेकगतिस्थितिविधानानामभिव्यक्तयो कृताः । तद्यथा नेत्रस्य षट्त्रिंशद्विधानानि परिगणितानि । तदनुकूलं दर्शनस्याष्टौ भेदा उपकल्पिताः । नेत्रताराभिरष्टविधानि पुटकर्माणि, भ्रूभिः सप्तविधानि भ्रूकर्माणि च व्याख्यातानि । अनया दिशा नाट्यविनोदस्य सूक्ष्मकलातत्त्वाभिनिवेशः प्रदर्श्यते ।[4] तथा हि—अभिनयदृष्ट्या शिरोहस्तोरःपार्श्वकटीपादाः प्रधानाङ्गानि । नेत्रभ्रूनासाधरकपोलचिबुकान्युपाङ्गानि । तेषां सर्वेषामभिनयकर्माणि सूक्ष्मरूपेण व्याख्यातानि ।

सर्वे लौकिकव्यवहारा रङ्गे दर्शनीया भवन्ति । तत्तेषां सम्पादनविधिः शास्त्रीयविधाने नियतः । कस्मिन्नभिनये केषामङ्गानां कीदृशी गतिर्भवेदिति चारीकरण-मण्डलाङ्गहारा-दिभिरभ्यसनीयम् । लौकिकव्यवहारप्रदर्शनसामर्थ्यमङ्गहारादिषु व्यायामेन जायते ।

वागभिनयो नाट्यपुरुषस्य शरीरं मतम् । रङ्गे वचनविन्यासो व्याकरणछन्दःशास्त्रानुसारं शुद्धो भवेत् । काव्यबन्धस्य समीचीनस्वरूपं भरतेन निर्दिष्टम्—

मृदुललितपदाढ्यं गूढशब्दार्थहीनम्
जनपदसुखबोध्यं युक्तिमन्नृत्ययोज्यम् ।
बहुकृतरसमार्गं सन्धिसन्धानयुक्तम्
भवति जगति योग्यं नाटकं प्रेक्षकाणाम् ॥ ना० शा० १७ १२४

पात्राणां भाषा तेषां मातृभाषैव भवेत् । अत प्राकृतभाषाणामपि नाट्ये प्रयोगो निर्धारितः । रसानुसारमपि पाठ्यं समीहितम् । यथा हास्यशृङ्गाराभ्यां मध्यमपञ्चमस्वरौ । नाट्याभिनयवाक्यमाला सर्वजनमनोहारित्वं नाट्यशास्त्रे निर्धारितम् ।

१ वाजसनेयिसंहितायाम् ३०.६, तैत्तिरीयब्राह्मणे ३.४.२.१ ।
२ नाट्यशास्त्रे द्वितीयाध्याये ।
३ नाट्यशास्त्रे पञ्चमाध्याये २४ १९७-२०६ ।
४ नाट्यशास्त्रेऽष्टमाध्याये ।

आहार्येणाभिनेतृणा वेश-भूषा, मानवेतरप्राणिना प्रतिभा , नदीपर्वतवनादीना चित्राणि च समाविष्टानि । एभिराहार्यैरभिनेतृणा पदानि स्थितीना भावविघटनाना च स्वरूपाणि व्यक्तानि । अभिनेतृणा वेशै रगे दमश्रुरचनादिभिरच तेषामभिनीतपात्राणा देशप्रातिव्य-वयआदीना परिचय प्राप्यते स्म । सजीवाहार्यैरपदद्विपदचतुष्पदादीना पशूना रगे प्रदर्श-नमभवत् ।

नाटये सत्त्वाभिनयस्य प्राधान्यमासीत् । सत्त्वाभिनये रसभावादीना निष्पत्तये मनस समाधिना रोमाचाश्रु-स्वरभेद स्तम्भ-स्वेद-वेपथु वैवर्ण्यप्रलय-भावादय प्रदर्शिता ।[1] अभि-नेतृणां वरणाय नियम आसीत्—

सुशीला ज्ञानवन्तश्च तथा च प्रियदर्शना ।
कुमारराजभूमीषु प्रयोज्या भरतोत्तमा ॥ ना० शा० ३५ ११

कतिपयपुरुषा स्त्रीभूमिकास्वभिनयन्ति स्म । ते भ्रुकुसा इति विख्याता आसन् । पुरुषभूमिकासु स्त्रीणामभिनेय क्वचिदासीत् । नाटयशास्त्रे चित्राभिनयस्य वैशिष्टय प्रती-यते । चित्राभिनयस्तु शरीरस्य विविधाङ्गाना विभिन्नगतिभी रात्रि-प्रदोप दिवस-जन्तु-जलाशय-दिशा ग्रह नक्षत्र-चन्द्र-ज्योत्स्ना-वायु-रस-गन्ध- सूर्य-सिहर्तु-पर्वत-वनवृक्षगुहादीना-मभिव्यक्ति क्रियते । तथा हि—

कृत्वा स्वस्तिकसस्थानौ पद्मकोशावधोमुखौ ।
सिहर्क्ष-वानर-व्याघ्र-श्वापदानां निरूपणम् ॥ ना० शा० २५ १८
शिखिन. सारसा हसा स्थूला येऽन्ये च पक्षिण ।
पक्षाङ्गैश्चारगतिभिरभिनेया प्रयोक्तृभि ॥ ना० शा० २५ ६७

दिवसस्य विविधभागा विभिन्नविषयाणा रूपकाणा प्रयोगाय सम्प्रधारिता । तथा हि नाटयशास्त्रे—

यच्छ्रोत्ररमणीय स्याद्धर्मोत्थानकृत च यत् ।
पूर्वाह्णे तत्प्रयोक्तव्य शुद्ध वा विकृत च यत ॥
सत्त्वोत्थानगुणैर्युक्त वाद्यभूयिष्ठमेव च ।
पुष्कल सत्त्वसयुक्तमपराह्णे प्रयोजयेत् ॥
कैशिकीवृत्तिसयुक्त श्रृगाररससश्रयम ।
नृत्तवादित्रगीताढ्य प्रदोषे नाटयमिष्यते ॥
यत्तु माहात्म्यसयुक्त करुणप्रायमेव च ।
प्रभातकाले तत्कार्यं नाटय निद्राविनाशनम् ॥ २८ ८०—८३

---

१ अङ्गाद्यभिनयस्यैव यो विशेष क्वचित्क्वचित् ।
अनुक्त उच्यते चित्र स चित्राभिनय स्मृत ॥ २५ १

अहर्निशं प्राय सदैव नाट्यं प्रवर्तनीयमासीत् पुरा। लोकसंग्रहार्थमभिनेयार्था निर्धारिता एव। तद्यथा नाट्यशास्त्रे—

न कार्यं शयनं रङ्गे नाट्यधर्मं विजानता।
केनचिद्वचनार्थेन छेदमत्र प्रयोजयेत् ॥ २८.२८४
यदा स्वपेदर्थवशादेकाकी सहितोऽपि वा।
चुम्बनालिङ्गनादीनि रगमध्ये न कारयेत् ॥ २८.२८५
भोजनं सलिलक्रीडां तथा लज्जाकरं तु यत्।
एवंविधं भवेद्यद्यत्तद्रङ्गे न कारयेत् ॥ २८.२८७
पितृपुत्रस्नुषाश्वश्रूदृश्यं यस्मात्तु नाटकम्।
तस्मादेतानि सर्वाणि वर्जनीयानि यत्नत ॥ २८.२८८

खीष्टाब्दस्य प्रथमशतकात् प्रभृति लिखितरूपकाणि लभ्यन्ते। अश्वघोष-भास-कालिदास-हर्ष-भवभूति-भट्टनारायण-शूद्रक-राजशेखरादय प्राचीनयुगे महानाटककारा बभूवुः। एषां महाकवीनां रूपकाणि राजाश्रयेण प्रवर्तितानि राज्ञां नाट्यशालासु प्रायशोऽभिनीतानि च। कालिदासेन नाटकस्य गौरवं प्रतिष्ठापयता प्रोक्तं मालविकाग्निमित्रे—

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषम्
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधकम् ॥ १

नाट्य माङ्गल्य, सुपुण्य, पवित्र शुभं पापविनाशनञ्च भवतीति शास्त्रसम्मतमेव।[१] तदनुसारं देवानां प्रीत्यर्थं मन्दिर-प्राङ्गणे नाट्याभिनयः समायोजिता।

उपर्युक्तनाट्यप्रणाली प्रायशो राजाश्रितनटानामभिनेयान्येव पर्यालोचयति। सुदूर-प्राचीनकालत आधुनिकरामलीलावत् अविशेषं स्वाभाविकतामादधानं नाट्य प्रवर्तते। न तत्र नाट्यशास्त्रानुसारि नेपथ्य प्रेक्षागृह च वर्तते। अभिनयस्यावश्यकतानुसारं नाट्य-भूमि परिवर्तनक्षमा भवति। रंगोऽपि कार्यानुसार स्वल्पो विशालतरो वा क्रियते। ईदृशस्य स्वाभाविकनाट्यस्याभिनिवेश कालिदासस्य नाटकेऽपि प्रतिभाति। तथा हि— अभिज्ञानशाकुन्तले द्वितीयाङ्के मृगयादृश्य वर्तते। तत्र

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥

१. नाट्यशास्त्रे ३६ ७३ ७९।

यस्याभिनयाय प्राकृतिकस्थली आवश्यिकी प्रतिभाति। अन्यथा कथं सूत कथयेत्—

आयुष्मन् उद्घातिनी भूमिरिति मया रश्मिसंयमनाद्रथस्य मन्दीकृतो वेगः। तेन मृग एष विप्रकृष्टान्तरः संवृत्तः। सम्प्रति समदेशवर्तिनस्ते न दुरासदो भविष्यति।

उत्तररामचरितस्य गर्भनाटकमपि तादृशीं प्राकृतिकस्थलीमपेक्षते।

## नृत्यं नृत्तं च

नाटयवदभिनयप्रधानं नृत्यं भवति, किन्तु नाट्यं वाक्याभिनयो रसाश्रयो भवति, नृत्यं च पदार्थाभिनयो भावाश्रयो भवति। नाट्ये सात्त्विकाभिनयस्य नृत्ये चाङ्गिकाभिनयस्य प्राधान्यं भवति।[1] नृत्यस्य स्पष्टोदाहरणं मालविकाग्निमित्रे वर्तते। तत्र मालविका नर्तकी वर्तते। सा प्रथममुपगानं कृत्वा चतुष्पदवस्तु गायति।

दुल्लहो पिओ मे तस्सिं भव हिअअ णिरासं
अम्हो अपङ्गओ मे परिप्फुरइ किं वामओ।
एसो सो चिरदिट्ठो कहं उण उवणइदव्वो
णाह म पराहीणं तुइ परिगणअ सतिण्हं॥ मा० २.४

अस्याभिनयः कृतः। तदधिकृत्य प्रोक्तम्—

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव॥ मा० २.८

रत्नावल्यां नृत्येन द्विपदीगीतस्याभिनयो वर्णितः।[2]

नृत्तमभिनयविरहितमङ्गविक्षेपमात्रमेव भवति। तदधिकृत्य भरतेन स्पष्टीकृतम्—

अत्रोच्यते न खल्वर्थं कश्चिन्नृत्तमपेक्षते।
किन्तु शोभां जनयतीत्यतो नृत्तं प्रवर्तितम्॥
प्रायेण सर्वलोकस्य नृत्तमिष्टं स्वभावतः।
मङ्गल्यमिति कृत्वा च नृत्तमेतत्प्रकीर्तितम्॥ ४.२६९-२७०

---

१. कालिदासानुसारं नृत्यमङ्गसत्त्ववचनाश्रयमपि भवति। रघुवंशे १९.३६ कामसूत्रानुसारं तु—कलापाऽयङ्गहारश्च विभावो भाव एव च। अनुभावा रसाश्चेति संक्षेपान्नृत्यसंग्रहः। कामसूत्रे १.३.१६ टीका।

२. रत्ना० या १.१३ पद्यानन्तरम्।

पद्मपुराणानुसारं तु 'अङ्गहाराश्रयं नृत्तम्' इति । नृत्यमभिनयसंश्रयं भवति । नृत्तं व्यायामिकं भवतीति प्रत्यक्षमेव ।

नृत्तस्य नृत्यस्य च द्वौ भेदौ—ताण्डवं लास्यं च सुकुमारोद्धतभेदेन भवतः । पार्वत्याः सुकुमारं लास्यं शिवस्योद्धतस्ताण्डवश्च सुप्रसिद्धे ।[1]

नृत्यकलायाः समारम्भः सुदूरप्राचीनकाले समभवत् । प्रस्तरयुगीनेषु कतिपयचित्रेषु प्राचीनतमनृत्यस्य स्वरूपमधुनाऽपि दृश्यते । नृत्तस्य प्राचीनतमस्पष्टस्वरूपं सिन्धुसभ्यताया नर्तकीनां मूर्तिभिर्लभ्यते । नर्तनकाले तासां नर्तकीनां शरीरं विवसनमभवत् । नर्तकानां मूर्तयोऽपि प्राप्यन्ते । नर्तनद्वारा हावभावादीनामभिव्यक्तिरक्रियत । तालल्याश्रितं नृत्तमपि प्रचलितमासीत् । नृत्येन सह वाद्यस्य संगतिः कृता । सामूहिकनृत्यस्य प्रचलनं तदासीत् ।

शोभनवस्त्रावृता रूपस्वरूपधारिण्यो नर्तक्यो वैदिकयुगे मनोरमा बभूवुः । नृत्येन सहाघाटिवाद्यस्य संगतिः कृता । यज्ञावसरे मनोरञ्जनाय वंशनर्तिना वंशावलम्बनेन नर्तनमायोजितम् । पुरुषाणां नृत्यं प्रचलितमासीत् ।

महाभारतयुगे राजकुलेषु नृत्यस्य प्रचलनमासीत् । स्वयमर्जुनो नृत्यमशिक्षत । राजकुमारीणां नृत्याचार्या शिक्षका बभूवुः । राजकुलस्य परिचारिका नृत्यविशारदा बभूवुः । युधिष्ठिरस्य राजसूययज्ञावसरे नर्तकसमुदायो दर्शकानां मनोरञ्जनमकरोत् ।[2] नृत्यगीतादिविशारदा गन्धर्वाः प्रतिदिनं यज्ञकर्मणि समाप्ते स्वकलानां प्रदर्शनमकुर्वन् ।

रामायणानुसारमयोध्याकिष्किन्धालङ्कादिषु नगरीषु नागरिकाणां राज्ञां च मनोरञ्जनाय प्रतिदिनं नृत्यायोजनं कृतम् । राज्ञां प्रातःकाले जागरणाय नर्तका नियुक्ताः । गणिका नृत्यसंगीतादिषु निपुणा बभूवुः । जैन-बौद्धसाहित्यानुसारं समाजे गणिकानां प्रतिष्ठा समधिकासीत् । राजधानीषु काचित् प्रमुखगणिका बभूव । राजधान्या ललामभूतैव सा गणिका समादृता ।

न केवलं मनुष्याणामपितु हस्तिनामपि नृत्यशिक्षणं समभवत् । ग्रीकलेखक एरियनो लिखति—I have myself actually seen an elephant playing on cymbals, while other elephants were dancing to his strains: a cymbal had been attached to each foreleg of the performer and a

---

१. रेचकैरङ्गहारैश्च नृत्यन्तं वीक्ष्य शङ्करम् ।
सुकुमारप्रयोगेण नृत्यन्तीं चैव पार्वतीम् ॥ ४.२५९ ।
नृत्तप्रयोगः सृष्टो यः स ताण्डव इति स्मृतः ॥ ४.२६६ ।

२. सभापर्वणि ३०.४८ ।

third to what is called his trunk, and while he beat in proper time those on his two legs The dancing elephants all the while kept dancing in a circle, and as they raised and curved their forelegs in turn they too moved in proper time, following [redacted] the musician led [1] मयूरनृत्य तु प्राकृतिक सविधानमेव।

नृत्यस्यान्येऽपि बहवो भेदा सन्ति। तथाहि—अर्धाङ्गनृत्ये शरीरस्यैकार्धस्य सर्वाण्यङ्गानि नर्तनशीलानि बभूवु। अपरार्धस्याङ्गानि निश्चलानि बभूवु।[2] देवाना परितोषार्थं नृत्यायोजनस्य कथा दशकुमारचरिते लभ्यते। तथा हि कन्दुकोत्सवे कन्दुक-क्रीडितेन देवी विन्ध्यवासिनीमाराधयितु कन्दुकावती भगवतीमभिवन्द्य कन्दुकममन्दरागरूषिताक्षमनङ्गमिवालम्बत, लीलाशिथिलं च भूमौ मुक्तवती, मन्दोत्थितं च किंचित्कुञ्चिताङ्गुष्ठेन प्रसृतकोमलाङ्गुलिना पाणिपल्लवेन समाहृत्य हस्तपृष्ठेन चोत्नीय, चटुलदृष्टिलाञ्छितं स्तबकमिव भ्रमरमालानुविद्धमवपतन्तमाकाश एवाग्रहीत्, अमुञ्चच्च मध्यविलम्बितलये द्रुतलये मृदु-मृदु च प्रहरन्ती तत्क्षणं चूर्णपदमदर्शयत्, प्रशान्त च त निर्दयप्रहारैरुदपातयत्, विपर्ययेण प्राशमयत्, पक्षमुन्नागतं च वामदक्षिणाभ्या कराभ्या पर्यायेणाभिघ्नन्ती शकुन्तमिवोदस्थापयत्, दूरोत्थितं च प्रपतन्तमाहृत्य गीतमार्गमारचयत्, प्रतिदिश च गमयित्वा प्रत्यागमयत्।

परवर्तियुगे राज्ञा सामन्ताना च मनोरञ्जनाय प्रायशोऽप्सरसा नर्तक्यो नियुक्ता।[3] नर्तकीना नृत्यद्वारा मृगयापराणा पुलिन्दानामनुकरणं वेशभूषारागादीना सम्करणैरभवत्। अपरं च योगिनीनृत्यद्वारा रूप-प्रदर्शनं कतिपयाभिर्नर्तकीभि कृतम्।[4] नर्तकीना नेतृत्वे सामन्तवधूनामुत्सव-यात्रा कृता।[5] राजकन्यका राजभवनस्य मण्डपे नृत्तस्य सार्वजनिक प्रदर्शनं कुर्वन्ति स्म। राजकुमारीणा विवाहयोग्यता तासा नृत्तपरीक्षयाऽपि निर्णीता।[6]

पौराणिकयुगे देवार्चनाय नृत्यस्य श्रेष्ठसाधनरूपेण ग्रहणमभूत्। तद्यथा हरचरितचिन्तामणौ—

नृत्येन यस्तोषयति शिवलिंगमर्चतत.।
लभते स शरीरान्ते सुरविद्याधराङ्गना॥

---

1 M' Crindle Ancient India P 221

२ मृच्छकटिके ४८९।

३. कश्मीराणा राजा हर्ष स्वयमेव नर्तकीरशिक्षयत् राज० ७ ११.४०।
केचन राजानो नर्तकीना समाहारेणैव परिवृता आसन्। राज० ७ ६६।

४ कर्पूरमंजर्या चतुर्थेऽङ्के।

५ कथासरित्सागरे ४ ३ ८२ /५।

६ कथासरित्सागरे १२ ४ ७३–७८,९ ५ ४

संगीतकं ये कुर्वन्ति भक्त्या विष्णोस्तु सन्निधौ ।
ते गन्धर्वपुरे राज्यं प्राप्नुवन्ति परं पदम् ॥ १८१—८२

भक्तानां नृत्यं प्रसिद्धम् । कृष्णस्य कालियदमननृत्यं महारासनृत्यं च लोकप्रियम् । महारासे कृष्णो नायको गोपिकाश्च नायिका बभूवुः । कृष्णस्य गायनमनुसृत्य गोपिका अनृत्यन् । भागवते बहुविधं बालनृत्यं वर्णितम् ।[1]

भारतीयशिल्पकलायां नृत्यस्य प्रदर्शनं रुचिकरो विषय आसीत् । प्राचीनयुगस्य शिलाफलकेषु मूर्तिपट्टेषु बहुविधानि नृत्यानि दर्शितानि ।

## संगीतम्

संगीतस्य प्राकृतिकस्वरूपमनादिकालादेव प्रवर्तितम् ।[2] ब्रह्माण्डे प्रायः सर्वत्र पशुपक्षिणां संगीतं श्रूयते । प्रकृतेः संगीतं समाहृत्य तस्मात्प्रेरणां वा प्राप्य मानवोऽपि विशेष-संगीतरसिकोऽभूत् । तथा हि सप्त स्वराः पशुपक्षिध्वनिमनुकुर्वन्ति—

स्थानाङ्गानुसारं रागाणां विवृतिरधोलिखितं तालिकया स्पष्टीक्रियते—

| रागनाम | उच्चारणस्थानम् | पक्षिगानम् | वाद्यस्वर |
|---|---|---|---|
| षड्ज | जिह्वाग्रम् | मयूर | मृदङ्ग |
| ऋषभ | वक्षःस्थलम् | कुक्कुट | गोमुखी |
| गान्धार | कण्ठ | हंस | शङ्ख |
| मध्यम | जिह्वामध्यम् | अवि | झल्लरी |
| पञ्चम | नासिका | कोकिल | दर्दरिका |
| धैवत | ओष्ठ | सारस | पटह |
| निषाद | शिर | क्रौञ्च | महाभरी |

रागा अपि प्राकृतिकसंविधाने सम्बद्धाः सन्ति । भैरवरागः प्रातःकालिकीं छटां मानसपटले स्फोटयति, पशूनां कलरवस्य, पुष्पाणां गन्धस्य माधुर्यस्य, मन्दवायोश्च समारम्भं स्मारयति च । हिन्दोलरागस्तु वासन्तिकमधुरिमाणं कुसुमराशेः सौरभं च श्रोतॄणां मनसि निदधाति । दीपके ग्रीष्मसन्तापो भवति । श्रीरागेणास्तप्रायदिवसस्याभिव्यक्तिः क्रियते । मेघरागेण वर्षर्तोर्मेघागमनस्य च प्रवृत्तयः सन्दर्श्यन्ते ।

---

१ भागवते १० १८ ।

२ तद् दृश्यते राजकुलेऽपि प्राकृतिकसंगीतं प्रति रुचिः । यथा हि—
रामभवनमयोध्यायां—

शुकबर्हिणसंघुष्टं क्रौञ्चहंसरुतायुतम् ।
सारसैश्च मयूरैश्च निनदद्भिर्विराजितम् ॥ अयोध्याकाण्ड १० [illegible],११,१५

वैदिकयुगे गायत्रीप्रगाथादीनां छन्दसां गायनप्रवृत्तिरासीत्।[1] उद्गाता यज्ञावसरे सामवेदस्य गायनमकरोत्। सामवेदस्यार्चिकमागम्य श्लोका विद्यार्थिनां गायनशिक्षणाय बभूवुः। आर्चिकस्य पंचाशीत्युत्तरपंचशतर्चं सप्तत्युत्तरैकादशशतसाममाध्यमेन गेया। गायनकाले स्वराभिव्यक्तिर्हस्ताङ्गुलीनां गत्या कृता। कतिपयसाम्नां गानं केवलमरण्ये कृतम्। ततो ग्रामगेयगानमरण्यगेयगानं च प्रावर्तताम्। वैदिकसंहितासु प्रायः देवाभिप्रायाणां स्तुतीनां संकलनं वर्तते। तेषु क्वचित् कृषकाणां गीतानि संगृहीतानि। यथा—ऋग्वेदे—

शुनं नः फाला वि कृषन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः।
शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम्॥ ४.५७.८

यज्ञविधानेन संगीतविद्याया विशेषोन्नतिरभूत्। अश्वमेधसत्रे वर्षपर्यन्तं प्रतिदिनं यजमानस्य चरितगाथा गीता। ब्राह्मणगायका राज्ञ औदार्यमधिकृत्य क्षत्रियगायकास्तु तस्य पराक्रममधिकृत्य गायन्ति स्म। तस्मिन्युगे गाथानाराशंसीसाहित्यस्य वैपुल्यमभवत्। राज्ञां चरितगाथागायनस्य प्रचलनं महाभारतयुगेऽपि प्रावर्तत।

महाभारतानुसारं युद्धकाले सैनिकानां मनोरंजनार्थं मंगलगीतानां गायनमायोजितम्। पाणिस्वनिकमागध-मधुपर्किकवैतालिक-सूतादयः राज्ञां मनोरञ्जनार्थं स्तुतिगानमकुर्वन्। तेषां गीतेषु राजवंशविरुदावली व्याख्याता।[2] शयनात्प्राक् राजकुमाराणां मनोरञ्जनार्थं गायिकाः संगीतं प्रास्तुवन्[3]।

महाभारतयुगे गन्धर्वकिन्नरादीनामार्येतराणां संगीते परमप्रावीण्यमासीत्। अर्जुनस्य गुरुश्चित्रसेनो गन्धर्व आसीत्। स एवार्जुनो विराटस्य राज्ञः संगीतशालायां प्रधानाचार्यः सन् राजकुमारीमुत्तरां संगीतमशिक्षयत्।

रामायणीयसंगीतस्य वैशिष्ट्यं लवकुशौ प्रति रामवचने प्रतीयते—

इमास्तन्त्रीः सुमधुराः स्थानं वा पूर्वदर्शितम्।
मूर्च्छयित्वा सुमधुरं गायेथां विगतज्वरौ॥
गायेतां मधुरं गेयं तन्त्रीलयसमन्वितम्।

लङ्कायामपि राजभवनेषु हनुमान्—

शुश्राव मधुरं गीतं त्रिस्थानस्वरभूषितम्। सुन्दर १ १०

1. गायत्रीप्रगाथयोर्व्युत्पत्त 'गै' धातो वर्तते। अतः तयोः गायनं सिद्धम्। वाजिकियुगे गाथकः, गायन पुरुषगायकस्य, गायिका गायनी स्त्रीगायिकानां संज्ञा द्रष्टव्या। ३.४.१४६.१४७।
2. द्रोणपर्वणि ५८.२-४।
3. सभापर्वणि ५८.३६।

न केवलं मानवानां प्रलोभनाय सङ्गीतमभवत्, अपितु मृगादीनामपि मृगयार्थं प्रलोभनं कृतं सङ्गीतेन। तत्र हस्तिकान्तावीणा सुप्रसिद्धासीत्।

सङ्गीतशास्त्रस्य वैज्ञानिकं विवेचनं सर्वप्रथमं भरतस्य नाट्यशास्त्रे लभ्यते।[1] तस्य किञ्चिद्विकसितं स्वरूपं वायुपुराणे दृश्यते। नागरिकाणां सुखार्थं गीतप्रवृत्तिः कालिदासेनोपलक्षिता—

प्रयातु तव निदाघः कामिनीभिः समेतो
निशि सुललितगीते हर्म्यपृष्ठे सुखेन॥ ऋतुसंहारे १ २८

कामसूत्रानुसारं तु सङ्गीतं चतुर्विधं सम्मतम्। तद्यथा—

स्वरगं पदगं चैव तथा लयगमेव च।
चेतोऽवधानगं चैव गेयं ज्ञेयं चतुर्विधम्॥ १.३.१६ टीका

भारतीयसङ्गीतकला विदेशेषु प्रावर्तत। यथाहि—

In music the Hindus have exerted an immense influence on the west, perhaps through Greece, and also on Asia, where the Indian quarter tones and subtle harmonies can be found every where, as they may be found in Spain and other countries, whither the Arabs carried them [2]

वैदेशिकसङ्गीतज्ञा अपि भारतेऽर्पिता बभूवुः। मरुकच्छप्रदेशस्य राज्ञे सङ्गीतप्रवीणा यवनरमण्य उपहारार्थं प्रेषिताः।[3]

क्षेमेन्द्रानुसारं तु गायनासक्तिः परं दोषावहास्ति। गायकास्तु सर्वस्वं हरन्ति नागरकाणाम्।[4]

## वाद्यम्

नाट्यस्य नृत्यस्य सङ्गीतस्य च सङ्गतिः वाद्येन भवति। वाद्यं तु सङ्गीतस्य मौलिकं ध्वनिं संवदति। नृत्यापेक्षितताला वाद्येनापि व्यक्तीक्रियते। वाद्यस्य समारम्भः संस्कृतेरादिकालतो बभूवेति सुनिश्चितम्।

---

१. नाट्यशास्त्रे २८ अध्याये।

2. A Pageant of India p 126

3. Intercourse Between India and the Western World p 117

४ कलाविलासे ७, १२, २४।

सिन्धुसभ्यतायुगे ढोल वीणा-कास्यताल्कोटिकाना वाद्याना प्रचलन बभूव । वैदिक-युगे नृत्यसगताद्याषाटि वाद्यते स्म । दुन्दुभि युद्धवाद्यमासीत् । वीणा वैदिकयुगस्य श्रेष्ठवाद्यमासीत् । वाणाया गततन्तूना प्रवर्तनमक्रियत ।[1] वीणा स्वरूपदृष्ट्या बहुविधासीत् । तस्या विविधानि नामानि प्रचलितान्यभवन् । गवामयनस्य पष्ठे दिवसे महाव्रतोत्सवे यजमानस्य भार्या अनुवीण गायन्ति स्म । इवासापूरणेन शखवेणुनाडीतूण-वाद्यो वादिता ।

महाभारतयुगे भेरी-मृदङ्ग-पणवानकझर्झरकक्रच-दुन्दुभि-पुष्कर-पटहादयो युद्धोप-योगिनो ढोलस्य भेदा बभूवु ।[2] भेरीतूर्याद्यानां निनाद श्रुत्वा सेना सहसात्रै सुहृजिभता बभूवु । युद्धकाले गोविषाणकगोमुखयो विविधसन्देशप्रसारायोपयोगोऽभूत् । विजये प्राप्ते बहुमासान् भेरीनिनादात्मकोत्सवोऽक्रियत । प्रात काले राज्ञा आगरणाय मृदङ्गझर्झरभेरी-पणवानकगोमुखाडम्बरशखदुन्दुभीना वाद्य प्रास्तूयत ।[3]

रामायणानुसार राजकुलस्य स्त्रियो वीणाभ्यास कुर्वन्ति स्म । तासामन्यानि वाद्यानि पटहमड्डुकवशविपञ्चीमृदङ्गपणवडिण्डिमाडम्बरादयो बभूवु । बौद्धसाहित्या-नुसारमन्यानि वाद्यानि—पणिस्सर—सम्मताल—कुम्भथूण—मुतिङ्ग मुरजादयो बभूवु । इवासापूरणवाद्यानि शखपणव-वेणु देण्डिमा—खरमुख—गोधा-परिवादन्तिका-कुटुम्ब तिण्डि-मादीनि बभूवु ।

भरतानुसार बहुष्ववसरेषु वाद्ययोजन सम्पादितम् । तथा हि

नास्ति किंचिदनायोज्यमातोद्य दशरूपके ।
रसभावप्रयोग तु ज्ञात्वा योज्य विधानत ॥
उत्सवे चैव याने च नृपाणा मगलेषु च ।
शुभकल्याणयोगे च विवाहकरणे तथा ॥
उत्पन्ने सग्रामे शुद्धसकुले ।
ईदृशेषु च कार्येषु सर्वातोद्यानि वादयेत् ॥

कतिपयवाद्यानां स्वोवप्रियत्व देवाना तदनुकूलप्रवृत्तिभि समापन्नमिति प्रतिभाति । तथा हि—शिवस्य डमरु कृष्णस्य वशी नारदस्य सरस्वत्याश्च वीणा सर्वत्र समादृता बभूवु । राज्ञामपि वाद्यप्रियत्व प्रसिद्धम् । समुद्रगुप्तस्तु स्वय वीणावादकोऽभवत् । वाद्याना समा-रम्भा देवाना परितोषाय सम्पन्न । बालकानां वाद्यप्रियता तु शाश्वतरूपिणी दृश्यते । भागवतानुसार वृक्षाणा पर्णैरपि तेषा वाद्यानि निर्मितानि ।

---

१ ऋग्वेदे १० ३२ ४ ।
२ गीताधाम् १ १३, भीष्मपर्वणि ९५ ४१ ।
३ द्रोणपर्वणि ५८ ४–६ ।

वीणाया माहात्म्यं भासेन वर्णितम्। तद्यथा—

वीणा नाम समुद्रोत्थितं रत्नम्—
उत्कण्ठितस्य हृदयानुगता सखीव
सङ्कीर्णदोषरहिता विषयेषु गोष्ठी।
क्रीडारसेषु मदनव्यसनेषु कान्ता
स्त्रीणां तु कान्तरतिविघ्नकरी सपत्नी॥ चा० ३.१

वाद्यानि मूलतः चतुर्विधानि सदैव बभूवुः। तथा हि—तत वाद्यं तन्त्रीसमायुक्तं भवति। आनद्धे चर्मणाच्छादनं वर्तते। सुषिरवाद्ये छिद्राणि भवन्ति। घनवाद्यं तु घनत्व-विशिष्टं घण्टादिकमेव।[1] अन्यच्चोदकाघात इति वाद्यमासीत्।

एतानि गीतवाद्यनृत्यालेख्यानि परानुरागजननानि आत्मविनोदार्थानि च। संगीतं तु गीतवाद्यनृत्यानां समष्टिरेव।

## कथा

मनोरञ्जनार्थं कस्यापि वस्तुनः कौतुकपूर्णविधिना वर्णनं कथायाः शाश्वतस्वरूपं ज्ञायते। कथास्त्रिविधाः—संघर्षात्मिका, उपकारात्मिका तथा यज्ञात्मिका। देवासुरसंग्रामकथाः संघर्षात्मिकाः सन्ति। देवानामुपकारशीलत्वमुपकारात्मिकासु कथासु संगृहीतम्। यज्ञविधानानां व्याख्यापरा कथा यज्ञात्मिका सन्ति। तासां त्रिविधानां कथानां संग्रहो यत्र तत्र ब्राह्मणसाहित्ये वर्तते।

परवर्तियुगे कथामाहात्म्यस्य पुराणेतिहासनाम्ना लोकप्रियः संग्रहोऽभवत्।[2] महाभारतं पुराणानि च ईदृशानां कथानां सागरा एव। पौराणिककथासु देवानां तेषामवताराणामृषीणां महापुरुषाणां च चरितगाथाः, तेषां पूजायाः लाभाश्च प्रासंगिकतीर्थस्थानादिवृत्तान्तेन सह निबद्धाः। अपरं च भारते प्रायः सदैव पशु-पक्षिसम्बद्धाः कथा बभूवुः।

पशुपक्षिभिः सम्बद्धानां कथानां प्रथमो महासंग्रहो बौद्धानां जातकान्येवोपलभ्यन्ते। पश्चात् पञ्चतन्त्रहितोपदेशयोः कथा विकसिता। ख्रीष्टाब्दस्यारम्भिकयुगे गुणाढ्येन पैशाचीभाषायां बड्डकहाओ ( बृहत्कथा ) लिखिता। तस्याः परवर्तिरूपं कथासरित्सागरे निबद्धम्।

---

१. ततं तन्त्रीसमायुक्तमानद्धं चर्मनद्धकम्।
सुषिरं वंशसम्भूतं घनं कांस्यसमुद्भवम्॥ पञ्चपु० २४ ७०

२. एतस्मिन् समूहे श्लोकानां ... वा सर्वेषां सम्पूर्णता, समाश्रितानां काव्यनिकायानां वा विषयाणां कथारूपमाकारश्च वर्तते। सुमंगलविलासिन्या १ ८९ तथा दीघनिकाये १.१ एषां गणना कृता।

गाथागायनेन राज्ञां मनोरञ्जनमभूत्। रामायणानुसारं रामस्य राजसभायां लवकुशयो रामायणगायनं सार्वजनिकमनोविनोदाय बभूव। परवर्तियुगे राजभिर्नियुक्ता राजकवयो राज्ञां प्रशस्तिमतिशयोक्तिपूर्णकाव्यमुखेन कुर्वन्ति स्म, राजसभासु तां श्रावयित्वा विनोदानुतुल्यं पारितोषिकं लब्धवन्तश्च। दिग्विजयैषिणां कवीनामागमने सति कविसम्मेलनमायोजितम्।

धारायां महाराजभोजस्य राजसभा लोकविश्रुतैव। कश्मीराणां राज्ञो हर्षस्य राजसभायां वर्णनं कल्हणेन राजतरङ्गिण्यां कृतम्। तद्यथा—

वितानैः सपयोदेव साग्निवप्रेव दीपकैः ।
स्वमदण्डैः सशम्पेव सधूमेवासिमण्डलैः ॥
साप्सरा इव कान्ताभिः सनक्षत्रेव मन्त्रिभिः ।
सर्षिसद्येव विबुधैः सगन्धर्वेव गायनैः ॥
नित्यसंकेतवसतिर्यौवनस्य मदस्य च ।
एकं विहरणारण्यं कामस्य च भयस्य च ॥
सर्वास्थानस्थितस्तस्य राज्ञः शक्राधिकश्रियः ॥

कस्य वाचस्पतेर्वाचा वक्तुं कार्त्स्न्येन शक्यते । ७ ९४६-९४९
विद्वद्गोष्ठीगीतनृत्तप्रस्तावेन क्षपा ययुः
क्षपान्ते शुश्रुवे तत्र पर्णचर्वणजः परम् ।
कान्ताधम्मिल्लशेफालीत्रुटिजन्मा च मर्मरः ॥ ७ ९४४-९४५

राजसभासु द्यूताष्टापदपरिवादिनीवाद्य चित्रकरण काव्यालाप - परिहास-बिन्दुमतीरचना-प्रहेलिकाविचार-शरीराङ्गचिन्तन सङ्गीतादीनि सामन्तानां विनोदसाधनानि बभूवुः।[1] राजकुलविनोदाय वानरकुब्जनपुंसकबधिरवामनमूकादयो नियुक्ताः। मेषकुक्कुटकुररकपिञ्जललावकवर्तिकादीनां युद्धं तत्राभवत्। पक्षिणां पारस्परिकः सलापोऽजायत। सिंहहरिणमयूरसारसादयस्तत्र प्रदर्शनाय विनोदाय च पालिताः। राज्ञे विविधपशुपक्षिणामुपहारः सर्वत्र समागतः। अपरं च राजसभाविनोदार्थं मल्लयुद्धमल्लनाट्यकलाप्रदर्शनं च बभूवतुः। ईदृशो विनोदो रङ्गभूमौ व्यवस्थापितः। राजसभासु विदूषकाणां स्थानं सुविदितमेव।

महानगरेषु काव्यशास्त्रपरीक्षार्थं ब्रह्मसभाभवत्। तत्र परीक्षोत्तीर्णानां ब्रह्मरथयानं पट्टबन्धश्चाभवताम्। कालिदासामरभारविहरिश्चन्द्रादीनामुज्जयिन्यां ब्रह्मसभायां परीक्षाभवत्।

---

१. कादम्बरी पृ० ८८।

रामायणानुसार लङ्काया रमणीयवनेषु बहवो रम्याक्रीडा निर्मिता ।[1] जनपदेषु कुमारीणां सन्ध्याकालिकमनोरञ्जनायोद्यानानि नियतानि । अयोध्या-वासिनस्तु दिनकाले वने विहृत्य सन्ध्यायां सौमनस्येन गृहमागता. । समुद्र-तीरेषु पुष्पितवृक्षाणां मध्ये प्रेयस्या सह विहरणस्य प्रचलनमासीत् ।[2] पाणिन्यनुसार भारतस्य पूर्वप्रदेशेषु उद्दालकपुष्पभञ्जिकावीरणपुष्पप्रचायिका-शालभञ्जिकादयो वनविहारक्रीडा प्रचलिताः ।

वनविहारवत् पर्वतविहारा अपि महाभारतानुसारमायोजिताः । कृष्णस्यार्जुनेन सह पवनविहारो रैवतके सक्रीडं सेवित । विहार-स्थले तदा शैलभृङ्ग-वननिर्झर-देवतायतन-वनद्रुम-पुष्पितद्रुम-सानु-सरोनदी-द्वीप-वैडूर्य-सिकता - सागरतट- तापसायतनादीनि बभूव[3] ।

खृष्टीय परचात् सप्तमशतके वन-विहारस्य शृङ्गारव्यापारोऽतिशयोद्दामोऽभवत् । तत्र युवयुवतीनां पुष्पावचय, पल्लवचयन नायिकानां हावभावाश्च सविशेषं बभूवुः । तत्र पल्लवेषु मसाभिः प्रेमपत्रं लिखितम् । पुष्पप्रहार सर्वेषां मनोरञ्जनमासीत् ।[4]

साधारणजनानां कृते तु वनविहारकाले वनप्रदत्तं भोजन वनप्रदत्तपात्रेषु बभूव । तद्यथा भागवते—

केचित् पुष्पैर्दलैः केचित् पल्लवैरङ्कुरैः फलैः ।
शिग्भिस्त्वग्भिर्दृषद्भिश्च बुभुजुः कृतभाजनाः ॥ १०.१३.९ ।

## जलविहारः

मानवेभ्यो जलक्रीडा स्वाभाविकी प्रतिभाति । वैदिकसाहित्ये अप्सरसां क्रीडाया उल्लेखः पुरूरवस कथाप्रसङ्गे प्राप्यते । वैदिकयुगे जलोर्मिषु नौकामध्ये आन्दोलने प्रेङ्खानुभूता ।

परवर्तियुगे राजकीयपुष्करिणीषु जलविहारस्य वर्णनं प्राप्यते । प्रथम वन विहारं कृत्वा मध्याह्नकाले जलविहारेणानन्दातिरेको विश्रान्तिश्च प्राप्तो । विहारकालेऽन्त पुररमणीनां राज्ञा च सहक्रीडा बभूवु । साधारणजनानां जलविहारो नदीषु नावारोहणेन प्लवनेन वाभवत् ।

---

१ सुन्दरकाण्डे ७.१० ।
२ सुन्दरकाण्डे १०.३६ ।
३. आदिपर्वणि २१० ८–१२, २४१ २०—२६ १७१ ८ ।
४. शिशुपालवधे सप्तमसर्गेत ।

महाभारतानुसारं समृद्धिशालिना जलविहारायोदकक्रीडनकनामकं भवनं जले मध्ये च निर्मितम्। गृहेऽस्मिन् भोज्यपानानि निहितानि। अभिनवराजदम्पतीनां वनविहारजलविहारयोः प्रचलनमासीत्। हरिवंशानुसारं तु समुद्रमह इति ख्यातायां जलक्रीडायां द्वारकायाः समीपे पिण्डारकतीर्थे प्रतिवर्षं नागरका राजादिभिः सह विविक्तनौकासु क्रीडामण्डलीं कृत्वा भोजन पान नृत्य-गीतादिषु प्रमोदेषु रमन्ते स्म। गणिका वेश्याश्च तत्र प्रमोदार्थं समाहूता ।[1]

राज्ञा जलविहारात् प्रागेव नदीजलेभ्यो हिंस्रजन्तवो विनाशिताः। नौकामारुह्य प्रथमं राजान्तःपुररमणीनां विहारमपश्यत्। पश्चात् स स्वयमेव ताभिः सह जलक्रीडामकरोत्।[2]

कामसूत्रानुसारं तु जलक्रीडायामुदकाघातोऽक्रियत। अस्मिन् प्रयोगे हस्तयन्त्रमुक्तैरुदकैस्ताडनं बभूव। अपरञ्च जलक्रीडायां नायको दूरतोऽप्सु निमग्नो नायिकायाः समीपमागम्यैनां स्पृष्ट्वा तत्रैवोन्मज्जेत्।[3]

राजभवनदीर्घिकासु जलक्रीडार्थं मोहनगृहा रचिताः।

राज्ञां जलविहारो नागरिकैः सहापि बभूव। सार्वजनिकोऽयं जलविहारः कुमारपालचरिते हेमचन्द्रेण वर्णितः।

जलविहारे विशिष्टरुचिरेव प्राचीनकाले जलाशयानामतिशयरमणीयोपकल्पनादिभ्यः कारणमभूत्। तत्रोपवनवृक्षलतापशुपक्षिणां शोभा समाहृता। तीर्थानां रचना जलविहारार्थमभूत्।

## मृगया

पुरा मृगयाया विशेषावश्यकता जनपदनिवेशनानां हिंस्रपशूनां विनाशार्थमासीत्। वनानां वनपशूनां च बाहुल्यमासीत्। वन्यपशून् हत्वा वनमार्गा भयरहिताः कृताः। तेषां पशूनां मांस-चर्म-शृङ्गास्थि-पुच्छ-खुरादीनां च विक्रयेण धनमपि लब्धम्। तत्र बहवो व्याधशाकुनिका एव मृगयवो बभूवुः, किन्तु मनोरञ्जनार्थं मृगयाकारिणां संख्या नाल्पासीत्। राजाधिपतिना मृगया सदैव समादृता बभूव।

प्रस्तरयुगस्य वनवासिनां गुहासु वन्यचित्रेष्वपि मृगयादृश्यानि विद्यन्ते। तेषु *चित्रकाराणां कला मृगपशूनामुत्साहस्य मृगयाकर्तॄणां चाभिव्यक्तिं करोति। व्याधशाकुनिकी* मृगया स्वभावतो मनोरञ्जनपूर्णा भवति।

सिन्धुसभ्यतायां आखेटका धनुर्भिः, गोलिकाभिः भल्लासिगदादिभिश्च मृगयां कुर्वन्ति

1 हरिवंशे विष्णुपर्वणि ८८, ८९ अध्यायौ।

2 रघुवंशे १६ ५४–७० ।

3. कामसूत्रे १,३ १६, ४४६ ।

स्म । मत्स्यग्रहणमपि जालादिभिरक्रियत । वैदिकयुगे विशेषत आर्येतराणा मृगया दृश्यते । ते मत्स्यपक्षिपशूना विविधै कुशलोपायै ग्रहण कुर्वन्ति स्म ।

परवर्तियुगे सामूहिकमृगयाया प्रचलन बभूव । तथा हि—उपद्रवकारिणा व्याघ्र-महिषाणा मृगयायै द्विसहस्रधनुर्धरा समागता । उपाधा अपि मृगयूना मनोरजनपूर्णा आसन् । तथा हि—शृगालाना मृगयायै शववत् श्मशाने शयन कृत्वा तेषु समोपमागतेषु दण्डप्रहारेण तेषा मारण सम्भावितम् । मयूराणा ग्रहणाय पालितमयूराङ्गना तेषा प्रलोभ-नाय नियुक्ता । पालिततित्तिरस्य ध्वनि श्रावयित्वा समागताना तित्तिराणा ग्रहण कुर्वन्ति स्म कतिपयाखेटका । मृगयायै ग्रामसिंहानामुपयोगोऽभूत् ।

रामायणयुगीना मृगयाभिरुचि रामविषयकेण रामायणस्याधोलिखितश्लोकेन भवति—

निघ्नन्मृगान्कुञ्जराश्च पिबन्नारण्यक मधु ।
नदीश्च विविधा पश्यन्न राज्य सस्मरिष्यति ॥[1]

दशरथो मृगयाभिपक्त आसीदिति श्रवणवृत्तान्तेन ज्ञायते । मृगयाकर्मणि स शब्द-वेधिबाणप्रयोगमकरोत् । यज्ञदीक्षिता ऋषयोऽपि मृगयितु योग्या । चन्द्रगुप्तमौर्यादीना मृगयाया वर्णन ग्रीकलेखकै कृतम् । तदनुसारं राजान सैनिकै सुरक्षिता एव हस्ति-पृष्ठेभ्यो मञ्चेभ्यो वा मृगया कुर्वन्ति स्म । राजप्रासादसमीपवर्तिनो जलाशयात् पालित-महामत्स्याना ग्रहणे कुमारा आनन्दमनुभवन्ति स्म ।

मृगयाया गुणदोषविवेचन सम्यक्प्रकारेण कृतम् । दोष विविच्य मृगया व्यसनमिति मन्यन्ते मनीषिण । तथा हि—दशरथस्य पाण्डोश्च मृगयाया मुनिकुमारवध सुविदित एव । प्राणसशयोऽपि नातिस्वल्प आसीन्मृगयायाम् । हिंस्रपशूनामाक्रमण मरण दावाग्निभि प्रज्वलन मार्गभ्रशने इतस्ततो भ्रमण कठोरजीवन दस्यूना भय च मृगया भीषणामेव प्रमाणयन्ति ।[2] चाणक्यसूत्रानुसार मृगयाशीलस्य राज्ञो धर्मोऽर्थश्चापयात ।

मृगयागुणानामाकलन कालिदासमुखेन श्रवणीयम्—

मेदश्छेदकृशोदर लघु भवत्युत्थानयोग्य वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्त भयक्रोधयो ।
उत्कर्ष स च धन्विना यदिषव सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसन वदन्ति मृगयामीदृग्विनोद कुत ॥ अभि० २ ५

---

१. अयोध्याकाण्ड ३६ ६ ।

२. अर्थशास्त्रे पुरुषव्यसनप्रकरणे पिशुनमतम् ।

वाल्मीकिना तदेव प्राक् प्रतिपादितम्। वनवासाय प्रस्थानकाले राम कथयति—

कदाहं पुनरागम्य सरय्वाः पुष्पिते वने
मृगयां पर्यटिष्यामि मात्रा पित्रा च सगतः ॥
नात्यर्थमभिकाङ्क्षामि मृगयां सरयूवने।
रतिर्ह्येषातुला लोके राजर्षिगणसम्मता ॥
राजर्षीणां हि लोकेऽस्मिन् रत्यर्थं मृगया वने।
काले वृता ता मनुजैर्धन्विनामभिकाङ्क्षितम्। अयो० ४९ १५-१७

मृगयाया भयङ्कररूपं सोमदेवेन चित्रितम्। तथा हि—

तदेव मृगया नाम प्रमादो नृपसूनुनाम्।
घोरनादाभिर्यत्रास्या दृष्टा धूम्रोर्ध्वमूर्धजाः।
कुन्तदन्ता कथं कुर्यात्प्राससीव हिंसा शिवम् ॥
तस्माद्विफलमायासं जहीहि मृगयारसम्।
वध्यवाहनहन्तॄणां समानं प्राणसंशय ॥ कथा० ४ १ २८-३०

श्रीहर्षो राजदण्डरूपा राज्ञा कृतेऽपाय न भयते। तथा हि

अवलम्ब्य कुलाशिनो झषान्निजनीडद्रुमपीडिनः खगान्।
अनवद्यतृणार्दिनो मृगान् मृगयाघाय न भूभुजां घ्नताम् ॥ नैषध० २ १०

## द्यूतक्रीडा

प्राचीनैव द्यूतक्रीडा महाव्यसनमूर्तिः। सिन्धुसभ्यताया नागरिकाः १,२,३,४ आदिभिः लिखितैरक्षैर्दीव्यन्ति स्म। वैदिकयुगे सभाभवनेषु द्यूतेन मनोरंजनं कृतकार्याणां जनानामभूत्। धार्मिकविधानेऽपि द्यूतं समादृतमासीत्। अग्न्याधानकाले यजमानः पत्न्या सहादीव्यत।

वैदिकसाहित्ये द्यूतस्य महती निन्दा वर्तते। द्यूतस्य सगति मासमदिराभ्यां सह प्राभूत[१]। द्यूते घोर्यस्य शास्त्रतप्रनिष्ठा वर्तते। महाभारतानुसारं राजकुमाराणां द्यूतक्रीडायै सभाभवनं समृद्धं निर्मितम्। नलयुधिष्ठिरयोर्हृदयविदारिणी द्यूतक्रीडा प्रसिद्धा। महाभारतयुगे द्यूतविद्याया विगणनमपि प्रचलितम्।

अर्थशास्त्रानुसारं द्यूतक्रीडाया आयोजनं राज्ञा नियुक्तेन द्यूताध्यक्षेण कृतम्। नागरकाणां वासगृहे द्यूतफलकमाकर्षफलकं च बभूवतुस्तेषां सुरुचिप्रदर्शनाय।

---

१. अथर्ववेदे ६ ७० १

कामसूत्रानुसारं द्यूतस्य बहवो भेदा उपजीविता । तथाहि आकर्षक्रीडा, पट्टिकाक्रीडा मुष्टिद्यूतं क्षुल्लकद्यूतं च । द्यूताश्रया विंशतिकला विकसिता । तासु प्रमुखा अश्वविधानम् रौ ग्रहणम् नयज्ञानम् गूढराशि, क्षिप्तग्रहणम्, अनुप्राप्तिलेखनस्मृति, अग्निक्रम, ग्रहदानम् युद्धम् रुतम् नृत्तं च सन्ति।[1]

स्त्रीपुरुषाणां सामूहिकद्यूतमप्यायोजितम् । सिद्धहस्ता द्यूतकारास्तु धौर्त्येन नागरिकाणां धनमपहरन्ति स्म। खीष्टस्य पश्चात् दशमे शतके द्यूतस्य भीषणस्वरूपमवर्धत। तदा द्यूतगृहस्य गुणानुसारं नाम महाठिण्ठा बभूव। द्यूतेऽपहृतधना जना वस्त्रहीना एव पलायमाना कृता, यदा कदा ते दण्डैः प्रहारिताश्च ।[2] तदनुसृत्य सोमदेवेन कथितम्—

द्यूततान्तस्य किं नाम कितवस्य हि दुष्करम् । कथासरित्सागरे ६ १ ६५

द्यूतकाराणामनुपमसहानुभूतिरपि द्यूतकारेभ्यो भवति नाम । तथा हि—

मालवराज श्रीसेना दरिद्रता गतेभ्यो द्यूतकारेभ्यो महामठेषु जीवनव्यवस्थामकरोत्।[3] कविवाणी कदाचिद् द्यूतप्रशस्तौ प्रवर्तते । तथा हि शूद्रक—द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम् । दण्डी तु द्यूतेनौदार्यवर्धनं सुखदु खयो समव्यवहाराम्यसनं साहसबुद्धिपराक्रमात्मविश्वासादीनामोत्कर्ष च सम्भावयति ।

द्यूतस्य परिवृत्ति कविना विशदीकृता—

द्रव्य लब्धं द्यूतेनैव दारामित्र द्यूतेनैव ।
दत्त भुक्तं द्यूतेनैव सर्वं नष्टं द्यूतेनैव ॥

## इन्द्रजालम्

अलौकिकसाधनैर्लौकिकसिद्धोना प्रदर्शनमिन्द्रजालं । वैदिकमन्त्रस्तुतिभिर्देवानुग्रहेण चालौकिकसिद्धयो लभ्या इति लोकविश्वास । तद्यथा मन्त्रतन्त्रै पत्युरीर्ष्याभावस्य विलोपन, नायकस्य कौटुम्बिकजनानां स्थापन, नायके शृंगारभावस्योत्पादनं च कृतानि । देवासुराणामिन्द्रजालपरायणता मायापूर्णाचरणं च विदितचरमेव।

बौद्धसाहित्ये मेण्टकपरिवारस्येन्द्रजालस्योपलभ्यते । तदनुसारमनवर्षया कोष्ठागारपूरण भाजनशालायां सर्वश्रेष्ठपाकानामुपकल्पनम्, एककालेन ससीताकर्षणं च साधि-

१ कामशास्त्रे ३ ३ ६ ।
२ कथासरित्सागरे १० ५ १५ ३० ।
३ कथासरित्सा ६ १० ६ २/९ १६० ।

तानि ।[1] कश्चिद्भटः स्वाङ्गानि परिच्छिद्य पुनः तानि समयोजयति स्म । दीघनिकाये तदानीन्तनेन्द्रजालप्रयोगस्थितिः वर्ण्यते—*जिह्वानिबन्धनम्, हनुसंहननम् आदर्श-प्रश्नः कुमारी-प्रश्नः, देव-प्रश्नः अम्बुज्ज्वलनम्* ।[2] गान्धारी विद्यया एकस्मादनेकः, अनेकस्य एकश्च बभूव । चिन्तामणिविद्यया परेषां भावानां ज्ञानं क्रियते स्म ।[3] प्रज्वलिताग्नौ नटानां प्रवेशं कारयित्वा पुनर्ज्वलिताग्निं निर्वाप्य नटानां सञ्जीवनमपि तेन प्रदर्शितम् ।[4]

रामायणमहाभारतानुसारं तपोमन्त्रतन्त्रैर्दिव्यास्त्रशस्त्राणां निर्माणं कृतम् । रावणो मायया सिंह-व्याघ्र-गृध्र-कुक्कुर-कुक्कुटमुखान् बाणानसृजत् ।[5]

अर्थशास्त्रानुसारमौषधिप्रयोगेण मासपर्यन्तं निराहारजीवनयापनं शरीरस्य रागस्य परिवर्तनम् अग्निना शरीरस्याज्वलनं धूमाग्नीनां भक्षणमेकस्मिन्नेव दिने ५० योजनानि गमनं सम्भावितानि । ईदृशैः प्रयोगैः रात्रावपि दिनवद्दर्शनं शरीरस्यादर्शनत्वविधानं प्राणिनां प्रस्वापनं पिहितद्वारस्यानावरणं यथेच्छरूपग्रामिकरणं च सम्पादितानि ।[6]

परवर्तियुगे कापालिकानामिन्द्रजालप्रदर्शनं श्रूयते । तेषां प्रदर्शनपरिधिः राजभवनादारभ्य दीनकुटीरपर्यन्तं विस्तृतः । तथा दशकुमारचरिते—'स च विद्येश्वरनामधेयोऽहमैन्द्रजालिकविद्याकोविदो विविधदेशेषु राजमनोरञ्जनाय भ्रमन्नुज्जयिनीमद्यागतोऽस्मि' इति शशंस । परेद्युः प्रभाते विद्येश्वरो रसभावरीतिगतिचतुरः परिजनताड्यमानेषु वाद्येषु नदत्सु, गायकीषु मदकलकोकिलामञ्जुलध्वनिषु मुकुलितनयनः क्षणमतिष्ठत् । तदनु विषमं विषमुल्वणं वमन्तः फणालङ्करणा भोगिनो निश्चेरुः । गृध्राश्च तुण्डैरहिपतीनादाय दिवि समचरन् । ततोऽग्रजन्मा नरसिंहस्य हिरण्यकशिपोर्दैत्येश्वरस्य विदारणमभिनीय महदाश्चर्यान्वितं राजानमभाषत ।[7]

सांप्रतो दशमशताब्दे डाकिनीभिः स्त्रीभिः कृतानि बहुविधानि विस्मयजननानि वर्णितानि । *वायौ सञ्चरणम्, अदृश्यकरणं पुरुषस्य पशुरूपविधानं भित्तिदारणं* च मुखराणि तासाम् ।

दृष्टिविभ्रमस्तु इन्द्रजालस्यापभेदो वर्तते । अनेन योगेन एकस्य वस्तुनो युगपदेव द्वे रूपे प्रकटिते । तथा शिशुपालवधे—

कृतिभिः कृतदृष्टिविभ्रमाः स्रजमेके भुजगं यथापरे ॥१६.६८

---

१. महावग्ग ६ ३४ ।

२. दीघनिकाय प्रथमभाग ब्रह्मजालसुत्ते

३. दीघनिकाय केवट्टसुत्त ।

४. सुरुचिजातके ४८९ ।

५. लङ्काकाण्डे ७७ ८–१० ।

६. अर्थशास्त्रे प्रलम्भनभैषज्यप्रकरणे द्रष्टव्यम् ।

७. दशकुमारचरितस्य पञ्चमोच्छ्वासात्

## मल्लयुद्धम्

स्वाभाविकमेव मल्लयुद्धं मनोरञ्जनार्थं भवति । प्राचीनयुगे मानवा न केवलं परस्परमयुध्यन्त, अपि तु पशुभिरपि युद्धं कृत्वा शरीरबलस्य युद्धकलायाश्च परिचयं ददति स्म । सिन्धुसभ्यतायां मल्ला चित्रकैरयुध्यन्त । महाभारतीयमल्लयुद्धं भीमजरासन्धप्रकरणे विवृतम् । तथा हि—

करग्रहणपूर्वं तु कृत्वा पादाभिवन्दनम् ।
कक्षैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः ॥
चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः ।
गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम् ॥
उभौ कट्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ ।
अधोहस्तं स्वकण्ठे तूदरस्योरसि चाक्षिपत् ॥[१]

युद्धमिदं चतुर्दशदिवसानचलत् । स्त्रीपुरुषा बालवृद्धाश्च दर्शका समागताः ।

ब्रह्ममहोत्सवे जनपदेभ्योऽगणितमल्ला राजधानीं समागताः । विजयिभ्यो उपहारधनं दीयते स्म । अरतिद्वन्द्वि महामल्लानां युद्धं व्याघ्रसिंहहस्तिवृषभादिभिरायोजितम् । केचिन्मल्ला दिग्विजयिनो बभूवुः । द्वन्द्वयुद्धं तु लोकप्रियमासीत् ।[२]

परवर्तियुगेऽपि मल्लानामीदृशं युद्धं मल्लमहोत्सवे समायोजितम् । गोपानां नित्यमल्लयुद्धं क्रीडनं साधारणमेव ।

पशूनां पारस्परिकयुद्धमायोजितम् । हस्ति महिष वृषाजकुक्कुट-लावादीनां युद्धस्य दर्शनाय बहुशो जना समापतिताः । चन्द्रगुप्तमौर्यस्य पशुयुद्धदर्शने महती रुचिर्बभूव । मल्लयुद्धे क्वचिन्मल्ला पारितोषिकधनं प्राप्तवन्तः । एतादृशं मल्लयुद्धं प्रधनमिति ख्यातमासीत्[३] । विजयिनो ध्वजचिह्नानि प्राप्तवन्तः ।[४]

## वसन्तोत्सवः

हर्षोल्लासप्रकरणे मानवानां प्रकृत्या सह सङ्गतिः स्वभावतः भवति । वसन्तस्तु मानवानां शृङ्गाररसानामुद्दीपक इति शाश्वतं सत्यं वाल्मीकिना प्रतिपादितम् ।[५] तत्परिलक्ष्यादिकविना राममधिकृत्य गीतम्—

१ सभापर्वणि एकविंशाध्याये ।
२ विराटपर्वणि १३ अध्याये अर्थशास्त्रेऽपि ये जनपदे शूरास्त्यक्तात्मानो हस्तिनं व्यालं वा मतियोधयेयुः ते तीक्ष्णाः । आदि प० १२६ ३० ।
३ राजत० ८ १७० ।
४ अविमारके ।
५. मधुर्माधवो वसन्त इति चैत्रवैशाखयो वसन्तसंज्ञा ।

मां हि पद्मदलताम्राक्षी कीर्तिवर्धनपाणिनी प्रपश्यति ।
न हि तां सूक्ष्मपक्ष्माक्षीं सुकेशी मृदुभाषिणीम् ॥
अपश्यतो मे सौमित्रे जीवितेऽस्ति प्रयोजनम् ।
मम हि दयिततरतया कान्तो रुचिरकानन ॥ किष्कि० १ ३०-३१

वस्तुतस्तु सर्वाणि श्रेष्ठमनोरञ्जनानि पोषयति । तथाहि—

मनोऽधिष पात्र विलासलास्ये प्रेङ्खासु दोलासु च सुन्दरीणाम् ।
गीते च गौरीचरितायतसे पूजाप्रपञ्चे च मनोभवस्य ॥

काव्यमीमांसायाम् १७ अध्याये

वसन्तोत्सवविधाने पुरा कामार्चनस्य स्थानं महत्त्वपूर्णमासीत् । स्त्रिय आम्रमञ्जरी धनुर्धराय कामदेवाय समर्पयन् । नागरिकाणां काममहोत्सवे तेषां सार्वजनिकं सामूहिकं च चर्चरीसंगीतमभवत् । राजमार्गेषु स्त्रीपुरुषा वासन्तिकचीरभेणोन्मत्ता वासन्तिकवेषधारिणो नृत्यसंगीतपरायणाश्च बभूवुः । वाराङ्गनाभिरपि नागरिकाणां मनोरंजनं कृतं शृङ्गकजलप्रहारादिभिः । मदनोद्याने पुष्पावचय मालागुम्फन नृत्य संगीतादीनि समायोजितानि ।

वसन्तोत्सवे कदाचित् परिहासपूर्णायोजनानि कृतानि दुर्ललितैर्जनैः । तदथा बाणेन वर्णितम्—वृद्धधार्मिकस्य कस्यचिद्विवाहः कयाचिद् वृद्धया सह मन्नशय्यायामेव सम्पन्नः ।

पौराणिकधारणानुसारं चैत्रशुक्लद्वादश्यां रतिकामयोरावाहनं कृत्वा नृत्यगीतादिभिः तयोः पूजा कृता, विष्णुकामदेवविषयककथा श्रुताश्च । तदा काम एव जनार्दनः सर्वेषां कन्यानाम् प्रार्थितः । अपरं च फाल्गुनशुक्लपूर्णिमायां कामस्य प्रदाहः क्रियते इति कतिपयपुराणानां सम्मतम् ।

## कौमुदीमहोत्सवः

कौमुदीमहोत्सव कार्तिकमहोत्सवो वा ऋतुशोभावैशिष्ट्यात् राष्ट्रियमहोत्सव समायोजितः । सन्ध्यागमे नागरिकदम्पती गृहाद् बहिर्गतौ रात्रिपर्यन्तं कौमुदीमहोत्सवानन्दमन्वभवताम् ।

तदथा मुद्राराक्षसे—

धूर्तैरन्वीयमाना स्फुटचतुरकथाकोविदैर्वेशनार्यो
नालंकुर्वन्ति रथ्याः पृथुजघनभराक्रान्तिमन्दं प्रयाते ।
अन्योन्यं स्पर्धमाना न च गृहविभवं स्वामिनो मुक्तशङ्काः
साकं स्त्रीभिर्भजन्ते विधिमभिलषितं पार्वणं पौरमुख्याः ॥ ३ १०

राजानस्तु समागता दिव्यवेषधरा चित्रराजयज्ञसमीपं पुष्पसज्जित चित्रितबाणं क्षिपन्ति स्म ।

पौराणिकयुगे आश्विनपूर्णिमायां लक्ष्मी पूजिता । दिनकाले व्रतपरायणा जनाः सन्ध्यायां स्वर्ण-रजत-मृत्तिकादीनां शतदीपकान् प्रज्वालयन्ति स्म । पश्चात् घृतशर्करा-समायुक्तक्षीरोदन रजतपात्रे चन्द्रिकायां प्रहरपर्यन्त निधाय तेन द्रव्येण लक्ष्म्या आराधन कृतवन्त । पश्चात् मांगलिकसंगीतमायोजितम् । तदानीन्तनधारणानुसारं निशीथे विचरन्ती लक्ष्मी पूजापरायणेभ्यो जनेभ्यो महदैश्वर्यं प्रददाति ।

रामायणानुसारमाश्विनपूर्णिमायामिन्द्रमहोत्सव सम्पादित ।

## देवोत्सवो यज्ञोत्सवश्च

मानवानामिव देवानामपि नाट्य-नृत्यसंगीतवाद्यादिभिर्विनोद सकल्पित । वैदिक-युगे यज्ञावसरे गाथागायनसमारम्भे वीणावादन कृतम् । वाजपेययज्ञे रथधावनमायोजि-तम् । रामायणमहाभारतानुसारं कथानृत्यगीतवाद्यादीनामायोजन समागताना जनाना मनोरजनायाभूत् । एभिरायोजनैर्नकेवल मानवानाम्, अपितु देवानामपि मनोरजन विधेय-मिति तेषा यज्ञस्यानिवार्याङ्गता प्रकटयति ।

वैदिकयुगस्य पश्चात् पूजाया लोकप्रियत्वमवर्धत । पूजाना समारम्भ क्वचिदुत्सव-रूपेण कृत । ईदृशोत्सवेषु महाभारतकाले राज्ञा परिचरेणेन्द्रमहोत्सव प्रवर्तित । अस्मि-न्नुत्सवे यष्टिरेका भूमौ संस्थापिता । सा इन्द्रयष्टिरिति समाख्याता । यष्टिर्वस्त्रगन्धमाल्या-लङ्कारैर्विभूषिता । तस्या समीपे हसरूपेण भगवत इन्द्रस्य पूजा कृता । अनेन समारम्भेण राष्ट्रे श्री विजयश्च सङ्कल्पितौ । जैनसाहित्यानुसारं सप्तदिवसपर्यन्त विविधमनोरजन-समायुक्त इन्द्रमहोत्सवोऽभूत् । इन्द्रध्वज संस्थापित । पूर्णिमायां स्वय राजा ध्वजस्य पूजा कृतवान् । कुमार्यो बलिपुष्पादिभिरिन्द्रपूजा कृत्वा सौभाग्याय प्रार्थयन्त ।

पौराणिकयुगे पुरग्रामेषु शरदि देवेन्द्रमहोत्सवोऽनुष्ठित । व्रजप्रदेशे कृष्ण इन्द्रमहोत्स-वस्थाने गोवर्धनपूजा सन्धारितवान् । अपरेऽपि देवोत्सवा स्कन्दनागमुकुन्दादीना कृते समारब्धा । उत्सवेषु रथयात्रा सज्जिता ।

अशोकस्य धर्मयात्रा विख्याता बुद्धानुयायिनाम् । परवर्तियुगे गौतमबुद्धस्याराधनाय सुशोभना रथयात्रा कल्पिता । तस्मिन्नवसरे दीनहीनरुग्णादीना सहायता सविशेष कृता । देवोत्सवमधिकृत्य प्रायो नाट्याभिनय आयोजित इति रूपकाणा भूमिकात प्रमाणितम् ।

भागवतानुसारं यज्ञावसरे मनोविनोदाना समाहार एवासील्लोकाना प्रमोदाय ।[1]

---

१. भागवते १० ७५.१०, १४, १५ ।

एवं तौ लोकसिद्धाभिः क्रीडाभिश्चेरतुर्वने ।
नद्याद्रिद्रोणकुञ्जेषु काननेषु सरस्सु च ॥[1]
यदि दूरं गतः कृष्णो वनशोभेक्षणाय तम् ।
अहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे ॥
केचिद्भृङ्गैः प्रगायन्तः कूजन्तः कोकिलैः परे ।
विच्छायाभिः प्रधावन्तो गच्छन्तः साधु हंसकैः ॥
बकैरुपविशन्तश्च नृत्यन्तश्च कलापिभिः ।
विकर्षन्तः कीशबालानारोहन्तश्च तैर्द्रुमान् ।
विकुर्वन्तश्च तैः साकं प्लवन्तश्च पलाशिषु ॥
साकं भेकैर्विलङ्घन्तः सरित्प्रस्रवसम्प्लुताः ।
विहसन्तः प्रतिच्छायाः शपन्तश्च प्रतिस्वनान् ॥[2]
क्वचिच्च कलहंसानामनुकूजति कूजितम् ।
अभिनृत्यति नृत्यन्तं बर्हिणं हासयन्क्वचित् ॥
चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः ।
अनुरौति स्म सत्त्वानां भीतवद् व्याघ्रसिंहयोः ॥[3]
क्वचिद्वादयतो वेणुं क्षेपणैः क्षिपतः क्वचित् ।
क्वचित्पादैः किङ्किणीभिः क्वचित् कृत्रिमगोवृषैः ॥
वृषायमाणौ नर्दन्तौ युयुधाते परस्परम् ।
अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ यथा ॥[4]
एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे ।
निलायनैः सेतुबन्धैर्मर्कटोत्प्लवनादिभिः ॥[5]

कन्यकानां क्रीडा क्रीडनकानि च प्रायो बालकेभ्यो भिन्नानि बभूवुः । तासां कन्दुकक्रीडा ववचिरसनृत्याभवत् । पञ्चालिकाभिः कन्यकानां क्रीडनं विशिष्टमेव । मालाविरचनम्, मृत्तिकाकाष्ठादीनां गृहनिर्माणम्, मृत्तिकादीनामेवान्नरूपपाचनं तासां शिल्पात्मकं मनोरञ्जनमभूत् ।

## पार्वणोत्सवाः

पार्वणोत्सवा मासानां नियततिथिषु समायोजिताः । तथा हि-आश्विनस्य कार्तिकस्य

---

१ भागवते १०.१८ ।
२ भागवते १०.१२ ।
३ भागवते १०.१५ ११,१२ ।
४. भागवते १०.११ ३९,४० ।
५. भागवते १०.११.५९ ।

III प्रथमदिवसे यक्षगिरिरुत्सवो यस्मात् तत्र सन्निधानात् प्रसिद्ध.। अस्मिन्नुत्सवे लोकाना प्रायो द्यूतक्रीडा बभूव। कौमुदीजागर आश्वयुज्या पौर्णमास्या दीपा द्यूतशाया. क्रीडा बभूव। सुवसन्तक मदनोत्सव एव वसन्तागमे समायोजितो नृत्यगीतवाद्यादियोऽभवत्।

पार्वणोत्सवेषु कतिपया देश्या बभूवुः। तथा हि—सहकार-भञ्जिका- क्रीडाया प्रायो मगधेषु सहकारफलाना भञ्जनमभवत्। अभ्यूषखादिकाया शाकादिफलाना विट-पस्थाना ज्योत्स्नाना भक्षणमभवत्। अयमुत्सव कृषिप्रदेशेषु प्रचलित। एवमेव विस-खादिकाया सरःसमीपवासिनो मृणालानि खादन्ति स्म। नवपत्रिकाया प्रथमवर्षणेन प्रवृत्तनवतृणासु वनस्थलीषु क्रीडा बभूव। प्रायेण मध्यदेशवासानामाटविकानामुदकक्ष्वेडिका बभूव। एतस्यामुदकपूर्णश्वेडा कृता। सा एव शृङ्गक्रीडा आधुनिकयुगे होलीति प्रसिद्धा। श्रावणी मिथिलाया पाञ्चालानुयानमिति पुत्तलिकाविवाह-क्रीडा प्रचलिता। विदर्भे शाल्मलिविनोद प्रचलित। तत्र कस्यचित् महाशाल्मलेरधस्तात् लोकाना कुसुमाभरणक्रीडा बभूव। पाञ्चालेषु यवचतुर्थीविनोदे वैशाखशुक्लचतुर्थ्या नागराणां सुगन्धयवचूर्णक्षेपेण विनोदोऽभवत्। श्रावणकृष्णतृतीयाया हिन्दोलक्रीडा समायोजिता चैत्रसितचतुर्दश्यां मद-नोत्सवे कर्दमेनचन्दनस्य मूर्तिः पूजिता। दमनभञ्जिकाया परस्परं दमनकपुष्पावतंसेन चैत्र-सितद्वादश्या कृतम्। फाल्गुनपूर्णिमाया शृङ्गकादियन्त्रेण किंशुकादिकुसुमाना रागाम्भसा परस्परोक्षणं 'होलाका' इति प्रसिद्धासीत्। तत्र पटवासप्रक्षेपश्चाभवत्। अशोकोत्तंसिकाया-मशोकवृक्षे चैत्रसिताष्टम्या शिरोभूषणरचना कृता। पुष्पावचायिकाया पुष्पाणि चयितानि। चूतलतिकाया चूतलतास्थापनमन्वत्र समाचरितम्। इक्षुभञ्जिकायामिक्षुभञ्जनमत्र कृतम्। कदम्बयुद्धे कदम्बकुसुमैः प्रहरन्त लोका द्विधा विभज्य कुर्वन्ति स्म। दीपावल्यां पश्चात् यक्ष-भवनप्राङ्गणे यक्षिका-कर्षणोत्सवे बाला द्विवर्णीया कृत्वा यक्षस्य नग्नां कर्षणं कुर्वन्ति स्म। शरदि महानवम्या राज्ञ मनोरञ्जनपूर्णमुत्सवोऽभवत्—

महानवम्यां निखिलाश्चवृन्दनीराजनायामभिषद्विपानाम्।
दीपालिकायां विविधा विलासा यात्रोत्सवैरत्र मुदेविधेया॥ काव्यमी० १७ अध्याय

## विविधमनोरंजनानि

सप्तराज्यपि बहूनि मनोरंजनानि प्रचलितानि बभूवुः। वैदिकयुगेऽश्वारोहाणां प्रतियो-गिता 'आजि.' इति विख्याता। रथधावनमपि प्रतियोगिताम्येनायोजितम्। तदा प्रेङ्खा-न्दोलनं मनोरंजनरूपेण प्रचलितम्।

परवर्तियुगे सुरापानोत्सवं मण्डपे समागता नागरिका यथेच्छं पानं कुर्वन्ति स्म। रैवतकुन्दनं कृत्रिमहस्तकर्षणप्रतियोगिता विकुट्टनं वायुयन्त्रिकानिर्माणं धारकन्यानम्, वसु-

लिप्रहारेण मर्मरोतरक्षेपण मुष्टिप्रहरण च विनोदा असयताना भिक्षूणामपि बभूवु ।[1] राज्ञा प्रवर्तिते मगलोत्सवे प्रजाभ्यो बहुविधानि मनोरजनानि कल्पितानि । सर्पक्रीडाकारिण, वानरिकाश्च क्रमश सर्पनर्तन वानराभिनय च दर्शयन्ति स्म । लघनटा शक्तिलघन कुर्वन्ति स्म । अतिशयवेगेन कूर्दन धावनमास्कन्दन च सार्वजनिकमनोरजनाय प्रदर्शितानि ।

मनोरजनप्रसङ्गे गणिकाना गणना कर्तव्यैव । गणिकावासस्तु पुरा नागरकसस्कृतेरनुत्तम केन्द्र बभूव । नासीत् सा वेश्या यतो हि नाम वेश्या तु सदैव परित्याज्येति सम्मतम् । गणिका तु कुलीनैरपि नागरकै सम्राह्यासीत् । राजभी राजधानीषु राजगणिका नियुक्ता । ता राजकोशाभिवृद्धये बभूवु ।

अर्थशास्त्रे वाग्जीवनप्लवक सौभिक-चारणादयोऽपरे मनोरजनकारिणो बभूवु । तदा सार्वजनिकमनोरजनाय क्रीडागृहा निर्मिता शिल्पाना प्रदर्शनम प्रजाना मनोरजन राज्ञायोजितम् ।

गुप्तयुगे दोलोत्सवस्य विशेषप्रचारोऽभवत् । दोलायमाना शय्या लम्बिता । सारिकाभि सह वार्तालापेन मयूरनर्तनेन च स्त्रीणा मनोरजनमभूत् । खीष्टस्य पश्चात् सप्तमे शतके शुकसारिकादीना विवाहायोजन कृत विनोदाय। नकुलिका तु राजकुमारीणामङ्के शयितवती । अन्त पुरे मृगशावका पालिता । क्रीडापर्वते चकोरदम्पती सन्निवेशितौ । वनमानुषी राजकुले मनोरजनाय बभूव । अपरेऽपि कलहस मयूर-चक्रवाक-कोकिल हारीत-चकोरा कुब्जकिरातनपुसकबधिरवामनमूका मेषसिहाश्च मनोरजनाय राजकुले रक्षिता ।[2] समाजे विषमप्रकृतय कतिपयजना सदैव सार्वजनिकमनोरजनाय भवन्त्येव । तदधिकृत्य कादम्बर्यां जरद्द्रविडधार्मिकस्य कथाऽपरीकृता बाणेन ।[3]

परवर्तियुगेऽश्वक्रीडाया प्रचलन समवर्धत । अश्वारोही विविधप्लुतिभग्या दर्शकाना मनोरजनमकरोत् । तदधिकृत्य सामदेवेन लिखितम्—अत्यर्थं हयविनोदोऽङ्गभगमनापाद्य न तिष्ठति ।[4] अपर च वाजिवाह्यालीविनोद आधुनिक 'पोलो' वदासीत् । रज्जौ शरीरसस्थान कृत्वा गोलिकाभि क्रीडा कृता । अष्टापद चतुरग ( शतरज ) चतुस्सारि ( चौसर ) भारतादेव अरबदेश तत योरपदेश च गते ।[5] काष्ठपुत्तलिकाना नृत्य नाट्य कथाकरण च प्रायश मनोरजनमभूत् । एतदर्थं दारुमयी नारी यन्त्रमयो मृगश्च प्रयुक्तो [6]

१ चुल्लवग्गो १ १३ १ २ ।

२ कादम्बर्यां ८९, १८८, ३१६ पृष्ठेषु ।

३ कादम्बर्यां २२६ २२८ पृष्ठेषु ।

४ नीतिवाक्यामृते प्रकीर्णकसमुद्देशात् ।

५ सौन्दरनन्दे १ ३२ अरब और भारत का सम्बन्ध १४९ १५७ ।

६ यथा दारुमयी योषा नरवीरसमाहिता । ईरयत्यङ्गमङ्गानि तथा राजन्निमा प्रजा ॥ वन० ३० २३ ।

महाभारतीया वीटा क्रीडा आधुनिक 'हाकी'-समाभवत् ।[1]

## मनोरञ्जन-वैषम्यम्

पुरा भारतीया मनोरञ्जनानां वैषम्यमपि सम्यग् जानन्ति स्म । द्यूतगान्नानां नलयुधिष्ठिरादीनां वृत्तं तु विदितचरमेव । अपराण्यपि मनोरञ्जनानि व्यसनभूतानि लोकान् संहरन्ति' इति क्षेमेन्द्रेण सुष्ठु प्रतिपादितमधोविधिना—

नटनर्तकचक्रधरा कुशीलवाश्चारणा विटाश्चैव ।
ऐश्वर्यशालिजनसभाश्चरन्ति तेभ्य श्रियं रक्षेत् ॥ कलाविलासे । ७.२५

अतएव ब्रह्मसंस्कृतिपराणां कृते गायनं नर्तनं वा निषिद्धमासीत् ।[2]



---

१. आदिपर्वणि १२२,१२ ।

२. ब्राह्मणो नैव गायेन्न नृत्येत् । गोपथब्राह्मणे २.२१ ।

# राजतन्त्रम्

सर्वेषु समाजेषु प्रजाना शासनस्यावश्यकता प्रत्यक्ष विद्यते। शासनस्य मूलस्रोत पुरा राजा बभूव। राजकीयव्यवस्थाया विपुलपरिधौ—प्रजापरिपालन धर्मसस्थापन पापाना निग्रहण शान्तिव्यवस्था सत्प्रवृत्तीना समाधान च शाश्वतरूपेणान्तर्भूतानि सन्ति।

## राजकर्मपरिधिः

वैदिककालत एव राजकर्मपरिधि सुविपुलोऽभवत्। वैदिकसस्कृते प्रथमसम्राजो वरुण इन्द्रश्च बभूवतु।[1] वरुणस्य कार्यवृत्तिभी राज्ञो नित्यकार्याणि प्रतीयन्ते। तद्यथा—प्रजाकल्याणम्, तासा विपत्ते रक्षणम्, तासामभ्युदय, पापाना दण्डाधानम्, ऋतस्य प्रतिष्ठापन चेति राज्ञ कर्तव्यानि वरुणादर्शानुसार सन्ति।[2] इन्द्रस्य कार्योद्योगेन राज्ञ पराक्रमा आदर्शीभूता। तद्यथा शत्रुभिर्युद्धम्, पापाना विनाशनम्, दस्यु विजय, आर्याणामुत्थापन चेति राज्ञ कर्तव्यानि निश्चीयन्ते।[3]

महाभारते सक्षेपेण राजकीयव्यवस्थाया परिधि वर्णित —

यज देहि प्रजा रक्ष धर्म समनुपालय।
अमित्रान् जहि कौन्तेय मित्राणि परिपालय॥ शा० १४ ५२

प्रजानामभ्युदयाय महाभारतयुगे राजा प्रजावृत्त निवेदयितु चारान् नियुक्तवान्, राजमार्गाणा निर्माण कृतवान्, रोगिणामुपचारे वैद्यान् अधिकृतवान्, नागरिकाणा मनोरजनार्थ नटमल्लादीन् व्यापारितवाश्च। युधिष्ठिरमधिकृत्य तत्रैव प्रोक्तम्—

दीनान्धकृपणाना च गृहाच्छादनभोजनैः।
आनृशस्यपरो राजा चकारानुग्रह प्रभु॥ शा० ४२ ११

अन्यत्रापि

असुक्तान्नाम्नायमानो तिर्यग्योनिषु वर्तताम्।
स एव राजा भूताना सर्वेषामभवत् पिता॥आदि० ९४.१६

---

१ ऋग्वेदे १.१७ १,४ ४१ ३,१ २४ १२ १३,१ ६५ ७,६ ६८ ९,८ १६ १।
२ ऋग्वेदे ५ ८५ ३,१ २५ १०,२ २८ १०,८ ६।
३ ऋग्वेदे १ ३२।

प्रभविष्णुरासीत् पुरातनो राजा। महाभारतानुसारं तु

राजा कृतयुगस्रष्टा त्रेतायां द्वापरस्य च।
युगस्य च चतुर्थस्य राजा भवति कारणम्॥ शान्ति० ६९ ९८

तस्मिन् युगे राष्ट्रस्यौद्योगिकाभ्युदयाय राज्ञः प्रयत्नः श्लाघ्योऽभवत्।

अर्थशास्त्रानुसारं राज्ञः कर्मसु दण्डस्य विधानं प्रधानं बभूव।[1]

चतुर्वर्णाश्रमो लोको राजदण्डेन पालितः।
स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु॥ १ ४ १९

राष्ट्रस्य प्रायशः सर्वासामार्थिकनैतिकप्रवृत्तीनां नियन्त्रणाय विविधानां विभागानां अध्यक्षा नियुक्ताः। राजा प्रजाः पीडकेभ्यः सर्वथारक्षत्। अर्थशास्त्रे राजा धर्मप्रवर्तकोऽभिमतः। नववसतयो राजभिः कारिताः।

उपर्युक्तराजकर्मणां व्यवस्था प्राचीनानामैतिहासिकराजानामितिवृत्तेषु लभ्यते। तद्यथा—अशोकस्य धर्मविजयो धर्मयात्रा च सुविदितौ। धर्ममङ्गलादर्शेन सर्वेषां प्राणिनां समादरं प्रतिष्ठापितवान्। स सर्वेषां सम्प्रदायानां पारस्परिकसहिष्णुताभावं व्यक्तीचकार। अशोकः सामाजिकजीवनस्यादर्शप्रतिष्ठां विन्यस्तवान्। तथा हि—एवं देवानां प्रिय आह—मातापितरौ शुश्रूषितव्यौ गुरुत्वं प्राणेषु द्रढयितव्यम्। सत्यं वक्तव्यम्। ते इमे धर्मगुणाः प्रवर्तयितव्याः। एवमेव अन्तेवासिना आचार्योऽपचायितव्यः। ज्ञातिकेषु च कुले यथार्हं प्रवर्तयितव्यम्। एषा पुराणी प्रकृतिः दीर्घायुषे च। एतत् एवम्—एतत्कर्तव्यं च।[2] न केवलं भारतेऽपितु विदेशेष्वपि स मनुष्यचिकित्सायाः पशुचिकित्सायाश्च व्यवस्थां कारितवान्। स्वराष्ट्रे स मार्गेषु छायाप्रदान् वृक्षान्, जलाशयान् विश्रामगृहान् च व्यवस्थापितवान्। सौराष्ट्रप्रदेशे सुदर्शनतडागस्य रचनसंस्करणादिकर्मणो यशश्चन्द्रगुप्तमौर्याशोक-रुद्रदाम स्कन्दगुप्तादीनां राज्ञां विदितचरमेव।[3] सार्वजनिकोपयोगितायाः अपरा अपि बहवः संस्थाः पुरा राजभिः प्रवर्तिताः सञ्चालिताश्च।

प्रजाभिः समागमो राज्ञः सदैव कर्तव्यमासीत्। कश्मीराणां राजा हर्षस्तु—

सिंहद्वारे महाघण्टाश्चतुर्दिक्कमबन्धयत्।
ज्ञातुं विज्ञप्तिकामांस्ताः प्राप्तांस्तद्ध्वानसंज्ञया॥
आर्तां च वाचमाकर्ण्य तेषां तृष्णानिवारणम्।
प्रावृषेण्य पयोवाहश्चातकानामिवाकरोत्॥ राजत० ७ ८७९-८८०

---

१ दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः॥ मनु ७ १८

२ अशोकस्य ब्रह्मगिरौ द्वितीये शिलालेखे

३ परवर्तियुगे कश्मीरस्य राजा हर्षो विशालं पम्पासरोवरं कारितवान्। राजत० ७ ९४०

कवीनां दार्शनिकानां कलाकाराणां चैकाश्रयः पुरा राजा बभूव। अश्वघोष, कालिदास, बाण, भवभूति, वाक्पति, राजशेखर, हेमचन्द्र, विल्हणश्चेदृशा राजप्रमाथिता कवयो बभूवुः।

प्रजानां विपत्तीनां निवारणाय राजानः सदैवोद्योगपरायणा बभूवुः। ते प्रायः युद्धभूमिषु राष्ट्ररक्षार्थं अग्रस्थानमलचक्रुः। बहवो राजानः स्वयं प्रजानां दशां ज्ञातुं ग्रामाद् ग्रामं पर्यटन्ति स्म। तथा तात्कालिकचेष्टाभिः प्रजानां सुखमुदभवत्।

कश्मीराणां राजभिः राष्ट्रस्य सांस्कृतिकविकासाय बहु कृतम्। तथा हि राजा हर्षः प्रजाः सुवेशधारिणीः कृतवान्। अपरेभ्यो देशेभ्यो विदुषोऽभिगम्य राजा जलौकः कश्मीरे तान् न्यवेशयदग्रहाराश्च विदधे। मेघवाहनस्तत्र जीवहिंसां निषिद्धवान्। कतिपयनृपैरौषधालयाः स्थापिताः।

सुदूरप्राचीनकाले शिक्षाया व्यवस्थाचार्याणामाश्रमेषु बभूव। ते आचार्या कदाचिदेव राजसहायतां वाञ्छन्ति स्म। किन्तु कालान्तरे शिक्षायाः प्रकामविस्तारे भूते राजकीयसहायतायाः अपेक्षा बभूव। राजानोऽपि शिक्षाप्रसाराय समुत्सुका बभूवुः। राजभिः सञ्चालिता बहवः शिक्षणसंस्था बभूवुः। शिक्षाभवनानि राजभिर्निर्मापितानि। नालन्दाविश्वविद्यालयस्य प्राङ्गणेऽधुनापि तेषां राज्ञां कीर्तिर्दर्शनीया।

कश्मीर-प्रदेशे महाराजजयापीडस्य सर्वविद्याप्रसारार्थं महान् प्रयत्नोऽभवत्। तथा हि—

उत्पत्तिभूमौ देशेऽस्मिन् दूरदूरतिरोहिता
कश्यपेन वितस्तेव तेन विद्यावतारिता ॥ ४ ४८६
देशान्तरादागमय्य व्याचक्षाणान् क्षमापतिः
प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ॥ ४ ४ ८८

राज्ञः कर्मपरिधिः सङ्क्षेपेण वर्णाश्रमधर्मरक्षापरः बभूव। तदनुसारं सर्वे वर्णाश्रमिणो निजाभ्युदयं कर्तुं राजकीयसंरक्षणमपेक्षन्ते इति स्पष्टम्। राज्ञः प्रयत्नेन ब्रह्मचारिणः शिक्षां प्राप्तवन्तः, गृहस्था उद्योगपरायणाः सुखेन समृद्धिं प्राप्तवन्तः, वानप्रस्था वनानां प्रान्तपरिसरे तपसः तत्त्वज्ञानस्य च संवर्धनं कुर्वन्ति स्म, सन्यासिनोऽपि सर्वत्र प्रचारक्षेत्रमनुभवन्ति स्म। सर्वेषां वर्णानां स्वकीयोद्योगेषु नियोजनं तत्रत्यबाधानां निवारणं च राज्ञः कर्तव्यमासीत्।[2] तत् परिलक्ष्य कालिदासेनामरवाक्यमुद्घाटितम्—

---

१. मनु० ७ ४-५

२ परीक्षिद्विषये महाभारते प्रोचितम्—
चातुर्वर्ण्यं स्वधर्मस्थं स कृत्वा पर्यरक्षत। आदि० ४९ ७
आदिपर्वणि ४९. ९ श्लोकेनाप्येतत्समर्थितम्।
दीघनिकाये कूटदन्तसुत्ते १ ५ राज्ञ एतादृशं कर्तव्यं समीहितम्।

प्रजानां विनयाधानाद्रक्षणाद् भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥

## राज्ञो गुणसम्पत्

'यथा राजा तथा प्रजा' इति सिद्धान्तानुसारं राज्ञो चरित्रस्य राजतन्त्रेऽतिशयमहत्त्वं विद्यते । भारतीयराज्ञः स्वरूपं दिव्यं भवतीति मनुना पर्यालोचितम्[1] । वैदिककालतः भारते राजा इन्द्रविष्णुवरुणादीनां देवानां प्रतिनिधिरमन्यत । इन्द्रादर्शमनुसृत्य राजा विजेता बभूव । वरुणादर्शमनुसृत्य स न्यायपरायणोऽभवत् । विष्णोरादर्शमनुसृत्य राजा प्रजापालकश्चाभवत् । वैदिककालस्य राज्ञो व्यक्तित्वमुदात्तमासीदिति प्रमाणितमागमवचनैः—

ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति । अथर्व० ११ ५ १७
सिंहप्रतीको विशो अद्धि सर्वा व्याघ्रप्रतीकोऽवबाधस्व शत्रून् ॥ अथर्व० ४.२२ ७

उपनिषत्कालस्य कतिपयनृपा जनकाजातशत्रुप्रमुखाः परमदार्शनिका बभूवुः ।

राजकुमाराः साधारणच्छात्रसमाना एव वेदविद्यानां शिल्पविज्ञानकलादीनां शिक्षां गृह्णन्ति स्म[1] । अर्थशास्त्रानुसारम्–विद्यानां तु यथास्वमाचार्यप्रामाण्याद्विनयो नियमश्च । वृत्तोपनयनः त्रयीमान्वीक्षिकीं च शिष्टेभ्यो वार्तामध्यक्षेभ्यो दण्डनीतिं वक्तृप्रयोक्तृभ्य । ब्रह्मचर्यं चाषोडशाद्वर्षात् । नित्यश्च विद्यावृद्धसंयोगो विनयवृद्ध्यर्थं तन्मूलत्वाद्विनयस्य । पूर्वमहर्भागं हस्त्यश्वरथप्रहरणविद्यासु विनयं गच्छेत् ।[2] पश्चिममितिहासश्रवणे । पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतीतिहास । शेषमहोरात्रभागमपूर्वग्रहणं गृहीतपरिचयं च कुर्यात् ।

विद्याविनीतो राजा हि प्रजानां विनये रत ।
अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रत ॥ विनय० पञ्चमाध्यायात्

महाभारतानुसारं तु—

---

१ महासीलवजातके ५१, धम्मपुधजातके ५५, तिलमुट्ठिजातके २५२ ।

२. विनयस्य परमोदाहरणं कल्हणेन प्रस्तुतं राजकुमारस्य चन्द्रवर्मणः कथया—
सोऽहं धर्मे महद्दत्तं शीते दत्त्वाच्छमश्नुकम् ।
पदातिरपपादश्च पिशा सचारितोऽभवम् ॥ ५ १९६
मृगव्यादौ हये सार्धमटन्तं कण्टकक्षतम् ।
अन्तर्बाष्पं मा विलोक्य तमभ्युपिपुत्र्यगा ॥ ५.१९७
सतानुवाच सामान्यो भूत्वाहं राज्यमाप्तवान् ।
काले काले सेवकानां जाने सेवापरिश्रमम् ॥ ५ १९८
ईदृग् दुःखमय भुक्त्वा दास्यत्यन्यस्य या भुवम् ।
प्राप्तैश्वर्यो भवेन्मूढो गर्भेश्वरतयान्यथा ॥ ५,१९९

सङ्ग्रहश्चैव भूतानां दानं च मधुरा च वाक् ।
अप्रमादश्च शौचं च राज्ञो भूतिकरं महत् ॥ शान्तिपर्वणि ९२.५०

दातारं संविभक्तारं मार्दवोपगतं शुचिम् ।
असत्यक्तमनुष्यं च तं जनाः कुर्वते नृपम् ॥
यस्तु निःश्रेयसं श्रुत्वा ज्ञानं तत् प्रतिपद्यते ।
आत्मनो मतमुत्सृज्य तं लोकोऽनुविधीयते ॥ शान्ति० ९४ २७-२८

अहो महती विभूतिर्वर्तते कतिपयनृपाणां प्रजापरित्राणार्थम् । दुर्भिक्षे समापतिते कश्मीरराजस्तुञ्जीनोऽपरो विष्णुरिवाभवत् । तथा हि राजतरंगिण्याम्—

सपत्नीको निजैः कोशैः सचयैर्मन्त्रिणामपि ।
क्रीतान्नैः स दिवारात्रं प्राणिनः समजीवयत् ॥ २ २८

अटवीषु श्मशानेषु रथ्यास्वावसथेषु च ।
क्षुत्क्षामं क्ष्माभुजा तेन नहि कश्चिदुपैक्ष्यत ॥ २.२९

मन्दनुसारं चान्द्रव्रतिको नृप आदर्श एव प्रतिभाति । तद्यथा—

परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः ।
तथा प्रकृतयो यस्मिन्स चान्द्रव्रतिको नृपः ॥

पार्थिवव्रतिको राजा पृथिवीवत् सर्वेषां प्राणिनां भरण-पोषणं करोति । जितेन्द्रियस्य नृपस्य प्रकल्पनं मनुस्मृतौ विद्यते । तथाहि—

इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥ ७.४४

पुराणानुसारं शिवि-हरिश्चन्द्र-राम-युधिष्ठिरादयो नृपतय उपर्युक्तगुणैर्मण्डिता आसन् । इतिहासप्रसिद्धाना राज्ञामशोक विक्रमादित्य-हर्ष-भोजादयस्तादृशा उदारगुणा बभूवुः । अशोकस्तु गौतमबुद्धेन तुल्यो मानवताया विपत्तीनामभावानामार्तानां धातुमूत्या द्रवितो बभूव । स सत्प्रवृत्तीः प्रवर्तयितुं तासां स्वर्गप्राप्तिक्षमत्वं जनान् प्रति घोषयामास । स प्राणिमात्रेभ्यो दयालुरासीत् । तस्य कर्मण्यतामुनपि शिलालेखेन प्रमाणितः । तथाहि—देवानां प्रियः प्रियदर्शी राजा एवमाह—तत् मया एवं कृतं—सर्वं कालमदतः मे अवरोधने, गर्भागारे, वर्चसि, विनीते, उद्याने सर्वत्र प्रतिवेदका स्थिताः अर्थं जनस्य प्रतिवेदयन्तु मे इति । सर्वत्र जनस्यार्थं करिष्यामि अहम् । नास्ति हि मे तोष उत्थाने अर्थसन्तरणाय च । कर्तव्यमतो हि मे सर्वलोकहितम् । तस्य च पुनः एतत् मूलमुत्थानमर्थसन्तरणं च । नास्ति हि कर्मान्तरं लोकहितात् । यत् च किंचित् पराक्रमे अहं किमिति

भूतानामानृण्यमियाम् ।[1]

परवनिपुणे कश्मीरे महाराज उच्चलोऽभवत्तस्य विषये कल्हणो विशदयति—

> एकया लोचयात्रार्थं प्राह्णात् प्रभृति निर्गत ।
> बहिरुद्दिश्य वाह्यालीरचारीदादिनक्षयम् ॥ राजत० ८ ४६
> सोऽश्वेनैकचरन्नाजेत्य ज्ञात्वा कथित जनै ।
> य य स्वदोषमश्रौषीत्त त स्वरितमयजन् ॥ राजत० ८ ५५

तेजस्वितैव राज्ञ श्रेष्ठगुण इति प्रतिपादयन् कल्हणो जयसिंहमुदाहरति—

> अनुच्चलन्नपि स्थानाद् भ्रूभङ्गेन चकार स ।
> विलोलाल्लोमकम्पेन विड्नाग इव भूधरान् ॥ राजत० ८ १५५८

बहूना विलासिना दुर्वृत्तानामर्थलोलुपाना च राज्ञा कुकृत्याना परिचयेन भारतीय इतिहास कलुषीकृत इति नाविदित विदुषाम् ।[2]

## राजपदस्य योग्यता

राजपदाय प्राचीनकाले प्राय सदा युद्धवीरत्वमपेक्षितमभवत् । आक्रमणकारिभ्य शत्रुभ्य प्रजाना रक्षण राज्ञ प्रथम कर्तव्यमासीत् । अस्या स्थितौ यदि कश्चित्कोऽपि

---

१ षष्ठशिलालेखात्

२ यथा हि राज्ञा हर्षो मन्दिराणि लुण्ठितवान् मूर्तिविध्वंसन च कृतवान् । एतदर्थं देवोत्पाटननायक नियुक्तवान् । राजत० ७-१०९० १०९१

ललितादित्य प्रवरपुरमग्निसात् कृतवान् । राजत० ४ ३१० ३११

उन्मत्तवर्मा ॥ विहारेषु भिक्षा कृत्वा जीवनयात्रा कुर्वाणं स्थविरं राजपुरुषैरमारयत् । राजत० ४ ४१२

अहो दुर्वृत्तमुन्मत्तस्य—

> सम्प्रेरित कुसचिवै शस्त्राभ्यास चकार स ।
> पाटयन् क्षुरिकाधारै कारवीत्तलकोटरम् ॥
> गर्भिणीना च जठरं द्रष्टुमपाटयत् ।
> धा ठि यस्य परोक्षायमङ्गमर्मकृतामपि ॥ राजत० ५ ४४० ४४१

कलशस्तु दुष्टराजतम आसीत् । स तु स्वपितु सन्यासमवनमाग्नपादवगोत् । पितु सवनाशकाले कलशस्तु तद्राजधानीमोषामात् पश्यन् कलशभूपति । तोषादनृत्यज्ज्वालोर्मीगंगनालिङ्गिभि समम् ॥ ७ ४१२

एतेभ्यो राजभिर्नासीदून क्षेमगुप्त —

> ष्ठीवन श्मश्रुमालासु गालय श्रोत्रपालिषु ।
> तेन क्षिप्ता प्रतीक्षाणा करोटीषु च टक्कुरा ॥ ६ १५७

योग्यताविहीन पुरुष उत्तराधिकारित्वेनापि राजपद प्राप्तवान् तर्हि स चिरकाल स्वपद लब्धुं समर्थो नाभवत् । अयोग्यानां राज्ञां स्थाने तेषां विजेतृन् स्वीकर्तुं प्रजा समुत्सुका आसीत् ।

प्रायशो राज्ञा ज्येष्ठपुत्रास्तेषां पद गृह्णन्ति स्म । क्वचित् राज्ञो निर्वाचने मन्त्रिणामधिकारो बभूव । ते राजपुत्रस्य परीक्षण कृत्वा तस्य तीक्ष्णबुद्धे परिचयमनु त राजपदेऽभिषेचयन्ति स्म । राजपुत्रेऽयोग्ये सति ते कञ्चित् पर गुणीन प्रतिभाशालिन पुरुष राजपदेऽधिष्ठापयन्ति स्म । राजा स्वय योग्योत्तराधिकारिण नियुनक्तु—इति कौटिल्यमतम् ।

युद्धवीरनेतार शस्त्रबलेन विशालभारतीयप्राङ्गणे यथेच्छ राज्य परिकल्पयन्ति स्म। राजा भवितु पुरा क्षत्रियत्वमपि नासीदपेक्षितम् । आर्येतराणा राजान प्रायश आर्येतरा बभूवु । बहवो राजानो ब्राह्मणा, वैश्या, शूद्रा वा बभूवु । स्त्रियोऽपि क्वचिद्राजपदमलचक्रु ।

राज्ञा क्वचिन्निर्वाचनमपि गण्यमानपुरुषैं कृतमासीदिति एतादृश निर्वाचनमाधुनिकनिर्वाचनाद् भिन्न सुनिश्चितम् ।

दुष्टाना राज्ञा विनाशोऽवश्यम्भावीति शास्त्रकाराणामुद्घोषो बभूव[1] तद्यथा मनु —

कामात्मा विषम क्षुद्रो दण्डेनैव निहन्यते । ७ २७

एतदेव समर्थित कल्हणेन राजतरङ्गिण्या प्रमाणपुरस्सरम्—

यश श्रीर्जीवित दारा भाग्यापि पृथ्वीभुजाम् ।
क्षणादेव क्षय यान्ति प्रजाविप्रियकारिणाम् ॥

तथापि प्रजाना शुभाशुभे राजा साधुरसाधुर्वा भवतीति विज्ञापित महाकविना—

न यन्त्रपुत्रकस्येव शक्ति काचित्प्रभु भुज ।
भवेत्साधुरसाधुर्वा स प्रजाना शुभाशुभे ॥ ७ ३४०

## राज्य-विस्तार

पुरा प्रजानामितिवृत्तस्य ज्ञानायाधुनिकयुगवत्साधनानि नासन् । सुदूरस्थप्रजाना केन्द्रस्थानात् सम्यक् परिपालन कठिनमासीत् । अस्या स्थितौ यद्यपि विशालराज्याना समीचीनत्व नासीत्, तथापि दिग्विजयिना समग्रभारते स्वाधिपत्यस्थापनस्याभिलाष प्राय सदैवावर्तत । तेन साम्राज्यानि, राज्यानि, आश्रितराज्यानि च बभूवु । साम्राज्याना

---

१. कल्हणानुसार कुराजाना विनाश मासत्रयाष्टाभ्यन्तरे कृत । शङ्करवर्मा नरेश्च चाण्डालहतौ । राज० ५ २१७ तथा ४७७ ।

विभाजनं प्रावर्तिष्ट। दिग्विजयिना सम्राजां चाधिपत्ये बहूनि राज्यान्याश्रितानि बभूवुः। वनप्रदेशेषु पर्वतभागेषु चायेतराणां वन्यजातीनां वा राज्यानि आसन्।

साम्राज्यमितिपदं प्रथममृग्वेदे प्राप्यते[1]। वैदिकयुगे राजत्वसूचकानि पदानि बहुविधानि बभूवुः। तद्यथा—साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यं च[2]। इमानि पदानि राज्यविस्तारं शासनप्रणालीं चाधिकृत्य प्रयुक्तानि बभूवुरिति कथ्यते। सार्वभौमपदाय वैदिकयुगे आसमुद्रं राज्यविस्तारोऽपेक्षितः। ऐन्द्रमहाभिषेकेण सार्वभौमपदं समारभ्यत[3]।

तान् भारतवर्षस्य हिमवतो समुद्रपर्यन्तभागस्य नवद्वीपान् यो जयति स सम्राडित्युच्यते। कुमारीपुरात् प्रभृति बिन्दुसरोऽवधि योजनानां दशशती चक्रवर्तिक्षेत्रम्। तद्विजयमालभ्य चक्रवर्ती भवति। काव्यमीमांसायां १६ अध्याये।

उपनिषद्युगे भारतस्य विविधभागेषु प्रायः स्वतन्त्रराज्यानि बभूवुः। तद्यथा काश्यामजातशत्रोः, विदेहे जनकस्य, पञ्चाले प्रवाहणस्य जैवले, कैकयेऽश्वपतेः राज्यानि बभूवुः। महाभारतस्य दिग्विजयप्रकरणे वनभागेषु, पर्वतप्रदेशेषु मध्यदेशेषु चावस्थितानि बहूनि राज्यानि समुद्दिष्टानि।

परवर्तियुगे षोडशजनपदाः प्रादुरभवन्। तद्यथा—काशी-कोसलाङ्ग-मगध-वृजि-मल्ल-चेदि-वत्स-कुरु-पञ्चाल-मत्स्य-शूरसेनाश्मकावन्ति-गान्धार-कम्बोजाः।

ऐतिहासिकयुगे सर्वप्रथममशोकः महाराज्यमस्थापयत्। तस्मिन् महाराज्ये पश्चिमोत्तरप्रदेशे कम्बोज-गान्धार-यवनराज्यानि समाविष्टानि बभूवुः। उत्तरस्यां कश्मीरपर्यन्ता महाराज्यसीमासीत्। पूर्वभागे वङ्गप्रदेशो महाराज्येऽन्तर्भूतः। प्रायः समग्रदक्षिणभारतमपि तस्याधिपत्ये आसीत्। इदं महाराज्यमनेकप्रान्तेषु विभज्यते स्म।

परवर्तियुगे यद्यपि कस्यापि सम्राजः राज्यसीमा तावन्मात्रं विस्तृता नाभूत्, तथापि खारवेल-कनिष्क-समुद्रगुप्त-चन्द्रगुप्त-हर्षादीनां महाराज्येषु भारतस्याधिकांशभागः सन्निधापितो बभूव। लघुराज्यानां संख्या तु गणनाबाह्या बभूव।

## मन्त्रिपरिषदः प्रजासभाश्च

वैदिकयुगे सभा समितिश्च द्वे राजनीतिकसंस्थे महत्त्वं भजेताम्। तस्मिन्युगे ग्रामेषु सभाभवने सम्मिल्य जनाः सामाजिकसमस्याः राजनीतिकसमस्याश्चाधिकृत्य विचार-

१ ऋग्वेद ८।६२।१।
२ ऐतरेयब्राह्मणे ८।१४।
३. ऐतरेयब्राह्मणे ८।१५।

विमर्शं कृतवन्तः । सभाधुनिक 'पञ्चायत' समाभूत् । सभासदां निर्णया राज्ञे निवेदिताः । राजापि क्वचित्सभायाः सदस्योऽभवत् ।

उपनिषद्युगे स्वयं निराजाते स प्रधानो बभूव । तत्र गण्यमानसदस्या राजनीतिकस्थिती-रधिकृत्य व्याख्यानं प्रददुः । समितेर्मतं राज्ञेऽवश्यं ग्रहणीयमासीदिति प्रतिभाति । समिति-विरोधे भूते राजा स्वपदात् च्युतो बभूव ।

वैदिककालानन्तरं गणराज्येषु राजधान्यां समितयो विशेषाधिकारयुता बभूवुः । ताः शासनकर्मणि व्यापृता आसन् । ग्रामेषु नगरेषु च साधारणसमितयो बभूवुः ।

रत्निसस्या

वैदिकयुगे राज्ञः समीपवर्तिनां श्रेष्ठजनानां शासनकर्मणि विशेषाधिकारो बभूव । ते 'रत्नि' इति ख्याता आसन् । पुरोहितः, सेनानी, भागदुक्, संग्रहीता, राज्ञी, सूतः, ग्रामणी, क्षत्ता च साधारणतो रत्निसदस्या आसन् ।[1] इयं सस्या परामर्शदात्री बभूव । सस्येयं परवर्तियुगे मन्त्रिमण्डलरूपेण विकसिता अभवत् ।

मन्त्रिमण्डलम्

राज्ञे परामर्शदातारो महाभारतयुगेऽमात्या मन्त्रिणो वा ख्याता बभूवुः । अमात्यानां सस्या सप्तत्रिंशदासीत् । तथा हि महाभारते—

चतुरो ब्राह्मणान् वैद्यान् प्रगल्भान् स्नातकाञ्छुचीन् ।
क्षत्रियांश्च तथा चाष्टौ बलिनः शस्त्रपाणिनः ॥
वैश्यान् वित्तेन सम्पन्नानेकविंशतिसंख्यया ।
त्रींश्च शूद्रान् विनीतांश्च शुचीन् कर्मणि पूर्वके ॥
अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं तथा ।
पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकम् ॥
श्रुतिस्मृतिसमायुक्तं विनीतं समदर्शिनम् ।
कार्ये विवदमानानां शक्तमर्थेष्वलोलुपम् ॥
वर्जितं चैव व्यसनैः सुघोरैः सप्तभिर्भृशम् ।
अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् ॥

शान्ति० ८६.७-११

मन्त्रणार्थं मन्त्रिणां सख्या तिस्रः, पञ्च, अष्ट वा निर्धारितासीत् । मन्त्रोपयोगो महाभारते निर्दिष्टः । तथा हि

---

१. दीघनिकायानुसारं राज्ञः सप्त रत्नानि भवन्ति—चक्रम्, हस्ती, अश्वः, मणिः, महिषी, गृहपतिः, परिणायकश्च । महासुदस्सनसुत्ते १४ ।

तेषां त्रयाणां विविधं विमर्शं विबुद्ध्य चित्तं विनिवेश्य तत्र ।
स्वनिश्चयं तं परनिश्चयं च निवेदयेदुत्तरमन्त्रकाले ॥
धर्मार्थकामज्ञमुपेत्य पृच्छेद् युक्तो गुरुं ब्राह्मणमुत्तरार्थम् ।
निष्ठा कृता तेन यदा सह स्यात् तं मन्त्रमार्गं प्रणयेदसक्तः ॥

शान्ति० ८४ ४४,४९

साधारणतो राजपुरोहितः सर्वोच्चपरामर्शदाता बभूव । तमधिकृत्य महाभारते प्रोक्तम्—

स एव तु सतो रक्षेत् असतश्च निवारयेत् ।
स एव राजा कर्तव्यो राजन् राजपुरोहितः ॥ शान्ति ७३ १

महाभारते मन्त्रिणां गुणाः पृथक् वर्णिताः —

कच्चिदात्मसमा बुद्ध्या शुचयो जीवितक्षमाः ।
कुलीनाश्चानुरक्ताश्च कृतास्ते वीरमन्त्रिणः ॥ सभा० ५.१६

अर्थशास्त्रानुसारं तु मन्त्रपूर्वाः सर्वारम्भाः । कौटिल्यः त्रिभिश्चतुर्भिर्वा मन्त्रिभिः सह मन्त्रणां समीचीनां मन्यते । अपरं च कर्मणामारम्भोपायः पुरुषद्रव्यसम्पद्देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिरिति पञ्चाङ्गो मन्त्रः । तानेकैकशः पृच्छेत् समस्तांश्च ।[1]

रुद्रदाम्नः शिलालेखे द्विविधौ मन्त्रिणौ—कर्मसचिवः मतिसचिवश्च वर्णितौ । मतिसचिवा मन्त्रणार्थं, कर्मसचिवा राजकर्मसम्पादनाय च नियुक्ताः ।

गुप्तयुगे सर्वोच्चमन्त्रिणः—प्रधानमन्त्री सान्धिविग्रहिकः, अक्षपटलाधिकृतश्च बभूवुः । शुक्रनीतौ मन्त्रिपरिषदः सदस्यानां संख्या दश निर्धारिता—पुरोहितः, युवराजः (प्रतिनिधिः), प्रधानमन्त्री, सचिवः, मन्त्री, प्राड्विवाकः, पण्डितः, सुमन्त्रः, अमात्यः, दूतश्च ।[2]

कल्हणेन कश्मीरदेशस्य बहूनां राजमन्त्रिणां कार्यादिकं वर्णितम् । अनेन वृत्तेन कतिपयमन्त्रिणामुच्चादर्शाः प्रतिफलन्ति । यथाहि जयापीडस्य मन्त्री देवशर्मा नेपालदेशे स्वामिनि बन्दीभूते आत्महत्यां कृत्वा तस्य विमोचनं सम्भावितवान् । अवन्तिवर्मा तस्य मन्त्री शूरश्च परस्परं भृत्यवदाज्ञाकारिणौ बभूवतुः । यदा जयसिंहस्य मन्त्री धन्यो रुग्णोऽभवत्, राजा क्षणमपि तस्य रोगशय्यातो दूरो नाभवत् । कतिपयमन्त्रिणो राज्ञः प्रजापीडनपरां दुष्प्रवृत्तिं नियन्त्रितवन्तः । प्रजासुखार्थं तैर्बृहत्कार्यं कारितञ्च ।[3] कल्हणमतानुसारं तु मन्त्रिपदं कण्टकपूर्णमेव । यतोहि नाम

---

१ अर्थशास्त्रे मन्त्राधिकारप्रकरणात् ।

२ सचिवो युद्धमन्त्री बभूव । मन्त्री परराष्ट्रसम्बन्धाधिकृतोऽभवत् । पण्डितस्तु राष्ट्रे सदाचारप्रतिष्ठाम् अकरोत् । सुमन्त्रः कोषाध्यक्ष आसीत् । अमात्यो राजकोषस्यायस्य चिन्तामकरोत् ।

३ राजत० ४ ५६९-५७७ ८ ३ ७ २१२ २१८ ।

वेतालोत्थापनाच्छ्वभ्रलङ्घनाद्विषचर्वणात् ।
व्यालाश्लेषाच्च विषमं सत्यं राजोपसेवनम् ॥ राजत० ८,२१८७

तथापि दुष्टानां राज्ञामाज्ञामन्यथा कुर्वाणा मन्त्रिणस्तेषां प्रजानां च धन्यवादमर्हन्ति स्म ।[1]

साधारणतो मन्त्रिणः सुयोग्या बभूवुः । राष्ट्रस्याभ्युत्थाने मन्त्रिणां भारोऽतिशय एवासीत् । भारतीयेतिहासे सर्वगुणसम्पन्नानामुदारचरितानां राज्ञां कृते सर्वस्वत्यागिनां मन्त्रिणामादर्शाः प्रेरणाधायका आसन् ।

## शासनतन्त्रम्

सिन्धुसभ्यतायुगे राष्ट्रोत्पत्तिकप्रवृत्तीनां सञ्चारणाय कुशलशासनप्रबन्धः प्रकल्पितुं शक्यते । तत्रत्यनगरपालिकाया सुव्यवस्थानुकरणीयासीत् ।

वैदिकयुगे ऋतस्य प्रतिष्ठापनं राजनीतेः प्रधानमुद्देश्यमासीत् । वरुणस्यादर्शो राजभिरस्मै प्रयोजनाय स्वीकृतः । दुर्वृत्तानां जनानामन्वेषणं राजा दूतैरकारयत् । पापिनस्तु सदैव दण्ड्या अभिमताः ।

वैदिकशासनस्य प्रारम्भिकसंयोजनं 'जन' संस्थया कृतम् । आर्या आर्येतराश्च मूलतो विविधजनेषु सविभक्ता बभूवुः । तथाहि पुरु-यदु-द्रुह्यु-भारत-गन्धारादय आर्याणां जना यक्षु-शिग्रु-शिम्यु-कीकटादय आर्येतराणां जना आसन् । जना विट्सु, विशो ग्रामेषु च विभक्ता बभूवुः । ग्रामेषु बहवः कुटुम्बानि वसन्ति स्म । ग्रामाध्यक्षो 'ग्रामणी' इति ख्यातो बभूव । स ग्रामसेनानायक आसीत् सततं ग्रामस्य सुरक्षायै स प्रायतत । ग्रामेषु 'अविता' सर्वश्रेष्ठ शासको सर्वविधलोककल्याणाय चेष्टतेति ऋग्वेदस्य 'असि ग्रामेष्वविता' वाक्येन प्रमाणितम् ।

वैदिकयुगे सेनाया द्विविधं महत्त्वमासीत् । प्रथमं तावत् सेना विजयार्थं नियोजिता । सेनया स्वराष्ट्रस्य शत्रुभ्यो रक्षा कृता । अपरं च प्रजासु सेनया शान्तिर्व्यवस्थापिता । राष्ट्रियविपत्तिनिवारणार्थं राजा सेनया सह समुद्यतोऽभवत् ।

जातकानुसारं ग्रामाणां शासनं राजा ग्राममोजकैरकारयत् । ग्राममोजको ग्रामे दण्डार्हानदण्डयत्, मादकवस्तूनां क्रय-विक्रययोर्नियन्त्रणमकरोत्, पशु-वधं निषेधितवान्, ग्रामाभ्युदयोपायान् समपादयत् । ग्राममोजकाः साधारणतः सदाचारिण आसन् ।

ग्रामस्याभ्युदयार्थं ग्रामवासिनां सहयोग आदर्श आसीत् । कतिपयग्रामवासिनः प्रातरुत्थाय मार्गाणां जलाशयानां सभाभवनानां च स्वच्छतां स्वयं कुर्वन्ति स्म । तस्मिन् युगे

---

१ राजत ४.५११०-३२०१

स्वयंसेवका इव नागरिका कर्तव्यत्वेन ग्रामकृत्यानि—सार्वजनिकभवनानां निर्माणं मार्गस्य समतलविधानं सेतुरचनं जलाशयखननं च कुर्वन्ति स्म।[1]

महाभारतानुसारं राष्ट्रगुप्तो राष्ट्रसंग्रहश्च शासनस्य द्वे अङ्गे बभूवतु। राष्ट्रगुप्ती राष्ट्रस्य रक्षणाय राष्ट्रसंग्रह राष्ट्रस्याभ्युदयाय चास्ताम्। राष्ट्रस्य विविधा परस्परानुबद्धा विभागाः शासनयोर्वर्याय कृता। तद्यथा ग्राम, दशग्रामा, विंशतिग्रामा, सहस्रग्रामाश्च परस्परं शासनसूत्रे प्रत्येकस्याधिपतिभिरिति स्थानेऽधिकारिभि शासिता। यस्मिन्नपि कस्मिंश्चिद् अधिपतिरेकस्य तराधिकारिणा सहायतामपेक्षितवान् तदर्थं स तेभ्यो निवेदितवान्। इमेऽधिकारिणो ग्रामकृत्येषु सङ्ग्रामकृत्येषु च व्यापृता बभूवु। ग्रामकृत्य तु प्रागेव वर्णितम्। सङ्ग्रामकृत्य युद्धमासीत्। नगराणां शासनं सर्वार्थचिन्तकेन कृतम्।

अर्थशास्त्रानुसारं पुरा गुप्तचराणां नियोजनं राज्ञा प्रधानकर्मासीत्। गुप्तचरेभ्य. समाचारं विज्ञाय राजानः आत्मरक्षार्थं प्रजारक्षार्थं चोपायान् साधयन्ति। अपरं च—राज्ञः शासनतन्त्रेऽत्यन्तं नियोग एव कौटिल्येन समीहित। तथा हि—राजानमुत्तिष्ठमानमनूत्तिष्ठन्ते भृत्या। प्रमाद्यन्तमनुप्रमाद्यन्ति। तस्मादुत्थानमात्मनः कुर्वीत। नालिकाभिरहरष्टधा रात्रिं च विभजेत। तत्र पूर्वे दिवसस्याष्टभागे रक्षाविधानमायव्ययौ च शृणुयात्। द्वितीये पौरजानपदानां कार्याणि पश्येत्। तृतीये स्नानभोजनं सेवेत। स्वाध्यायं च कुर्वीत। चतुर्थे हिरण्यप्रतिग्रहमध्यक्षांश्च कुर्वीत। पञ्चमे मन्त्रिपरिषदा पत्रसम्प्रेषणेन मन्त्रयेत। चारगुह्यबोधनीयानि च बोधयेत्। षष्ठे स्वैरविहारं मन्त्रं वा सेवेत। सप्तमे हस्त्यश्वरथायुधीयान्पश्येत्। अष्टमे सेनापतिसखो विक्रमं चिन्तयेत्। प्रथमे रात्रिभागे गूढपुरुषान्पश्येत्। द्वितीये स्नानभोजनं कुर्वीत स्वाध्यायं च। तृतीये तूर्यघोषेण संविष्टश्चतुर्थपञ्चमौ शयीत। षष्ठे तूर्यघोषेण प्रतिबुद्धः शास्त्रमितिकर्तव्यतां च चिन्तयेत्। सप्तमे मन्त्रमध्यासीत गूढपुरुषांश्च प्रेषयेत्। अष्टमे ऋत्विगाचार्यपुरोहितसखः स्वस्त्ययनानि प्रतिगृह्णीयात्।

समीचीनं शासनविधिं कौटिल्यनः प्रस्तुत.। तद्यथा—उपस्थानगतः कार्यार्थिनामद्वारासङ्गं कारयेत्। दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते। तस्माद्देवताश्रमपाषण्डश्रोत्रियपशुपुण्यस्थानानां बालवृद्धव्याधितानाथानां स्त्रीणां च क्रमेण कार्याणि पश्येत्।

*प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्।*
*नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम्॥* राजप्रणिधिप्रकरणात्

शासनतन्त्रस्य व्यवस्थार्थं विविधविभागानामध्यक्षा, सङ्ग्राहका, गोपा, स्थानिका', अनीकस्था (पशुचिकित्सका), चिकित्सका, अश्वदमका (अश्वशिक्षका) च बभूवु। साधारणपदाधिकारिणो लेखका, रूपदर्शका, नीवीग्राहका, उत्तराध्यक्षादयश्च। एते

---

१. कुलावकनाश्रे ११। बन्दीगणा राजानं ग्रामप्राप्यमभ्युदयार्थं भावन्त्व। राज० ८.२४२५।

राजकर्मचारिणो राष्ट्रस्याभ्युदयाय, प्रजाना संरक्षणाय, साधूना परित्राणाय, पापिना विनाशाय च सर्वा योजना साधयन्ति स्म । दिङ्मात्रनिर्देशार्थम्—पोतवाध्यक्ष मापतोलयो, पण्याध्यक्ष क्रयविक्रययो, सुराध्यक्ष मदिरापानस्य, नावध्यक्ष नौव्यापारस्य व्यवस्थाया व्यापृता बभूवु । समाहर्त्ता जनपदस्य सर्वेषा ग्रामाणा ग्रामवासिना चेतिहास योग क्षेम च सङ्ग्राहितवान् । नागरिको नगराणा व्यवस्थामकरोत्, अग्निप्रकोपान्नगराणा सुरक्षार्थं समुचितविधानानि कृतवाश्च । प्रजापीडकेभ्य प्रजा रक्षितु त्रयोऽमात्या प्रदेष्टारो वा नियुक्ता ।

चन्द्रगुप्तस्याशोकस्य च शासनपद्धति प्रायश उपर्युक्तविधानानुसार प्रावर्तत । सांस्कृतिकदृष्ट्याशोकस्य शासनतन्त्रे यद्वैशिष्ट्यमासीत् तद् धर्मशासनमिति विख्यातम् । स राजकर्मचारिणा कृते उत्कारितवान्—देवाना प्रियस्य वचनेन तोसल्या महामात्या नगरव्यवहारका वक्तव्या —सर्वे मनुष्या प्रजा मम । यथा प्रजार्थं इच्छामि अह किमिति सर्वेण हितसुखेन ऐहलौकिकपारलौकिकेन युज्येरन् इति तथा मनुष्येषु अपि इच्छामि अहम् ।

गुप्तयुगे केन्द्रीयशासनस्य वैशिष्ट्यमासीत् । केन्द्रीयकार्यालयप्रधान सर्वाध्यक्ष आसीत् । सर्वाध्यक्ष राजकीयशासनसूत्रेण प्रान्तेषु जनपदेषु च राजकर्मचारिणामनुबन्धन कृत्वा सर्वत्र शासनस्यैकसूत्रता व्यधात् । प्रान्ताधिपतीना विषयपतीना च साहाय्यार्थं दाण्डिका, चौरोद्धरणिका, दण्डपाशिका, नगरश्रेष्ठिन, सार्थवाहा, प्रथमकुलिका, प्रथमकायस्था, पुस्तपालाश्च नियुक्ता ।[1] ग्रामशासनाय ग्रामिका, महत्तरा, भोजकाश्च नियुक्ता । ग्रामशासनस्य परिधौ ग्रामीणाना गृहक्षेत्र-मार्ग-मन्दिर-कूप-वनादीना सुव्यवस्था कृता । सीमाकर क्षेत्राणा माप कृतवान् । ग्राममुख्य ग्रामेयको ग्रामाध्यक्षो वा बभूव । कतिपयप्रदेशेषु 'पचायत'–सभा तस्या पचमण्डली, ग्रामजनपदो वा बभूव । नगराणां शासनं पुरपालोऽकरोत । तत्र नगरमहत्तराणा परिषदाधुनिकनगरपालिकासमासीत् । नगरपरिषदा प्रचलन परवर्तियुगे दक्षिणभारते विशेषरूपेण प्रावर्तत । नगरस्य सर्वोच्चाधिकारी पुरपालो नागरिकाणा प्रतिनिधीना परिषद साहाय्येन नगरशासनमकरोत् । राजस्थान-मध्यप्रदेश-गुर्जर-कर्णाट-कोङ्कणादिप्रदेशेषु नागरिकाणां प्रतिनिधीना सभा कार्यकारिण्योऽपि ख्याता ।

परवर्तियुगे ग्रामान् सत्त्वप्रधानपुरुषोऽशिषत् ।[2] तत्र शासनसहाया कर्मचारिण

---

१ दाण्डिको दण्डव्यवस्थामकरोत् । सार्थवाहो व्यापारिणां सघानां संचालक आसीत् । प्रथमकुलिक शिल्पकाराणां नेताऽऽसीत् । प्रधानकायस्थ प्रधानलेखको बभूव । पुस्तपाल शासनलेखानां सग्रहमकरोत् ।

२. ग्रामप्रधानस्योपाधिर्महाराष्ट्रे 'ग्रामकूट', 'पट्टकीलो' वा, कर्णाटप्रदेशे गावुन्द', उत्तरप्रदेशे महत्तरो महत्तमो वाऽभवत् ।

साहसाधिपति, ग्रामनेता, भागहार, लेखक, शुल्कग्राह, प्रतिहारश्च बभूवु ।[1] दक्षिणभारते ग्रामसभाया सर्वे ग्रामवासिनोऽपि क्वचिन् समागता । तेषामेका कार्यकारिणी समितिरभवत् । क्वचिदुपसमितीना निर्वाचनमपि कृतम् ।

प्रजा कुनामनस्य यदा कदा विरोधमाचरत् । प्रजाशासनं क्वचिन् समुन्नतासीत् । दुष्टाना राज्ञां वशोऽपि प्रजया तेषां पीडनादात्मानं विमोचयितुं कृत इति राजतरङ्गिण्या बहुश निर्दर्शितम् ।[2]

ग्रामाणां शासनव्यवस्था सर्वतोमुखी बभूव । तथा हि—आभिर्ग्रामसभाभिर्व्याधी-डिताना प्राणरक्षा, दुर्बलेभ्यो भोजनदानम्, शिक्षणसंस्थाना धार्मिकसंस्थाना च संचालनं सार्वजनिकोपयोगिपूर्तादीना निर्माणं च सम्पादितानि

कश्मीरेषु ग्रामशासने राज्ञा रुचिर्बभूव । द्वादशशताब्दे जयसिंहेन ग्रामोत्थानाय बहु-कृतम् । तथा हि राजतरङ्गिण्याम्—

स एव ग्रामान् साग्रग्रामहापणसमर्पणे
निर्दोषपारिपन्थिविद्रुयान् निश्रेयसपोष्यंधान् । ८ ३३१९

## सेना युद्धं च

सेना राजत्वस्य प्रधानं कारणं भवति । सिन्धुसभ्यतायां राज्ञा महती सेनासीदिति सम्भावना स्थाने स्यात् । तस्मिन्युगे राज्ञा युद्धानि बभूवुरिति कल्पना नासमीचीना ।

वैदिकयुगे

आर्याणामार्येतराणां च महती सेना, घोरयुद्धानि च सविशेषमुल्लेखनीयानि वर्तन्ते । इन्द्रो देवराजो देवसेनाया नेता बभूव । आर्याणां सेना प्रायशो राजभिरधिष्ठिता बभूवुः । युद्धेषु बाणा प्रधानास्त्राणि बभूवु । अन्यानि शस्त्रास्त्राणि—ऋष्टिवज्रकुन्तपरशुपट्टिशगुल्फ-पाणन्ध्यादीनि बभूवु । सैनिका कवचशिरस्त्राणादिभि सुरक्षिता आसन् ।

युद्धानि महोत्सव एवाभिमन्यन्ते स्म । तत्र वीराणा हर्षनादो दुन्दुभिप्रमुखवाद्याना सिंहनादश्च मनोज्ञो बभूवनु । युद्धेषु प्रायो रथानामश्वानां चोपयोग कृत । वैदिकयुद्ध-कला सुविकसिता प्रतिभाति । शत्रूणां मार्गावरोधन तेषां मार्गे पाशजालादीनामाधानं च सन्धारिते । मायाविभि सह मायात्मक युद्ध कृतम् ।[3] युद्धकौशलमावृद्धमिति स्या-तम् । उत्तरवैदिकयुगे दिग्विजयाना विशेषप्रचलनं बभूव । दिग्विजयिन सम्राडिति उपा-धिना विभूषिता ।

---

1. साहसाधिपतिर्न्यायकर्मणि अग्रणी बभूव । ग्रामनेता ग्रामं दुष्टजनानामाक्रमणेभ्योऽरक्षत् । भागहारो ग्रामवृत्ताना रक्षामकरोत् । लेखको गणक आसीत् । प्रतिहार शान्तरो द्वारपालोऽभवत् ।
2. राजत० ५ २२१, ४ ४७३ ।
3. विष्णुर्वामना भूत्वा दस्यूणां छलने सफलो बभूव ।

वैदिकयुगेऽपि कतिपयजना युद्धाना बिभोषिका सम्यगजानन् । तथाहि

यस्मिन्नाजा भवति किं च न प्रियम् । ऋग्वेदे ७ ८३ २

तदा युद्धाचार सम्प्रतिष्ठितोऽभवत् । धर्मयुद्ध तु साफल्यस्य बीजमिति सम्भावितम् । मित्रावरुणौ युद्ध सत्यव्रताना रक्षा कुरुत इत्यनेन युद्धाचारस्य व्यवस्था कल्प्यते ।

जातकयुगे

वैदिककालानन्तर प्राय सदैव युद्धेषु हस्तिना विशेषोपयोगोऽभवत् । जातकानुसार स्तम्भभञ्जनाय, तोरणपातनाय, नगरद्वारभ्रंशनाय च हस्तिना कृतित्वमपेक्षितम् ।

जातकानुसार सेनाया प्रयाणसमये विशेषसौविध्यमुपकल्पितम् तथा हि—सेनापथे ग्रामा निवेशिता, तेषु ग्रामेषु भोजनवस्त्रालङ्कारादय सञ्चिता । बहुविधयानानि तेषु ग्रामेषु सम्भृतानि । सौख्योपकरणानि तत्र राशीकृतानि ।

सकारण युद्ध तु परिचितमेव । निर्निमित्तानि युद्धान्यपि प्राचीनग्रन्थेषु श्रूयन्ते । यथा हि—कलिङ्गराज कदाचित् मन्त्रिण प्राह योद्धुकाम [6] प्रतिपक्षी न दृश्यते । तर्हि किं कर्तव्य मयेति । मन्त्रिण प्रोचु —निजदुहितरो ग्रामाद् ग्राम, नगरात् नगरं भ्रामय । य कश्चित्ता स्वभवने नेतुमिच्छति तेनैव सह योद्धव्यम् । एव कुर्वन्नेवास्सकराजेन सह सोऽयुध्यत ।

केवलमपवादरूपमेव-पराजितै राजभि सह सद्व्यवहारो बभूव । काशिराज पराजितान् नृपान् 'वय न पुन विद्रोह करिष्याम.' इति गृहीतशपथान् मुक्तवान् ।[1] अपरे तु कतिपयविजेतार पराजित राजान मारयन्ति स्म ।[2]

युद्धविज्ञान विकसितमिव प्रतिभाति । तथा—नगराणामवरोध कृत । नगरगामिमार्गेष्ववरुद्धेषु दीर्घ नागरिका भोजनपानादीनामभावात् व्याकुलीभूता शत्रुराजस्य विजयं काङ्क्षन्ति स्म । तस्या स्थितौ राजविद्रोहस्य सम्भावनाभवत् ।[3] कदाचित् राजापरस्य कस्यापि साधारणसैनिकस्य वेष गृहीत्वा सैन्यसञ्चालनमकरोत्, राजवेषे [illegible] साधारणसैनिकोऽयुध्यत ।[4]

सेना चतुर्विधा बभूव—हस्तिसेना, रथसेना, अश्वसेना, पदातिसेना च । युद्धवीरा राजभक्तिनिर्णयाय क्वचित्परीक्षिता इति श्रूयते । तथाहि कश्चिन्मन्त्री सहस्रसैनिकेभ्य प्राह—यदि यूय राज्ञे प्राणान् परित्यक्तुमुद्यतास्तर्हि पर्वतादस्मादध पतनेन प्रमाणयध्वम् । यदा ते पतनासन्ना बभूवु तदा स तान्न्यवारयत् ।[5]

---

१. सगामावचरजातके ।
२ भोजाजानीयजातके २३ ।
३ असातरूपजातके १००, दद्दरजातके ३०२, घतजातके ३५५ ।
४ असातरूपजातके १०० । ५ सिरिजातके १५६ ।
६ चुल्लकालिङ्गजातके ३०१ ।

राजधान्यां विजयोत्सवः समायोज्यत । राजा तदा स्वलंकृतस्य नगरस्य प्रदक्षिणामकरो ।[1]

## रामायणमहाभारतयोः युगे

रामायणमहाभारतानुसारमेकाकिनो वीरस्य पराक्रमगाथा मोत्कर्षं वर्तते । रामायणे रामो महाभारतेऽर्जुनश्चैकत्र प्रायः स्वयुद्धकौशलं प्रदर्शयन्तो विजयं प्रापतुः । युद्धपरायणा वीराः परस्परं क्वचित् सत्कुर्वन्ति स्म । अनेन प्रकारेण तेषां सुप्रवृत्तीनां दुष्प्रवृत्तीनां वा परिचयः दीयते । दुष्प्रवृत्तयस्तु पराजयाय दैवविधानमिति सख्यातम् ।

कतिपययुद्धानि धर्मसंस्थापनार्थाय बभूवुः । यज्ञविरोधिनो राक्षसाः पराजेतव्या इति कर्तव्यं समाम्नातम् । तद्यथा रामायणे ताडकावधाय रामं प्रोत्साहयन् विश्वामित्र उवाच—

विश्वामित्र —स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम् ।
मन्नियोगादिमं देशं कुरु निष्कण्टकं पुनः ॥ बाल० २४.३०

राम — गोब्राह्मणहितार्थाय देशस्य सुखाय च ।
तव चैवाप्रमेयस्य वचनं कर्तुमुद्यतः ॥ बाल० २५.५

अपरं च रामो राक्षसान् प्रत्यवदत्—

युष्मान् पापात्मकान्हन्तुं विप्रकारान् महाहवे ।
ऋषीणां तु नियोगेन प्राप्तोऽहं सशरायुधः ॥ अरण्ये २०९

निष्कारणं योद्धुकामा बहवस्तदासन् । दुन्दुभिरिति ख्यातोऽसुरो युद्धार्थं शत्रुमन्विष्यन् वालिनं समागच्छत् । स तेन युद्धे हतः ।

युद्धदृश्यमद्भुतरसमयं बभूव । एकाकी रामः खरेण तस्य सहस्रवीराणां सेनया च सहायुध्यत । रामो बाणप्रहारैरसंख्यान् राक्षसानवधीत् ।[2] तत्र छिन्नशरीराङ्गानां नर्तनं हस्त्यश्वादीनां मरणं भीषणशत्रुसंहरणं च सर्वं भयङ्करमेवाभूत् । द्वन्द्वयुद्धमपि पराक्रमपूर्णमासीत् । तत्र गदाबाणाश्वकर्ण-क्षुरप्र-खड्गतोमर-शक्ति-पट्टिशादीनामस्त्रशस्त्राणि प्रयुक्तानि । रात्रावपि क्वचिद्युद्धानि बभूवुः । शब्दवेधिबाणाः प्रयुक्ताः । तत्र म्रियमाणानां वीराणां व्यथापूर्णो ध्वनिर्दुन्दुभिनिनादेन प्रत्याहृतः । भिन्नदेहानां सैनिकानां चिकित्सार्थं क्वचित् साधनानि समुपस्थापितानि बभूवुः ।

युद्धे प्रयुक्तानि शस्त्रास्त्राणि गणनाबाह्यानि सन्ति । दिव्यास्त्राणां प्रयोगो भृशं प्रावर्तत ।[3]

सन्ध्यायां प्रायो राक्षसा अपि युद्धविरामं प्रययुः । आत्मप्रशंसापरा वीराः निन्द्यन्ते स्म । मत्त-प्रमत्त सुप्त-परित्यक्तादीनां जनानां हन्ता भ्रूणहेति सम्मतः । शरणागतो जनो

---

१. बधनगरं १२० ।

२. रामायणे अरण्यकाण्डे २९ सर्गे ।

३. कतिपयदिव्यास्त्रशस्त्राणि—दण्डचक्र धर्मचक्र-वज्र ब्रह्मास्त्रवरुणपाशाग्नेयास्त्र मुसल प्रस्वापन-प्रशमन सौर-वर्षण शोषण पैशाचादीनि सन्ति ।

रक्षित । सत्यवादिनो दूता शत्रुसेनायामपि दुर्वार्ता कथयन्तोऽपि वध्या नासन् । युद्धारम्भात्प्रागन्तिमक्षणेऽपि सन्धिप्रस्तावो नाशोदनभीष्ट ।

सैन्यप्रयाण शुभमुहूर्ते समारब्धम् । कश्चित् कुशल सेनापति प्रयाणमार्गस्य पर्यवेक्षणायाग्रेऽगच्छत् । सेनापति सैन्यार्थं भोजनपानादीना सुलभता विमृश्य प्रयाणपथ निर्णीतवान् । क्वचित् शत्रुभिर्विषाक्तेभ्यो भोजनपानादिभ्य सेना रक्षणीयाभवत् । वनदुर्गेषु गूढान् शत्रून् निष्प्रभावयितुमुपाया कृता । प्रयाणमार्गे सेनासुखेन सन्निवेशिता । सैन्य परित कतिपयवीरा निरन्तर परिभ्रमण चक्रु । मार्गस्य नद्य सेतुभि पारगमिता ।

सैन्यस्याष्टाङ्गानि सम्मतानि—

रथा नागा हयाश्चैव पादाताश्चैव पाण्डव ।
विष्टिर्नावश्चराश्चैव देशिका इति चाष्टमम् ॥ शान्ति० ५९·४१ ।

सेनाविभागा पत्ति सेनामुखं ( गुल्म ) गणो वाहिनी पृतना चमू अनीकिनी च उत्तरोत्तर त्रिगुणा बभूवु ।[1] रथेषु चत्वारोऽश्वा प्राय नियोजिता । सारथिना सह चत्वारो योद्धारो रथे उपाविशन् । हस्तिन उपरि द्वौ अङ्कुशधरौ द्वौ धनुर्धरौ, द्वौ असिधरौ, एक शक्तिधर, एक पिनाकधरश्चापाविशन । रथस्य रक्षार्थं दश हस्तिन, हस्तिनो रक्षार्थं दशाश्वा अश्वस्य रक्षार्थं च दश पदातयो नियोजिता । सेनाया प्रमुखवीरा महारथिन, अर्धरथिनश्चेति प्रविभक्ता । तत्रैक सर्वसेनापति नियुक्त । तस्मिन् मृते कश्चिदपर सर्वसेनापतिरभवत् । प्रमुखवीरा स्वध्वजै शङ्खैर्श्च विशेषिता ।

महाभारतयुगे शतघ्नी महास्त्रमासीत् । युद्धसामग्रीणामस्त्रशस्त्रादीना च परिगणनमीदृशमासीत्—

सानुकर्षा सतूणीरा सवरूथा सतोमराः ।
सोपासङ्गा सशक्तीका सनिषङ्गा सहर्ष्टय ॥
सध्वजा सपताकाश्च सशरासनतोमरा ।
रज्जुभिश्च विचित्राभि सपाशा सपरिच्छदा ॥
सकचग्रहविक्षेपा सतैलगुडवालुका ।
साशीविषघटा सर्वे ससर्जरसपांसव ।
सघण्टफलका सर्वे सायोगुडजलोपला ।
सशालभिन्दिपालाश्च समधूच्छिष्टमुद्गरा ॥
सकाण्डदण्डका सर्वे ससीरविषतोमरा ।
सशूर्पपिटका सर्वे सदात्राङ्कुशतोमरा ॥

---

१. एको रथो गजश्चैका नरा पञ्च पदातय ।
त्रयश्च तुरगास्तज्ज्ञै पत्तिरित्यभिधीयते ॥ आदि० २.२४ ।
सेना पञ्च रथा नागा रथास्तावन्त एव च ।
दशसेना च पृतना पृतना दशवाहिनी ॥ उद्योगपर्वणि १५२ २५ ।

सर्वे लक्वचा सर्वे वासीयुक्षादनान्विता ।
व्याघ्रचर्मपरीवारा द्वीपिचर्मावृतादच ते ॥
सहष्टय सगृह्याश्च सप्रासविविधायुधा: ।
सकुठारा सकुद्दाला सतैलक्षौमसर्पिष ॥ उद्योग १५२ ३-९

बहूनि तत्कालीनिवरान्यस्त्राणि बभूवु । तथा हि—शर सन्धाय पर्जन्यास्त्रेण सयोज्य च पृथ्वी वेधयित्वा तत वारिधारोत्पादिता ।[1] ब्रह्मेषीकाया अग्नि प्रज्वालित । तेन दारुणा दहन कृतम् ।[2]

युद्धाय प्रस्थान प्रतिदिनमुत्सव एवाभूत् । तथा हि—
आप्लाव्य शुचय. सर्वे स्रग्विण शुक्लवासस ।
गृहीतशस्त्रा ध्वजिन स्वस्तिवाच्यहुताग्नय ॥
सर्वे ब्रह्मविद शूरा , सर्वे सुचरितव्रता ।
प्रययु. सर्व एवैते भारद्वाजपुरोगमा: ॥ उद्योगे १९६.३-५

युद्धवाद्यैस्म प्रयाणकाले तुमुलध्वनिरजायत । वीरा युद्धभूमौ वृषभवन्ननदु दारुइव-दध्मु ।[3]

सेनाभि सह सैन्यसन्निवेशे सूता , मागधा , वन्दिन , व्यापारिण गणिका , चारा , दर्शकाश्च निवसन्ति स्म । रुग्णाना व्रणिताना च सैनिकानामुपचाराय वैद्या नियुक्ता । सन्ध्याकाले तूर्यादिभिर्माङ्गलिको ध्वनि कृत । मनोरञ्जनाय रात्रिकाले नर्तन समायोजितम् । शिविरेषु स्त्रियो बधवराश्च सेवार्थं नियुक्ता ।[4]

प्रायश भूम्यर्थ युद्धानि कृतानि । तथा महाभारते प्रोक्तम्—
भूमौ च जायते सर्वं भूमौ सर्वं विनश्यति ।
भूमि प्रतिष्ठा भूताना भूमिरेव परायणम् ॥
यस्य भूमिस्तस्य सर्वं जगत् स्थावरजङ्गमम् ।
तत्रातिगृद्धा राजानो विनिघ्नन्तीतरेतरम् ॥ भीष्म ५।२०-२१

क्वचित् प्रजाना सामूहिकरूपेण दस्युभि सह युद्धमभूत् । दस्युभि सह युद्ध कर्तुं राजाऽपि सेनया सह प्रयाणमकरोत् ।[5] राजकन्याना कृते स्वयवरावसरे प्रायो युद्धानि समारब्धानि । तदर्थं महाभारतानुसार बहुशो वीरा अयुध्यन्त ।

महाभारतकालीनो युद्धाचार प्रशस्तोऽभवत् । तथा हि—युद्धे जिता यशोहीना ,

---

१. भीष्मपर्वणि १२६ ?? २३ ।
२. सौप्तिकपर्वणि १३ २०, १४ ७–१०,१६
३. उद्योग० १५१ अध्याये ।
४ उद्योगपर्वणि १६ १८–१९, द्रोणपर्वणि ६? ७ १७०,८० ?० ? ■ ?पर्वणि ६? । ।
५ शान्तिपर्वणि ७१ ३४,३६ ।

स्त्रीभि रक्षिता, पराक्रमरहिता शत्रवो न मारणीया। युद्धस्थले दर्शका रक्षितव्या। दिव्यास्त्रं शत्रुमारणमसमीहितम। मायाविभि सहैव केवल कुटिल युद्ध समीचीनमिति सम्मतम्। अतिकटु वदन्नपि दूतोऽक्रोधनीयोऽभवत्। युद्धाय धर्मा समयाश्च प्राक् प्रकल्पिता। महाभारतयुद्धे तु—

निवृत्ते विहिते युद्धे स्यात् प्रीतिर्न परस्परम्।
यथापर यथायोग न च स्यात् कस्यचित् पुन ॥
वाचा युद्धप्रवृत्ताना वाचैव प्रतियोधनम्।
निष्क्रान्ता पृतनामध्यान्न हन्तव्या कदाचन ॥
रथी च रथिना योध्यो गजेन गजधूर्गत।
अश्वेनाश्वी पदातिश्च पदातेनैव भारत ॥
यथायोग यथाकाम यथोत्साह यथाबलम्।
समाभाष्य प्रहर्तव्य न विश्वस्ते न विह्वले ॥
एकेन सह सयुक्त प्रपन्नो विमुखस्तथा।
क्षीणशस्त्रो विवर्मा च न हन्तव्य कदाचन ॥ भीष्म० १.२७-३१

महाभारते स्पष्ट प्रोक्तम—यतो धर्मस्ततो जय।[1] अपर च—

न तथा बलवीर्याभ्यां जयन्ति विजिगीषव।
यथा सत्यानृशसाभ्यां धर्मेणैवोद्यमेन च ॥ भीष्म० २१ ९

विपक्षेऽपि स्थितेभ्यो गुरुभ्योऽनुमतिमाशीर्वाद च गृहीत्वा वीरा युद्ध समारभन्त। युद्धाचारानुसारमवध्याना सख्यानल्पैव समभवत्। तथा हि—स्त्रिय, शरणागता, प्रमत्ता, सुप्ता, बालकाश्च न हन्तव्या। ये केचित् मुखे तृण धारयित्वा गच्छन्ति ते न प्रहर्तव्या। व्यसनग्रस्त सन्तानहीनो वा न वध्या। सन्नाहरहितै सह युद्धमकरणीयमासीत्।

युद्धस्थले मरणासन्नस्य महावीरस्य समीपमन्ये पार्थिवा उपतिष्ठन्ति स्म। सहस्रश कन्यास्तत्र गत्वा चन्दनचूर्णैर्लाजैर्माल्यैश्च सर्वशोऽवाकिरन्। सर्वे तस्याभिवादन कृत्वा तस्योपभोगाय सामग्रीमुपाजह्रु।

विजिता राजानो वर्षपर्यन्त बन्दिन एव विनीता। पश्चात् ते विजेतु पुत्रवत् सम्मानिता। विजिता कन्या वर्षान्ते पितुर्गृह गन्तुमनुमता। युद्धकाले द्वया सैन्ययोर्मध्ये यदि कोऽपि सन्धिकामो ब्राह्मण आगच्छन् तर्हि युद्ध स्थगितम्। अन्यथाव्यवहारिणो जातिबहिष्कृता एव निर्मर्यादिता इति घोषितम्।[2]

---

१ भीष्मपर्वणि ? ?४।
२ शान्तिपर्वणि ६७ अध्याय।

विपक्षे स्थितानामादरणीयपुरुषाणां प्रणामं कर्तुं कुशलं प्रष्टुं च तेषां चरणस्य कर्णस्य च समीपे बाणो निक्षिप्तो ।[१]

महाभारतयुगे युद्धविज्ञानं विकसितमासीत् । प्रयोजनानुसारं सेनाना बहुविधा व्यूहा रचिता । युद्धाधिना सैनिकाना शिक्षा परीक्षा च सम्यक् प्रकारेण कृते । तेषां व्यायाम परिश्रमादेवेशोऽभवन् । कुन्तीना यशस्विनी मनस्विनश्च सेनार्थं स्थापिताः ।

महाभारतकाले युद्धस्य लोकप्रियता संवर्धिता । धर्मयुद्धे क्षत्रियाणां प्राणत्याग प्रशस्ततमोऽभिमान. ।[२] धनिपक्षविचारका युद्धे नरसंहार समीक्ष्य विधान चक्रु यत्—

उपायविजयं श्रेष्ठमाहुर्भेदेन मध्यमम् ।
जघन्य एव विजयो यो युद्धेन विशाम्पते ॥ भीष्म० ३.८१

युद्धदृश्यं तु प्रायो द्वन्द्वमयमासीत् । तत्र रथिनां युद्धे रथा. परस्परसंघट्टेन चूर्णिताः, हस्तिन परस्परं दन्तेन विदारिता, वीराणा प्रहारेण हस्तिनो मारिता । गदामुसलादिभिराहता असिना छिन्नाः, हस्तिदन्ताभ्या विदारिता', हस्तिपादैर्मर्दिता वा धराशायिनो वीरा. परस्परमाक्रोशन्ति स्म । हस्तिभि. रथा अश्वाश्च मर्दिता. । अश्वाना पादघातैर्बहवो व्रणिता । बीभत्सं सर्वं युद्धदृश्यमासीत् । तथा भीष्मपर्वणि प्रोक्तम्—

गजवाजिमनुष्याणां शोणितान्त्रतरङ्गिणी ।
प्रावर्तत नदी तत्र केशशैवलशाद्वला ॥ ८९.२५

युद्धस्थले कश्चिद्वाग्युद्धमपि समारभत ।[३] स्वपक्षस्य विपक्षस्य वा वीरमधिकृत्य यत्संभवच्च प्रोक्त तदशोभनीयमासीत् । तत्र कदाचित् कचाकचि दन्तादन्ति नखानखि युद्धमपि समभवत् । मुष्टियुद्धं मल्लयुद्धं च कश्चित् सोत्साह संपादिते ।

विजेतुणां स्वागत सोत्सव सम्पादितम् । सर्वे स्वलंकृता. पुरवासिन. कुमारीभिर्गणिकाभिश्च सह वादनैरपि तुमुलीकृते विजेतृणामभिनन्दनं कुर्वन्ति स्म । तदा राजमार्गेषु पताका सज्जिता, सर्वे देवा पूजिताश्च । नागरिका हस्ते मङ्गलद्रव्याणि गृहीत्वा, स्त्रियो बहुमूल्यवस्त्राणि परिधाय च सूतमागधादिभि सह नगराद् बहिरेत्य सुगन्धिभिरलङ्कारमालादिभिश्च विजेतॄन् प्रसाधितवन्त ।[४]

अर्थशास्त्रानुसार राज्य परित सर्वेषामन्येषा राज्याना शासका शत्रव सन्ति । तैर्षां न्यक्करण समीचीन कल्पितम् । शत्रुणा शत्रवा मित्रवत् सम्भाविता । ईदृगमाकलन युद्धोत्पादकमासीत् । पार्श्ववर्तिनो राजान. परस्परमयुध्यन्तेति चिन्तनीयमासीत् । इयं युद्धपरम्परा सर्वेषां हानयेऽभवत् ।

---

१. विराटपर्वणि ४८.६ ८ ।

२. उद्योग० १५६.७ क्षत्रियाणां व्याधिमरणं शय्यामरणं वा निन्दितमेव । मोक्षपर्वणि १२२.२६ ३१

३ कर्णपर्वणि ३०,३३,४३,५६

४. विराटपर्वणि ३२.४७-५०, ६३.३-४

अर्थशास्त्रयुगे विविधानि युद्धोपकरणानि बभूवु । प्रथम तावदस्त्रशस्त्राणां वर्गीकरणं दर्शनीयम् ।

स्थिरयन्त्राणि—सर्वतोभद्र-जामदग्न्य बहुमुख-विश्वासघाती-सघाटी - यानक-पर्जन्य-कार्थबाहूर्ध्वबाहवश्च ।

चलयन्त्राणि—पाञ्चालिक-देवदण्ड-सूकरिका-मुसल यष्टि-हस्तिवारक-तालवृन्त-मुद्गर-गदा स्पृक्तला-कुद्दाल शतघ्नी-त्रिशूल-चक्रादीनि ।

हलमुखानि—शक्ति प्रास-कुन्त-हाटक-भिन्दिपाल शूल तोमर-वराहकर्ण-कणय- त्रासिकादीनि ।

धनूंषि—कार्मुक-कोदण्ड द्रुणादीनि ।

खड्गा —निस्त्रिंश-मण्डलाग्रासि-यष्टय. ।

क्षुरकल्पानि—परशु-कुठार-पट्टिश-खनित्र-कुद्दाल-चक्रकाण्डच्छेदनानि ।

आयुधानि—यन्त्रपाषाण-गोष्पणपाषाण-मुष्टिपाषाण-रोचनीदृषदादीनि ।

वर्मावरणैश्च शरीरस्य विविधाङ्गानि रक्षणीयानि आसन् ।

अर्थशास्त्रयुगात् युद्धप्रकरणे दुर्गविधानस्य महत्त्वमवर्धत । राज्यसीमान्ते राजधान्याम् अटव्यां मरुभूमौ, पर्वते, जलप्रदेशे च शत्रूणामाक्रमणस्य निवारणाय दुर्गरचना कृता । दुर्गे स्थित एव राजा शत्रोर्विनाशं कर्तुमचेष्टत ।

कौटिल्यानुसारं त्रिविधं युद्धमासीत्—प्रकाशं कूटं तूष्णीकं च । प्रकाशं युद्धं प्रकाशे एव निर्दिष्टे देशे काले च बभूव । कूटं युद्धं कपटमयमभवत् । तत्रासाधुव्यवहारेण शत्रवो विनाशिताः । तूष्णीकयुद्धे विपक्षी सेनापतिर्मन्त्रबलेन स्वपक्षे नीत. । क्वचित्तीक्ष्णपुरुषा. शत्रुविनाशाय नियुज्यन्ते स्म । ते विषप्रयोगेण शत्रून् मारयन्ति स्म । दुर्गविजयाय कौटिल्यः पञ्चोपायान् निर्दिशति । तद्यथा—उपजाप , अपसर्प., वामन, पर्युपासनमवमर्दश्च । उपजापेन विपक्षे परस्परवैमनस्यमुत्पादितम् । अपसर्पेण गूढपुरुषा नियुक्ताः । वामनेन विपक्षिणः स्वपक्षे धृता । पर्युपासनं तु शत्रोदुर्गस्य परित आक्रमणम् । अवमर्दस्तु साक्षादाक्रमणमेव । अग्नियोगेन दुर्गा प्रदाहिता. ।

कौटिल्यो विजयिना राज्ञा कर्तव्य निर्दिशति । तथा हि—

चरित्रमकृतं धर्म्यं कृतं चान्यैः प्रवर्तयेत् ।
प्रवर्तयेत्र चाधर्म्यं कृतं चान्यैर्निवर्तयेत् ॥

कौटिल्यानुसारं विजयाय ज्योतिर्विदां नाक्षत्रिकशुभाशुभं नापेक्षणीयम् । स्वप्रयत्नेसफलता भवति, न तु ग्रहनक्षत्रादिकैः ।

भारतीयानां युद्धसम्बन्ध्युत्कर्ष ऐतिहासिकयुगे 'अलक्षेन्द्रस्य' आक्रमणावसरे प्रमाणित । बहवो दायजातीया सेना स्वदेशं रक्षितु प्राणपणेनाचेष्टन्त । ईदृशीषु जातिषु प्रथम-

भरवशा आसन् । तैः सह युध्यमानोऽलक्षेन्द्रः क्षतविक्षतो बभूव । ते सर्वेऽश्वाः समरे मारिताः । पञ्चनदप्रदेशस्य बन्दीभूताः सैनिका अलक्षेन्द्रस्य सेनायां सम्मिलिता न बभूवुः । ते सर्वे नक्तं पलायितुमचेष्टन्त । अतस्तुरुष्किणा एव ते मारिताः । महाराजेन पौरवेणालक्षेन्द्रस्य महायुद्धमभवत् । स पराजितोऽपि कदापि अलक्षेन्द्रस्याधिपत्यं नैच्छत्, अपितु युद्धमेव दातुमियेष ।

मौर्ययुगे राजकीययुद्धसमारम्भे नौसेनाया महत्त्वं सविशेषमभवत् । युद्धस्थले हस्तिनामुपयोग आधुनिकटैङ्कवत् कृतः । चन्द्रगुप्तस्य मौर्यस्य सेनायां ९,००० हस्तिनः समायुक्ता बभूवुः । सेनायाः शासनार्थं षट् समितयः आयोजिता आसन् । ताः सेनायाः विविधाङ्गानां सुव्यवस्थां चक्रुः । तदानीन्तननृपाः पुष्पवत् प्रलम्बानि बभूवुः । द्वन्द्वयुद्धप्रायोऽस्मिना कृतम् ।

युद्धकालेऽपि प्रजाः स्वकर्मणि शान्तमनसा व्यापृता बभूवुः । कृषकाः युद्धभूमेः समीपमपि शान्तमनसः कृषिं कुर्वन्ति स्म । शत्रुभूमेः प्रदाहनं वृक्षाणां छेदनं वा निषिद्धमासीत् ।[1]

युद्धं प्रति विरागस्य भावना महाराजस्याशोकस्य मनसि समवर्धत । तेनोक्तमासीत्—यदस्ति अनुशोचनं देवानां प्रियस्य विजित्य कलिङ्गान् । अविजितं हि विजितं यत् तत्र वधो वा मरणं वा अपवाहो वा जनस्य । इच्छति हि देवानां प्रियः सर्वभूतानामक्षतिं संयमं समचर्यां मार्दवम् । एष च मुख्यमतो विजयो देवानां प्रियस्य यो धर्मविजयः । गाढा सा भवति प्रीतिर्धर्मविजये । ये पुत्राः प्रपौत्रा मे सन्तु ते नवविजयं मा विजेतव्यं मन्येरन् । तमेव विजयं मन्यन्तां यो धर्मविजयः । स ऐहलौकिकपारलौकिकः । सर्वा च निरतिर्भवतु या धर्मरतिः ।[2]

परवर्तियुगे भारतीयसैन्यव्यवस्थायां शैथिल्यमजायत । सैनिकानां जीवनविन्यासो विलासपूर्णोऽभवत् । सेनया सह राजदाराणां नायिकानां वेश्यानां मदिरापटवाहकानां च निर्याणमभवत् । मार्गे स्थाने स्थाने सन्निवेशकाले पुष्पावचय-वनविहार-जलक्रीडा-गोष्ठी-मधुपान-प्रणयालापादयो निर्दिष्टाः ।[3] सेनायाः परिमाणं बृहदासीत् । हर्षस्य सेनायां प्रारम्भकाले ५००० हस्तिनः २०,००० अश्ववाराः, ५०,००० पदातयश्च बभूवुः । पश्चादश्ववाराणां संख्या १००,००० हस्तिनां संख्या ६०,००० बभूवतुः । रथसेनानां प्रचलनं गुप्तयुगादेव लुप्तप्रायमेव ।

युद्धानि त्रिविधानि बभूवुः—भारतीयानां राज्ञां पारस्परिकं युद्धम्, भारतीयानां राज्ञां वैदेशिकैः आक्रमणकारिभिः सह युद्धम्, बृहत्तरभारते उपनिवेशस्थापनार्थं युद्धं च । प्रथमद्विविधैर्युद्धैर्भारतस्य प्रायशो जर्जरत्वमेव घटितम् । पारस्परिकं युद्धं भारतस्य

---

1. Ancient India P 31 32
२ अशोकस्य त्रयोदशशिलालेखात् ।
३ शिशुपालवधे ५-१० सर्गेषु ।

विनाशायाभूत् । न क्वचित् शास्त्रेष्वपि पारस्परिकयुद्धानां निषेधो विद्यते । वैदेशिकाक्रमणकारिभिः सह योद्धुं भारतीयानां संघा क्वचिदेव घटिता । कतिपयभारतीयनृपा वैदेशिकैः सह सन्धिं कृत्वा भारतस्य स्वातन्त्र्यविनाशाय उद्युक्ता इति निर्घृणप्रसङ्ग इतिहासप्रमाणित एव ।

कल्हणानुसारं कुटिलनीतेः प्रवर्तनेन शत्रुभूतं राजानं सचिवा विपत्तिग्रस्तं कुर्वन्ति स्म । स्वनासिकाकर्णादिकं छित्वा सिकतासिन्धोः सचिवो ललितादित्यं समागत्य प्रोवाच-अस्माकं राजा तु भवता सह मे सन्धि-प्रस्तावं श्रुत्वा मम दुर्गतिं कृतवानिति । ललितादित्यस्तमनुसरन् सेनया सह मरुभूमौ यदा निपतितस्तदा तेन सचिवेन स्वीयं दुश्चेष्टितं समुद्घाटितम् ।[1] आवश्यकतानुसारं ग्रामीणा ब्राह्मणाः कृषकाश्च युयुत्सवो बभूवुः ।[2] युद्धकाले ग्रामाणां दुर्दशा बभूव—

भारोद्विग्नपीडितग्राम्याक्रन्दः क्षान्तिचरूपमाम् । राजत० ८ २५१३

दशमशताब्दे कन्दर्पेणोपघातैर्ललिता बाणा प्रयुक्ताः ।[3] सेना तु महती बभूव । ललितादित्यस्य सेनायां केवलं कर्णाटस्य सप्तार्द्धं लक्षमासीत् ।[4]

## न्यायव्यवस्था

वैदिकधारणानुसारं दण्डव्यवस्थायाः प्रथमाधिष्ठाता वरुणो वर्तते । वरुणस्य चरा विश्वमखिलं पर्यालोचयन्तः पापकारिणः दण्डाधानाय चिन्वन्ति । स्वयं वरुणो मानवानां सदसतो परीक्षकः पापिनं दण्डयति । वरुणोऽनवधानेन पापं कुर्वतो जनान् क्षमते ।

उपर्युक्तविवरणेन वैदिकानां राज्ञां न्यायव्यवस्था परिद्योतते । राजानो वरुणसमा दण्डविधानं कुर्वन्ति स्म । वैदिकयुगे सभापि न्यायकर्मणि व्यापृता बभूव । ग्रामेषु ग्राम्यवादिनो न्यायं कृतवन्तः । प्रश्नविवाका न्यायं कर्तुमधिकृताः ।

न्याय-व्यवस्थायां वैदिकप्रक्रिया सरला बभूव । साक्षिणां महत्त्वमल्पमेवासीत् । शपथमात्रेण निर्दोषत्वं प्रमापितमासीत् । क्वचिदाशुदण्डविधानमपि प्रचलितमासीत् । यथा हि—चौरा अधमर्णाश्च निगडिता एव बाधिताः । चौर्याभियुक्तास्तप्तलोहखण्डं गृहीत्वा यदि न दग्धास्तर्हि ते निर्दोषा इति सम्मतम् ।

वैदिकयुगे दण्डविधानं कठोरमभवत् । तथा हि प्रजानां मेषाणां हन्ता न्यायाद्व

---

१ राजत० ४.२७७–२९३ ।

२ राजत० ८.२५१८ ।

३ राजत० ७.९८३–९८४ । ते बाणाः स्नेहेनाग्निना प्रज्वलिताः ।

४. राजत० ४.४०७ ।

निराकृतः । राजा त्रिलोहितः पुरोहितो मृत्युदण्डभागिनौ बभूवतुः । चौरास्तु प्राण-विमुक्ता कृताः । तथापि कश्चित् 'अपराधो मया कृतः' इति कथनमात्रेण पापस्य सम्मार्जनं भवतीति सम्मतम् ।[1]

सभासाम्यानुसारं ब्राह्मणाः प्रजानामाचारपद्धतिं व्यवस्थापयन् । आचारपद्धतेः च्युता जना राज्ञा दण्डनीया आसन् । मृत्युदण्डो विरल आसीत् । चतुर्विधा दण्डा ख्याता —तर्जनम् ( अपराधं कष्टकरम् ) बन्धनं विनयकरणं वधश्च । पुरोहितसम्मुखं गत्वा यदि पापी कथयेत्—नाहं पापं पुनः करिष्यामीति तदा स मुक्तोऽभवत् । बालवृद्धा ब्राह्मणा बाला । पिता राजदण्डभागिना बभूव । स्वकार्य सम्बन्धिनो वा राज्ञा दण्डनीया इति विधानमासीत् । न्यायपद्धतौ सर्वे समानमाना बभूवुः । न्यायव्यवस्थाया तदा-नीन्तनस्य महाभारतशान्तिपर्वणि परिचीयते—

कार्यध्यर्थिभिः सम्यक्कुर्वन्तो वा नृपानुगाः ।
आत्मानं पुरतः कृत्वा पापस्य महत्पापया ॥
तत्र साक्षिवत् साधु इदं यथावृत्तं भवेत् ।
समाविष्टमनाय वा परीक्ष्य तद्विशेषतः ॥
अपराधानुरूपं च दण्डं पापेषु धारयेत् ।
वियोजयेद्धनैर्ऋद्धानधनानथ बन्धनैः ॥
कामकारेण दण्डे तु यः कुर्यादविचक्षणः ।
स इहाकीर्तिसंयुक्तो मृतो नरकमृच्छति ॥
न परस्य प्रवादेन परेषां दण्डमर्पयेत् ।
आगमानुगमं कृत्वा बध्नीयान्मोक्षयीत वा ॥

शान्ति० ८९ अध्याय

न्यायाधिकारे ब्राह्मणा नियुक्ता आसन् । न्यायालये साक्षिणः सत्यवचनार्थं धार्मिकानुशासनं प्रस्थापितम् । तथा हि—

पृष्टो हि साक्षी यः साक्ष्यं जानानोऽप्यन्यथा वदेत् ।
स पूर्वानात्मनः सप्त कुले हन्यात्तथापरान् ॥
यश्च कार्यार्थतत्त्वज्ञो जानानोऽपि न भाषते ।
सोऽपि तेनैव पापेन लिप्यते नात्र संशयः ॥ आदि० ७३-८

न्यायकर्मणि निरक्षरिता सुदृष्टीयासीत् न्यायाधिकारे नियुक्ता जना प्रतिदिनं यथा-कालं धर्मागमनिश्चयाय निर्णयं कुर्वन्त्विति विधानमासीत् । अन्यथा राजाना नृपवद्दण्ड-नीया इति सम्मतम् ।[2]

---

1 शतपथब्राह्मण २.५.२.२० ।

2. रामायण उत्तरकाण्डे ४३ सर्ग ।

बौद्धसाहित्यानुसारं तदानीन्तनन्यायकर्म सरलं सहजं च प्रतिभाति। वादी प्रतिवादी च राज्ञः समक्षं वादं प्रतिवादं च क्रमशः प्रस्तावयन्ति स्म। राजा स्वयमपि स्वसन्देहनिवारणाय तौ प्रश्नानपृच्छत्। मिथ्यावादी तु कर्त्तविदग्धीकृतः। तस्य जिह्वा वा छिन्ना। जनपदेषु ग्राममुख्यः साधारणन्यायं कृतवान्। न्यायाधिकारेणाधर्मं कुर्वतो जनान् राजा दण्डयति स्म।[१] राज्ञः पुरोहिताः सेनापतयश्च क्वचित् न्यायाधिकारे नियुक्ता बभूवुः। बन्दिना जीवनं कठोरमभूत्। तेषां शारीरिकदण्डाय कण्टकजटितः प्रतोदः प्रयुक्तः।

मौर्ययुगस्य न्यायव्यवस्थायाः कठोरत्वं विदितचरमेव। मिथ्यावादिनां साक्षिणामङ्गानि छेदितानि। सन्दिग्धस्थले जलपरीक्षया सत्यासत्यं विविक्तम्। प्रायोऽपराधिनः स्वापराधं स्वीकुर्वन्ति स्म। राजापि न्यायकर्म समाहितवान्।

महाराजाऽशोको न्यायाधीशान् समादिशत्—सर्वे मनुष्याः प्रजा मम। पश्यत हि यूयमिदं सुविहिता अपि नीतिरियम्। एकः पुरुषोऽप्यस्ति यो बन्धनं वा परिक्लेशं वा प्राप्नोति, तद्भवति अकस्मात् तेन बन्धनान्तिकम्। अन्यच्च, बहुजनो दीर्घो दुःखीयति। तत एतस्य युष्माभिः किमिति मध्यं प्रतिपादयेम इति। एभिस्तु जातैर्न सम्प्रतिपद्यते ईर्ष्ययाश्रमेण नैष्ठुर्येण त्वरयानावृत्यालस्येन तन्द्रया। एवं कुर्वन्तः स्त, उद्गच्छत। सञ्चरितव्यं, व्रजितव्यं, एतव्यं वा। एवमेव यत् पश्यत यूयं तेन वक्तव्यम्—"आज्ञा न पश्यथ एव च एव च देवानां प्रियस्यानुशिष्टिः।"[१] एतस्मै अर्थाय इयं लिपिर्लिखिता इह येन नगरव्यवहारकाः शाश्वतं समयं युञ्जेरन्।[२]

ईसवीशतकस्य प्रारम्भिकयुगे प्रतिभूप्रदानेन कस्यचिद्बन्दिनो विमोक्षः स्वल्पकालिकमभवत्।[३] पुनः बन्दिनि प्रत्यावर्तिते स प्रतिभूः स्वतन्त्रोऽभवत्।

राजकीयोत्सवकाले बन्दिनां बन्धनविमुक्तिरायोजिता।

गुप्तसम्राजां शासने दण्डव्यवस्था प्रायः मृदुर्बभूव। मृत्युदण्डो विरलोऽभवत्। अङ्गच्छेदनमेव महत्तमो दण्डो बभूव। दाण्डिकाः, चौरोद्धरणिकाः, दण्डपाशिकाश्च राजदण्डं प्रावर्तयन्। स्वयं राजापि धर्मासनाधिकरणेऽधिष्ठितः सन् न्यायमकरोत्।

ह्वेनसांगानुसारमभियुक्तानामपराधनिर्णयाय क्वचित् बहुविधा दिव्यपरीक्षा कृता। तथा हि—जलपरीक्षा, अग्निपरीक्षा, तुलापरीक्षा, विषपरीक्षा च।

सूत्रस्मृतिग्रन्थेषु प्रतिपादितो न्यायविधिः भारते शाश्वतं प्रावर्तत। तेषु मनुस्मृतिः सर्वव्यापिनी बभूव। मनुस्मृतौ वैज्ञानिकविधिना विवादविषयाः पर्यालोचिताः। तथा हि—

---

१. गामणीचण्डजातके २५७।

२. कलिङ्गशिलालेखात्।

३. सौन्दरनन्दे ११ ६०। स्कन्दपुराणानुसारं धनत्रयोदशी दिवसे बन्दिनो मणिनोमिव्वितुमुन्मुक्ताः। पैप्पलवण्डे ११ ६०।

विवादास्पदान्यष्टादश विधा —ऋणादानम्, निक्षेप, अस्वामिविक्रय, सम्भूयसमुत्थानम्, दत्तस्यानपकर्म, वेतनादानम्, संविद्व्यतिक्रम., क्रयविक्रयानुशय, स्वामिपालविवाद, सीमाविवाद, वाक्पारुष्यम्, दण्डपारुष्यम्, स्तेयम्, साहसम्, स्त्रीसंग्रहणम्, स्त्रीपुंधर्म, विभाग., द्यूतसमाह्वय च। एतेभ्यो व्यतिरिक्ता विषया प्रकीर्णकोटौ गणिता ।

सूचका स्त्रीमारणापराधिना विवरण सम्प्रचारयितु प्रयुक्त । मनुप्रणीतो न्यायमार्गे निपुण एव । तथा हि

व्यवहारान्दिदृक्षुस्तु ब्राह्मणं सह पार्थिव ।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीत. प्रविशेत् सभाम् ॥
तत्रासीन स्थितो वापि पाणिमुद्यम्य दक्षिणम् ।
विनीतवेषाभरण पश्येत्कार्याणि कार्यिणाम् ॥
यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रय ।
राज्ञश्चाधिकृतो विद्वान् ब्रह्मणस्ता सभा विदु ॥
यत्र धर्मो ह्यधर्मेण सत्य यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासद. ॥
पादोऽधर्मस्य कर्तार पाद साक्षिणमृच्छति ।
पाद सभासद सर्वान्पादो राजानमृच्छति ॥
धर्मासनमधिष्ठाय संवीताङ्ग समाहित ।
प्रणम्य लोकपालेभ्य कार्यदर्शनमारभेत ॥
बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गत नृणाम् ।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥
जातिजानपदान्धर्माञ्छ्रेणीधर्मांश्च धर्मवित् ।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत् ॥
सत्यमर्थं च सम्पश्येदात्मानमथ साक्षिण ।
देश रूप च काल च व्यवहारविधौ स्थित ॥
गृहिण पुत्रिणो मौला क्षत्रविट्शूद्रयोनय ।
अर्थ्युक्ता साक्ष्यमर्हन्ति न ये केचिदनापदि ॥
नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिण ।
न दृष्टदोषा कर्तव्या न व्याध्यार्ता न दूषिता ॥
स्त्रीणां साक्ष्य स्त्रिय कुर्युर्द्विजाना सदृशा द्विजा ।
शूद्राश्च सन्त शूद्राणामन्त्यानामन्त्ययोनय ॥
बहुत्व परिगृह्णीयात् साक्षिद्वैधे नराधिप ।
समेषु तु गुणोत्कृष्टान्गुणिद्वैधे द्विजोत्तमान् ॥
सत्य साक्ष्ये ब्रुवन्साक्षी लोकानाप्नोति पुष्कलान् ।

इह चानुत्तमा कीर्ति यामेया महापूजिता ॥
जन्मप्रभृति यत्किञ्चित्पुण्य भद्र त्वया कृतम् ।
तत्ते सर्वं शुनो गच्छेद्यदि ब्रूयास्त्वमन्यथा ॥
यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च ।
न चार्तिमृच्छति क्षिप्र स ज्ञेय शपथे शुचि ॥
कौटसाक्ष्य तु कुर्वाणांस्त्रीन् वर्णान्धार्मिको नृप ।
प्रवासयेद्दण्डयित्वा ब्राह्मण तु विवासयेत् ॥
वाग्दण्ड प्रथम कुर्यात् धिग्दण्ड तदनन्तरम् ।
तृतीय धर्मदण्ड तु वधदण्डमत परम् ॥ अष्टमाध्यायत

दण्डस्याभिनव विषय प्राय सदैव प्रकल्पिता । तथा हि—कश्मीराणा राजा उच्चलस्तु भ्रष्टाचारान् कायस्थानघोविधिभि सोपहास दण्डितवान्—

स कार्यवेद हास्याय सभायं चारणोचितम् ।
अकारयद् भूतमिश्च धावन डोम्बघोषवत् ॥ राजत० ८ ९४
स प्रांशुदोष्टितश्मश्रुरुष्णीवेणोत्फलन् पुन ।
शूलहस्त सजानुक केपामासीन्न हास्यकृत् ॥ ८ ९५
स शीर्षदर्शन साम्यवादरोश्याविदान्वितम् ।
प्रियधोश्य च चिदग्ने नृत्तवाद्यमकारयत् ॥ ८ ९६
बध्वा-य शकटे नग्न क्षुरन्नूनाधमस्तकम् ।
अकारयत सटान्यस्तचीनपिष्टच्छटाङ्कितम् ॥ ८ ९७

## राजकीय आयः

राजकीय आय प्रथम कृषिपशुराजनादिभि समभवन् । अर्थशास्त्रानुसार बहवोऽध्यक्षा कृषिकर्मणे, पशुसवर्धनाय च नियुक्ता आसन् ।

ऋग्वेदानुसार राजा प्रजाभ्यो बलिमग्रहीत् । बलिग्रहणप्रथा परवर्तियुगेऽपि प्राय सदैव प्रचलिताऽभवन् । समृद्धिशालिभ्यो राजा विशेषधन प्राप्तवान् । भागदुघिति-राजपुरुष प्रजानामुत्पादितवस्तुभ्यो राजभागमगृह्णात् । प्रजानामश्वेषु गोषु च राजभाग समवर्तत । सग्रहीता राजकीयायस्य सग्रहाय नियुक्त । शत्रुविजया महाधनप्राप्तिद्वारमभवन् ।

महाभारतयुगे गणका राजकीयायस्य गणनामकुर्वन् । शुल्कोपजीविनस्तदा प्रजाभ्य शुल्कमगृह्णन् । आकरलवणशुल्कतरादिभ्य आयमार्गेभ्य समागतस्यायस्य शोधनममात्यै.

युतम् । शिल्पिभ्यो व्यापारिभ्यश्च पर्याप्त धनं करूपेण प्राप्तम् । महाभारते करनिर्धारण-सिद्धान्ता प्रकटिता —

> सवेद्य तु तथा राजा प्रणेया सतत करा ।
> नोच्छिन्द्यावात्मनो मूल परेषां चापि तृष्णया ॥
> ईहाद्वाराणि सरुध्य राजा सप्रीतदर्शन ।
> प्रद्विषन्ति परिख्यातं राजानमतिखादिनम् ॥ शान्ति० ८६.१८-१९

आयद्वाराणि तु—

> बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम् ।
> शास्त्रानीतेन लिप्सेथा वेतनेन धनागमम् ॥ शान्ति० ७१ १०

राजकीयकोशे रत्नादिर स्वर्णमुद्राश्च संगृहीतानि । कोष्ठागारेऽन्नवस्त्रकाष्ठादीनि सगृहीतानि ।

दिग्विजयेन राजसूययज्ञोपहारैश्च राजकोशस्य वृद्धि सञाता । युद्धार्थं यज्ञार्थं वा राजा स्वप्रजाभ्यो यथेच्छ धन बलादपि अगृह्णात् ।

मौर्ययुगे राजकीयायो ग्रामेभ्यो भागग्रहणेन, बलिग्रहणेनाभवत् । भूमेरुत्पादनस्य षष्ठांशो भागोऽभवत् । नागरिकेभ्यो जन्ममरणकालिक करेण राजकीय आयो बभूव । आपणेभ्यो विक्रयशुल्क सगृहीत । प्रजाभ्य उपहाररूपा पशुरत्नानि कौतुकागाराय प्राप्ता ।

गुप्तयुगे प्रमातार क्षेत्राणा माप कुर्वन्ति स्म, न्यायकरणिकाश्च भूमिकरविवादाना निर्णय कृतवन्त । ध्रुवाधिकरणो भूमिकरविभागस्याध्यक्षोऽभवत् । अक्षपटलिका महाक्षपटलिका, करणिकाश्च भूमिसम्बन्धिलेखाना निर्माण सग्रह च कुर्वन्ति स्म । शौल्किका शुल्कस्य, गौल्मिका वनोत्पत्तेरायस्याध्यक्षा बभूवु । भाण्डागाराधिकृतो राजकीयायस्य सर्वोच्चपदाधिकारी बभूव । दण्डरूपेण सामन्तानामुपहारेण च बहुलो राजकीयाय सम-भवत् । वाकाटकनृपाणामाय शाद्वलात्, चर्मण , दग्धकाष्ठात्, आकरात्, मद्यात्, गूढनिधे, निक्षेपात्, दुग्धात्, पुष्पात्, पशोश्च बभूव ।

भूमेर्योग्यतामनुसृत्य भूमिकरस्य मात्रा क्वचिन्निर्णीता । तथा हि चोलवशी नृप कुलोत्तुङ्ग उत्तमभूमिमधिकृत्य षष्ठं मध्यमभूमिमधिकृत्य च पञ्चमांशं कर गृहीतवान् । कतिपये राजानस्तीर्थयात्रिभ्य कर गृहीतवन्त । द्वादशशतके सिद्धराजोऽणहिलवाडस्य राजा सोमनाथस्य तीर्थयात्रिभ्य कर गृहीतवान् । कतिपये राजानो विवाहोपनयनादीनि करसाधनानि कृत्वा समृद्धिशालिनो भवितुमकामयन्त । निगूढ स्वामिरहित च धनं प्राय सर्वत्र राज्ञ एवाभवत् ।

सूत्रस्मृत्यनुसार भूमिकर भूम्युत्पत्ते $\frac{1}{6}$ $\frac{1}{8}$, $\frac{1}{12}$ वा, पशुकर पशुधनस्य$\frac{1}{50}$ बभूव । वृक्षमांसमधुघृतसुगन्धिरसौषधिपुष्पमूलफलपत्रशाकगोचरचर्मवंशादिभ्य षष्ठांशो राजकररूपेण गृहीत । विक्रेयवस्तूना मूल्यस्य $\frac{1}{20}$ भागो राजकीयशुल्करूपेण गृहीत ।

अर्थशास्त्रानुसारं सन्निधाता कोशगृहस्य, पण्यगृहस्य, कोष्ठागारस्य, कुप्यगृहस्य च निर्माणं कारितवान् । स रत्नादीनां परीक्षणं कारयित्वा तेषां सङ्ग्रहमकरोत् । समाहर्ता दुर्ग-राष्ट्राकर-सेतु-वन-व्रज-व्यापार-मार्गादिभ्यः आयसमायं समृहीतवान् । राज्ये सर्वत्र राजकीयायस्य सग्राहकाः नियुक्ताः । यदि तेषां दोषेण क्वचिद्राजकीयस्यायस्य हानिर्जाता तर्हि ते शीघ्रं दण्डार्हाः स्युः । आयवर्धकाः कर्मचारिणः पुरस्करणीयाः स्युः । अर्थशास्त्रानुसारं प्रजानामभ्युदयेनैव राजकीयायस्य संवर्धनं साधु ।[1]

कतिपयनृपाणामायः कुत्सितोपायैरभवत् । कश्मीराणां राजा हर्षो मन्दिर-लुण्ठनैस्तेषां मूर्तीनां धातोः विक्रयेण चायः कृतः । सर्वाणि मन्दिराणि सर्वाः मूर्तयश्चैतदर्थं तेन विध्वस्तानि । अन्येऽपि बहवो राजानः सूर्यस्य बुद्धस्य च ताम्रादिनिर्मितमूर्तीनां भञ्जनं कृत्वा विक्रयेणायं कृतवन्तः ।[2]

## राजकीयो व्ययः

राजकीयो व्ययः प्रायः सदैव प्रधानरूपेण राजपदप्रतिष्ठार्थं बभूव । सैन्यरक्षणार्थं युद्धार्थं शासनरक्षार्थं च शाश्वतरूपेण राजकीयायस्याधिकांशो विनियोजितः । राजसभासंरक्षार्थं महद् धनं व्ययितं राजभिः ।

राजकोशस्य पर्याप्तं धनं राजकुटुम्बस्य कृते वैदिकयुगे विसृष्टमासीत् । तदा न्यायाधीशेभ्यो गुप्तचरेभ्यश्च व्ययः कृतः । राजानः ऋषिभ्यो धनं दत्तवन्तः । प्रजायाः संरक्षणार्थं पोषणार्थं च राजधनमुपयोजितम् । राज्यस्य समृद्ध्यर्थं राजकीययज्ञविधानेषु बहुधनं व्ययितम् ।

वैदिकयुगात् पश्चात् राजाश्रितानां जनानां स्पष्टोल्लेखाः प्राचीनसाहित्ये वर्तन्ते । तथा हि—विद्वांसः, तपस्विनः, मुनयः, साधवः, दीनाः, अनाथाः, भिक्षुकाश्च राजभिः परिपालनीया इति समाम्नातम् । महाभारतानुसारं व्ययः आयस्यार्धादधिको न भवेत् । राजा कृपकस्य ऋणमदात् । सैन्यार्थं वेतनव्ययस्तत्रार्धादधिक एव ।[3] महाभारतानुसारमादर्शविधानमधोलिखितमासीत्—

हरेत् तद् द्रविणं राजन् धार्मिकः पृथिवीपतिः ।
तत् प्रीणयते लोकं न शोकं तद्विधं नृप ॥

---

1. प्रजाभमृद्धिश्चरित्रानुग्रहश्चोरनिग्रहो युक्तप्रतिषेधः सस्यसम्पत् पण्यबाहुल्यमुपसर्गप्रमोक्षः परिहारक्षयो हिरण्योपायनमिति कोशवृद्धिः । अर्थशास्त्रे २.८ ।
2. राज० ७.१०९०– १०९५, ७.११२६ ।
3. म० सभे १० ४२, म० भा० सभापर्वणि ५.४८.२२७, विराटपर्वणि १४.१७ शान्तिपर्वणि ४२. ११८.२, न्नोट

जयसिंह प्रजाना परिपालनार्थं तासा पितृभ्योऽपि अधिक आसीत् ।[1]

## वैदेशिकी नीतिः

अस्मिन्प्रकरणे भारतस्य विविधभागाना राज्ञा परस्पर सम्बन्धस्तेषा च भारताद्बहि राजभि सह सम्बन्धश्च निरूपणीयो । प्रथम तावद् व्यापारमधिकृत्य प्राचीनकालतो राज्ञा वैदेशिकनीतिर्व्यवस्थापिता । सर्वे राजान स्वदेशाद्वस्तूना निर्याताय परदेशेभ्यो वस्तूनामायाताय च सुव्यवस्था चक्रु । तत्तत्वं सिन्धुसभ्यतायुगात् समारब्धमिति प्रमीयते।

वैदिकयुगाद दिग्विजयद्वारा भारतस्य सर्वेषा राज्यानामेकसूत्रे प्रयत्न यथाकाल बभूव ।

वैदेशिकनीतौ चरदूतप्रणिधीना च महत्त्वमासीत् । दूतद्वारा परराष्ट्रेषु सन्देशा प्रेषिता, तेभ्य उत्तर प्रत्युत्तर च प्राप्तम् । चरा प्रणिधयश्च गुप्तरूपेण परराष्ट्रस्य वृत्तान्तान् प्राप्य स्वामिने न्यवेदयन् । युद्धकाले तेषा कार्याणि महत्त्व-पूर्णानि बभूवु । परराष्ट्राणा दुर्बलीकरणमपि तेषा गुप्तचराणा कार्यमासीत् ।

वैदेशिकनीतिपथेन भारतीया राजान स्वदेशस्य स्वतन्त्रतामक्षुण्णा कर्तुं यथाकाल समुद्यता बभूवु । तथा हि पश्चिमोत्तरप्रदेशस्य राजा आम्भिगुप्तो वैक्ट्रियाप्रदेशस्य पारसीकस्य राज्ञोऽलक्षेन्द्रविरोधे सहायीभूत ।[2]

ऐतिहासिकयुगे मौर्यस्य चन्द्रगुप्तस्य ग्रीकराजेन सिल्यूकसेन सह सन्धि सुविदित एव । सिल्यूकस स्वकन्या राज्यभाग च चन्द्रगुप्ताय प्रदाय सन्धि दृढीकृतवान् ।[3] चन्द्रगुप्तोऽपि ५०० हस्तिन सिल्यूकसाय प्रदत्तवान् । विदेशिना सौख्य विधातु सुव्यवस्था कृता मौर्यराज्ये । सिल्यूकसस्य प्रतिनिधिदूतो मेगस्थनीजश्चन्द्रगुप्तसभाया प्रतिष्ठित । सीरियाप्रदेशस्य राज्ञा डीमाकस इति ख्यात प्रतिनिधिदूत बिन्दुसारसभा समलमकरोत् । बिन्दुसारस्य ग्रीकदार्शनिकेषु महती रुचिरासीत् । इदमेवोद्दिश्य एन्थोल्स इति ख्यातो दार्शनिकस्तस्य सभासद् बभूव ।

अशोक परराष्ट्रै सह मैत्रीभावस्य प्रवर्तनार्थं सविशेष प्रायतत । भारतस्य चोलपाण्ड्यताम्रपर्णीप्रदेशाना राजभि सह भारताद् बहि सीरियाप्रदेशस्यान्तिओकसेन, मिश्र-

१ राजत० ८ २४०५-२४०७ । महाराज उच्चलस्तु रोगिभ्यो निदान वृत्तिहीनेभ्यो जीविका च प्रायच्छत् । राजत० ८ ७४ । अवन्तिवर्मा तु महादानशालाऽभवत् । ५ १६ १८ ।

२ Cambridge History of India Vol I p 350

३ दर्पवितुगे कश्मीरको महाराज कन्या नोडपुरस्य राजतनया परिणीय रहसि दूतीरचारै र्विकर्णराज्यस्य तनया च नोडपुरस्थो ।

टप्पा गुप्तचरास्तस्य रिपो इव मवाऽभवत् ॥ राजत० ५ ५८२ ।

रस्य टालेमीद्वितीयेन, अफ्रीकमहाद्वीपस्य काईरीनस्य मगसेन, मेसीडोनियाप्रदेशस्य अन्तिगोनसेन, इपिरसप्रदेशस्यालेक्जेन्डरेण सह मैत्रीपूर्णसद्भावना सम्प्रतिष्ठापिता। अशोकः सर्वेभ्यो राजभ्यः शान्तिमयजीवनस्य सन्देशं प्रेषितवान्। तेषां राज्येषु अशोकसाहाय्येनात्मुद्दयायोजनानि परिणतफलानि संजातानि। अत्र धर्मविजयो दिग्विजयस्य स्थानेऽशोकेन स्वीकृतः।

परवर्तिगुप्तैरपि बहवो राजानोऽशोकपदस्यानुसरणं कृतवन्तः। ग्रीकराजानां दूता भारते समागताः। रोमकराजेन्द्रश्चीनकराजेन्द्रश्च भारतीय राजाभ्यो बहुमूल्यमुपहारं प्रेषितवन्तः।

वैवाहिकसम्बन्धेन राज्ञां परस्परसम्प्रतिष्ठापनस्य नीतिः प्रचलितासीत्। गुप्तराजानां शक्तिर्लिच्छविराजवंशेन सह वैवाहिकसम्बन्धेन संवर्धिता। समुद्रगुप्तः शकनृपतिभ्यो राजन्य-कन्योपायनं प्राप्तवान्। गुप्तानां महासान्धिविग्रहिकः सचिवः परराष्ट्राणां गतिविधिसन्तोलनाय बभूव। राजदूतानां परम्परा पूर्ववत् सन्तता बभूव।

ख्रीष्टाब्दस्य पश्चात् सप्तमे शतके हर्षवर्धनस्य चीनदेशराजेन सह सौहार्दसम्बन्ध आसीत्। तस्मिन्नेव चालुक्यवंशस्य पुलकेशिनो राजसभायां पारसीकराजदूताः समागताः।

ख्रीष्टस्य पश्चात् द्वितीयशताब्दादारभ्य भारतीयविजेतृणां प्रवृत्तिः बृहत्तरभारताभिमुखी बभूव। तत्र प्रभृति पञ्चदशशतकं यावत् कम्बोडिया-अन्नम-सुमात्रा-जावा-बालि-बोर्नियोप्रदेशेषु भारतीयानां राज्यानि प्रतिष्ठापितानि। इण्डोचाइनाप्रदेशे चम्पा-कम्बुजोपनिवेशौ सम्स्थापितौ। ख्रीष्टतः पञ्चदशशतकपर्यन्तं बृहत्तरभारते भारतीयानां प्रभावोऽतिष्ठत। एतेषु देशेषु शैलेन्द्राणां श्रीविजयानां च राज्यं समभवत्।

भारतस्य कतिपयराजानां भारताद् बहिः एशियामहाद्वीपस्य पश्चिमे भागे विजयं चक्रुः। तद्यथा गजसिंहो विजयप्राप्त्यनन्तरं सम्प्रधार्यसंनेत गजनी इति ख्याता पुरीं संस्थापयामास।[1]

## गणतन्त्राणि राज्यानि

गणतन्त्रराज्यानां शासनं प्रजातन्त्रात्मकमभवत्। ख्रीष्टस्य प्राक् सप्तशताब्दादारभ्य ख्रीष्टस्य पश्चात् चतुर्थशताब्दपर्यन्तं गणतन्त्राणां विशेषाभ्युदयोऽभूत्। भारतस्योत्तरपूर्वे उत्तरपश्चिमे च भागे गणराज्यानां प्रायशः सत्ता बभूव। पञ्चनदप्रदेशे सिन्धुदेशे च वृक-दामनि-पार्श्व-काम्बोजानां गणाः संस्थापिताः। ख्रीष्टात् प्राक् पञ्चमे शताब्दे त्रिगर्तषष्ठानां गणराज्यं पाणिनिनोल्लिखितम्। ततः पश्चात् जयपुरस्य समीपस्थमर्जुनायनं गणराज्यं

१. Tod's Rajasthan Vol II p 222

ख्रीष्टस्य पश्चात् चतुर्थशताब्दपर्यन्तमासीत् । यौधेयानां गणराज्यं पञ्चनदप्रदेशे उत्तरप्रदेशे च विस्तृतमासीत् । पञ्चनदप्रदेशस्य केन्द्रभागे मद्राणां गणराज्यमभवत् । मद्रा मालवा क्षुद्रकाश्चेति गणराज्याधिष्ठिता अलक्षेन्द्रस्य विरोधं युद्धस्थले कृतवन्तः ।

अलक्षेन्द्रस्याक्रमणकाले अगेसिनाद्नां सिवीनां च गणराज्ये बभूवतुः । प्रायः समकालिकमेवाम्बष्ठानां गणराज्यं तत्रासीत् ।

द्वारिकायां महाभारतानुसारमन्धकवृष्णीनां गणराज्यसंघोऽभवत् । कृष्णः प्राचीनयुगे तस्य गणराज्यस्य प्रधान आसीत् ।

उत्तरप्रदेशस्य पूर्वभागेषु बिहारस्योत्तरभागेषु च भग्ग-बुली-कोलिय-मोरियाणि लघुगणराज्यानि बभूवुः । तत्रैव शाक्यानां मल्लानां लिच्छवीनां विदेहानां च गणराज्यानि बभूवुः । एतानि गणराज्यानि गौतमबुद्धस्य समकालिकान्येवासन् ।

गणतन्त्राणां शासनं सभासदां समित्या कृतम् । समिते: प्रधानकेन्द्रं राजधान्यामेवासीत् । सभासदः प्रजानां सुखशान्तिसमृद्ध्यर्थं कर्मचारिणां नियुक्तिं कुर्वन्ति स्म । नगराणां ग्रामाणां च शासनं स्थानीयपञ्चायतैः कृतम् । बृहद्गणराज्येषु राजधान्यां केन्द्रीयसमितिः प्रतिष्ठिता बभूव । तेषां विविधप्रदेशेषु शासनकर्म स्थानीयसमितिभिरायोजितम् । गणराज्यसमितिषु सदस्यानां सङ्ख्या क्वचित् ७००० पर्यन्ता बभूव । एताः समितयो युद्धार्थं सेनापतेर्निर्वाचनं चक्रुः, सन्धिविग्रहनिर्णयमकुर्वंश्च । राष्ट्रस्याभ्युदयायोजनस्य समस्यास्ताभिरेव समाहिताः ।

प्रत्येकस्य गणस्यैकोऽध्यक्षोऽभवत् । स स्वगणस्य मन्त्रिमण्डलस्य प्रधानोऽभवत् । मन्त्रिणां सङ्ख्याऽऽवश्यकतानुसारं विंशतिपर्यन्ता बभूव । मन्त्रिणां निर्वाचनं समित्या कृतम् । परराष्ट्र-कोष-न्याय-दण्ड-कर-व्यापारोद्योगादिषु प्रत्येकस्य विभागस्य मन्त्री बभूव । मन्त्रिणामध्यक्षत्वे तेषां विभागानां कर्मचारिणः कर्म कुर्वन्ति स्म ।

भारतीयेतिहासे गणराज्यानां स्थानं महत्त्वपूर्णं प्रतिभाति ।[1] गणराज्येषु विकसिता शासनपद्धतिः प्राचीनयुगे राष्ट्रस्य सर्वतोमुखोन्नतये बभूव । अर्थशास्त्रानुसारं 'सङ्घा हि संहतत्वादधृष्याः परेषाम्' । तद्गणराज्यसंघविषयकं सत्यम् । गणराज्यसङ्घैः अलक्षेन्द्रस्याक्रमणावरोधः साफल्येन कृत इति गणानां देशप्रेम, जातिप्रेम, स्वातन्त्र्यं च निदर्शयति ।

---

१ गणतन्त्रराज्यस्य माहात्म्यं विज्ञापयन् टामस पेन महोदयः कथयति—

Individuals themselves each in his own personal and sovereign right, entered into a compact, with each other to produce a government, and this is the only mode in which government have a right to arise, and the only principle on which they have a right to exist

Gallery of Famous American Writers p. 4

## सुराज्यादर्शः

पुरा भारते आदर्शरामराज्यस्य या कल्पना कृता सा यशस्करस्य सुशासनेन प्रत्यक्षम-नुभूतेति कल्हणेनादर्शीकृता राजव्यवस्था—

अचोरामूत्तया भूमिर्यथा रात्रौ वणिक्पथा ।
अतिष्ठन् विवृतद्वारा मार्गाश्चाविघ्निताध्वगा ॥
प्रयत्नेनापरे तस्मिन्नासीन् सर्वापहारिणाम् ।
कृष्यव्यासक्तमुत्सृज्य कृत्य नान्यन्नियोगिनाम् ॥
ग्राम्या कृषिपराधीना नापश्यन्राजमन्दिरम् ।
विप्रा स्वाध्यायसंसक्ता नाकुर्वञ्शस्त्रधारणम् ॥
न विप्रगुरव साम गायन्तो मदिरा पपु ।
न तापसा पुत्रदारपशुधान्यान्यढौकयन् ॥
न मूर्खगुरवो मत्स्यापूपधार्मविधायिन ।
चक्रिरे स्वकृतैर्ग्रन्थैस्तर्कागमपरीक्षणम् ॥
नादूषयन्त च गेहिन्यो गुरुदीक्षोत्सवेऽबला ।
कुर्वाणा भर्तृशीर्षीनिषेध मूर्धधूननं ॥
कार्तान्तिको भिषक्सभ्यो गुरुर्मन्त्री पुरोहित ।
दूत स्थेयो लेखको वा न तदाभूदपण्डित ॥ राजत० ६ ७-१३



# दार्शनिकप्रवृत्तयः

इह जगति जीवनकाले सुखलाभाय कथं व्यवहर्तव्यमिति मानवाः स्वज्ञानानुरूपमेव निर्धारयन्ति। पञ्चभूतमये भौतिकजगति पशूनामप्यैन्द्रियकसुखलाभः सम्भवति। विज्ञानजनितेन नैसर्गिकेनैश्वर्येण सूक्ष्माण्यैन्द्रियकसुखानि मानवेभ्यः सुलभानि भवन्ति। रसवृत्त्या काव्यकलाशिल्पादीनामानन्दः प्राप्यते। एतेभ्यः परः परमानन्दो योगैरध्यात्मज्ञानैश्च लभ्यते। योगस्याध्यात्मज्ञानस्य च भूमिका दर्शनेन निर्मीयते। किं तद्दर्शनम्?

जगतो यदाध्यात्मिकमाधिभौतिकं वा स्वरूपं तस्य ज्ञानमेव दर्शनम्। तस्य ज्ञानस्य प्राप्ते प्रक्रियापि दर्शनमेव। दर्शनस्य प्रकाशे मानवः स्वजीवनोद्देश्यं कर्तव्यपथं च विचिनुते। यत् किंचिद्विज्ञानं विवेचयति तदेव सकलय्य दर्शनमुपसंहरति।[1]

दर्शनस्य प्रथमालोकः सिन्धुसभ्यताया योगिमूर्त्यां प्रमीयते। योगी समाधिस्थो वर्तते।

## वैदिकदर्शनम्

आत्मविषयकः प्रथमो मन्त्रः ऋग्वेदे पठ्यते—

> द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
> तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥ १.१६४.२०

मन्त्रेणानेन व्यज्यते यदात्मा भोगपरायणो वर्तते परमात्मा च द्रष्टा भवति। अपरं च—

> सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा॥ १०.१२९.४

प्रकृतिर्ब्रह्म परिष्कलामस्यनेन मनीषिणा ब्रह्मसम्बन्धि-विचारणा प्रतीयते।

वैदिकविचारणायां 'पुरुष' 'एकदेव' वा स्थूलप्रकृतेः परो मतः। एतद्देवाधिकृत्य ऋषिणा प्रोक्तम्—

> इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
> एकं सद् विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः॥ १.१६४.४६

---

1. Science sorts out while philosophy sums up Radhakrishnan, Indian Philosophy, Vol I, p 176.

एकस्मात् सतो बहूनामात्मिका वृत्तिर्विकासपथे प्रवर्तिता। एकपुरुषस्तामधीशत इति प्रमीयत अधोलिखितमन्त्रेण—

इय विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न।
यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेद॥ १०.१२९.७

स एव हिरण्यगर्भः—आत्मदा, बलदा, सत्यधर्मेति प्रख्याति।[1] ऋग्वेदेऽमृतत्वस्य समीहासीत्। तद्यथा—

जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम्।५.४.१०

मरणानन्तरं पितृभिः सह मिलनमभवदथवा पुनर्जन्मवनूर्वैति ऋषिभिः परिणमितम्। परवर्तिवैदिकयुगे मुक्ते कल्पना सम्यक् स्पष्टीकृता। तथा हि—विद्यया तदारोहन्ति यत्र कामाः परागताः।[2] अमृतामृत्यु निवर्तते।[3]

## उपनिषद्दर्शनम्

वैदिककाले दार्शनिकानामपरं नाम विश्वविन्द् प्रतिभासते। तेषां रहस्यगोष्ठीं वर्णयन् कवि प्राह—

मन्त्रयन्ते दिवोऽमुष्य पृष्ठे विश्वविदो वाचमविश्वविन्नाम्। ऋ॰ १.१६४.१०

अथर्ववेदे आत्मनो ब्रह्मणश्च सम्यग्विवेचनं प्रारब्धम्। तस्मादेव ब्रह्मणः स्कम्भाद् वा तप ऋत यत श्रद्धा सत्यं वायु चन्द्रमा भूमिरन्तरिक्ष द्यौश्च प्रवर्तितम्। स्कम्भेऽस्मिन् सदसतोरन्त स्यात्। तत्रैवामरता मरणशीलता वा विद्यते।[4] स एव स्कम्भ आत्मा वा यक्षो वा शरीरे निवसतीति व्याख्यातम्। तद्यथा—

पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम्।
तस्मिन्यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः॥ १०.८.४३

ब्रह्मापिद्वयाथर्ववेदे निरूपितम्—

शतं सहस्रमयुतं न्यर्बुदमसंख्येयं स्वमस्मिन्निविष्टम्। १०.८.२४
त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः। १०.८.२७

---

१ ऋग्वेदे १.१२१
२ शतपथब्राह्मण १०.५.४.१६।
३ श॰ ब्रा॰ १०.२.६.१९।
४ अथर्ववेदे १०.७।

> पूर्णात्पूर्णमुदचति पूर्णं पूर्णेन सिच्यते ।
> उतो तदद्य विद्याम यतस्तत् परिषिच्यते ॥ १० ८.२९

अथर्ववेदानुसारं तु मरणानन्तरं स्त्रीपुत्रादिभिः सहात्मनो मिलनं भवति ।[1]

निष्कामकर्मयोगस्य प्रथमप्रतिष्ठाथर्ववेदे वर्तते । तदनुसारमात्मा ( ब्रह्म ) अकामो भवति ।[2]

## उपनिषद्दर्शनम्

उपनिषद्युगे पराविद्या ब्रह्मविद्या वा सम्प्रतिष्ठिता बभूव । तद्यथा—ऐन्द्रियकसुखानुरक्तो जन इन्द्रियग्राह्याणि वस्तूनि प्राप्नोति भुनक्ति च, तथैवेन्द्रियेभ्यः परेणात्मना परमात्मनो ब्रह्मणो वा ग्रहणं भोगश्च क्रियेते । तत् ब्रह्म ज्ञेयम् ।

"सर्वं खल्विदं ब्रह्म । मनोमयः, प्राणशरीरः, भारूपः, सत्यसंकल्पः, आकाशात्मा, सर्वकर्मा, सर्वकामः, सर्वगन्धः, सर्वरसः, सर्वमिदमभ्यात्तोऽवाक्यनादरः एष म आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः । एतद्ब्रह्म ।"[3] ब्रह्मैव सम्भावयितव्यम् । तत्कथम्—इतः प्रेत्याभिसम्भवितास्मीति । अस्मै प्रयोजनाय साधनं विहितम्—

> क्रतुमयः पुरुषः । यथा क्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति ।[4]

ब्रह्मणो ज्ञानेन ध्यानेन च ब्रह्ममयत्वं सिध्यति । तस्मिन् सिद्धे केवलं ब्रह्मानन्द एवानुभूयते । तदा सर्वे सांसारिकव्यवहारा निष्प्रयोजना भवन्ति ।[5]

## मरणोत्तरविधानम्

मरणानन्तरं काले यदि ब्रह्ममयत्वं न सिध्यति तर्हि नवशरीरं प्राप्यते । तद्यथा—तृणजलायुका तृणस्यान्तं गत्वान्यमाक्रममाक्रम्यात्मानमुपसंहरति एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यमाक्रममाक्रम्यात्मानमुपसंहरति । तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुते एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वान्येषां वा भूतानाम् ।[6]

---

१ अथर्व० ६ १२० ३ ।
२ अथर्व० १० ८ ४४ ।
३ छा उ ३ १४ २ ४ ।
४ छान्दोग्योपनिषदि ३ १४ १-४
५ बृहदारण्यके ४ ३ २२ ३२ ।
६ बृहदारण्यके ४ ४ ३-४ ।

अपरं च—निष्कामस्य पुरुषस्य पुनर्जन्म न विद्यते । स ब्रह्मैव सन् ब्रह्माप्येति । तथा हि—

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥

पुनर्जन्मसिद्धान्त प्रतिष्ठित —

काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति । यत्क्रतुर्भवति तत्कर्म कुरुते । यत्कर्म कुरुते तदभिसम्पद्यते ।[1]

## सृष्टिसमारम्भ

छान्दोग्योपनिषदि सृष्टिकथा विद्यते । तदनुसारं प्रथमं 'सत्' आसीदेकमेवाद्वितीयम् । सत सृष्टिपरम्परारब्धा । सत तेज, तेजस आप, अद्भ्य अन्नमिति । अन्नमयं मन आपोमयः प्राणः तेजोमयी वागिति ।[2] अन्यत्र—आत्मा एवेदमग्रे आसीत् एकाकी । स द्वितीयमैच्छत् । स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नी चाभवताम् । ततो मनुष्या अजायन्त । पश्चादात्मन एव यदिदं किंच मिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजत ।[3] आत्मन एव सर्वे देवा सर्वे वर्णा सृष्टा ।[4]

उपनिषद्युगस्य पश्चात् भारतीयदर्शनस्य द्वे प्रमुखधारे प्रवृत्ते, वैदिकी अवैदिकी च । अनयोः प्रथमा वेदान् प्रमाणरूपेण गृह्णाति, द्वितीया च वेदानामुपेक्षां कदाचित् कुरुते । वैदिकधारायाः षट्शाखा—न्यायः, वैशेषिकम्, सांख्यः, योगः, मीमांसा, वेदान्तश्च सन्ति । अवैदिकधारायाश्चार्वाकबौद्धजैनाश्च वर्तन्ते ।

चार्वाकान्परित्यज्य सर्वेऽपि भारतीयदार्शनिका मरणानन्तरं मोक्षस्वर्गपुनर्जन्मगतीः विश्वसन्ति । मोक्षस्य स्वर्गस्य च प्राप्तये उपायांस्ते विभावयन्ति । जैनबौद्धदर्शनेषूपनिषदां प्रभावो वरीवर्ति । उपनिषद्वत् ज्ञानमेव सोपानं कृत्वा तपसा समाधिना चाभ्युदय-करणं सर्वोऽपवर्गश्चेति जैनैर्बौद्धैश्च विशदीकृतम् ।

# षड्दर्शनम्

## प्रमाणं ज्ञानं च

उपरिदृष्टदर्शनपद्धतौ सत्यासत्ययोः स्वरूपं निर्णेतव्यम् । वस्तूनां सत्यस्वरूपस्य ज्ञानं प्रमा ।[5] तत्करणं प्रमाणम् । प्रमाणानां न्यायदर्शनानुसारं चतुर्विभागा भवन्ति—प्रत्य-

---

१ बृहदारण्यके ४ ४ ६–७ ।
२ छान्दोग्योपनिषदि ६ २–५ ।
३ बृहदारण्यके १ ४ १, ३,४ ।    ४ बृहदारण्यके १ ४ ६,११ ।
५, तद्वति तत्प्रकारकोऽनुभवः प्रमा । यथा रजते इदं रजतमिति ज्ञानम् ।

क्षम्, अनुमानम्, उपमानम्, शब्दश्च । प्रायः सर्वेषु भारतीयदर्शनेषु प्रमाणानां प्राधान्यं सकलपदार्थव्यवस्थापकत्वेन विद्यते, तथापि न्यायदर्शने प्रमाणानां विशेषाग्रहः ।[1]

प्रत्यक्षं तावत्—इन्द्रियाणामर्थैः सन्निकर्षमपेक्षते । अनेन सन्निकर्षेण ज्ञानं भवति । तद् ज्ञानं नामजातिरहितं ( निर्विकल्पकं ) भ्रमभिन्नम्, व्यवसायात्मकं ( सविकल्पकं ) च भवति ।[2] तत्र प्रत्यक्षज्ञानानां तालिका स्पष्टीकरणाय—




तेषु योगजं प्रत्यक्षं योगिनामेव गम्यम् । तदतीन्द्रियविषयाणामेव भवति ।

अनुमानं प्रत्यक्षपूर्वकं भवति । तत् त्रिविधम्—पूर्ववत्, शेषवत्, सामान्यतो दृष्टं च । अनुमानाय परामर्शः—व्याप्तिः लिङ्गं ( हेतुः ) चापेक्षितं । तर्हि साधनमेवानुमानं तेनोत्पन्नं ज्ञानमनुमितिः । अनुमितिगमनप्रक्रिया तु परामर्शः । अस्मिन् प्रसङ्गे न्यायस्य पञ्चावयवाः—प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनं च विद्यन्ते ।[3]

---

१ वात्स्यायनानुसारं प्रमाणैरर्थपरीक्षणं न्यायः ।

२ इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ।

३ हेत्वाभासेभ्यः पक्षसपक्षविपक्षाणामपेक्षा भवते । पक्षे साध्यस्यास्तित्वविषयकः सन्देहः । सपक्षे साध्यास्तित्वं सिद्धमेव निष्पन्नत्वात्, विपक्षे साध्यं न विद्यते तर्हि हेतुः नास्ति । यथा पर्वतः, सपक्षः महानसम्, विपक्षः जलाशयः । पर्वते धूमो वर्तते किन्तु तत्राग्निरस्ति नास्ति वा सन्देहः । महानसे धूमो वर्तते तत्रोऽग्निरपि नित्यं दृश्यते धूमेन सह । अग्निरूपस्य व्याप्तिः भवते । जलाशये ऽग्निर्नास्ति तत्र धूमो नास्ति । तत्र व्यतिरेकव्याप्तिरनुमेया ।

प्रतिज्ञा—पर्वतो वह्निमान् ।

हेतु —धूमात् ।

उदाहरणम्—यत्र यत्र धूम तत्र तत्र वह्नि, अथवा यो यो धूमवान् स स वह्निमान् ।[1] यथा महानस ।

उपनय —वह्निव्याप्यधूमवानयं पर्वत ।

निगमनम्—तस्माद्वह्निमान्पर्वत ।

इद सामान्यतो दृष्टमनुमानम् ।

पूर्ववदनुमानप्रक्रियाया पूर्वं ( कारण ) दृष्ट्वा तस्य कार्यमनुमीयते । यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानम् । शेष कार्यम् तल्लिङ्गकमनुमान शेषवत् । यथा नदीवृद्ध्या वृष्ट्यनुमानम् ।

प्रत्यक्षेण केवल वर्तमान वस्तु ज्ञायते । अनुमानेन सदसत् सर्वं ज्ञायते । तथा हि वात्स्यायन —त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते । भविष्यतीत्यनुमीयते, भवतीति चाभूदिति च, असच्च खल्वतीतमनागतं चेति ।

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ।[2] गोसदृशत्वेन गवयज्ञानमुपमानेन भवति ।

आप्तोपदेश शब्द । यथा वेदवचनम् । आप्तस्तु यथार्थवक्ता ।

सांख्या उपमानप्रमाण न स्वीकुर्वन्ति । यथा गौस्तथा गवय इत्यपि अनुमानमेव । न्यायदर्शने मनसा प्रसूत ज्ञानमात्मन एव भवति, किन्तु सांख्यदर्शने ज्ञान बुद्धिव्यापार एव । पुरुषे तु बुद्धिकृतज्ञान केवल प्रतिबिम्बितमेव भवति । सांख्यस्याप्तवचनपरिधौ वेदेतिहासस्मृत्यादिभि सह कपिलवचनमपि गृहीतम् । योगदर्शने सांख्यप्रमाणानि सम्मतान्येव । किन्तु तत्र बुद्धिगृहीतज्ञान सम्यङ् न सम्मतम्, बुद्धे प्रकृतित्वात् । सत्यस्य ज्ञान योगदर्शने योगेनैव सम्भाव्यम् ।

पूर्वमीमांसकैरादौ त्रीणि प्रमाणानि—प्रत्यक्षानुमानशब्दा इति स्वीकृतम् । परवर्तियुगे कुमारिलस्तु उपमानार्थापत्त्यनुपलब्धीनां प्रामाण्य साधितवान् ।[3] प्रभाकरेणानुपलब्धे प्रमाणत्वं खण्डितम् । योगजज्ञानस्य मीमांसाया ग्रहणं नास्ति । यन्नैयायिका योगप्रवणा वा योगिन जानन्ति तत् सर्वमाप्तवचनेन तत्र प्रमाणितमेव ।

वेदानुसारं श्रुति प्रत्यक्षमेव । पुराणेतिहासस्मृत्यादयश्चानुमानम् । त्रीणि षड् वा प्रमाणानि वेदान्तिभि स्वीकृतानि ।[4] वेदान्तानुसारं ब्रह्मेतरतर्कज्ञेया भवतु नाम, किन्तु ब्रह्म-

---

१ स्वार्थनिदर्शनमिदम् ।

२ प्रसिद्धस्य पूर्वज्ञातस्य गवाद साधर्म्यात् सादृश्यात् साध्यस्य गवादिपदवाच्यत्वस्य साधनं सिद्धि ।

३ अर्थापत्ति—पीनो देवदत्तो दिवा न भुङ्क्ते अतएव रात्रौ भुङ्क्ते इति अर्थापत्ति । यदि क्वचिद् घटो न विद्यते तर्हि घटाभावोऽनुपलब्धिप्रमाणेन ज्ञातो भवतीति मीमांसका ।

४ वैदान्तिकास्त्रीणि प्रमाणानि प्रत्यक्षानुमानशब्दाख्यानि मन्यन्ते । शाङ्करास्तु व्यवहारे भाट्टनयेनापराणि त्रीण्यपि स्वीकुर्वन्ति ।

ज्ञान तु शास्त्रेणैव सिध्यति। शङ्करानुसार तर्कोऽविद्या। तर्केण ब्रह्म न ज्ञातव्यम्। अनुभवेन ब्रह्म ज्ञात भवति। अविद्याग्रस्त पुरुषो ब्रह्म जगदिव पश्यति।

## प्रमेयाणि

न्यायदर्शने—आत्मा, शरीरम्, इन्द्रियम्, अर्थ, बुद्धि, मन, प्रवृत्ति, दोष, प्रेत्यभाव, फल, दुःखम्, अपवर्गश्च प्रमेयम्।[1] वैशेषिकदर्शने—द्रव्यम्,[2] गुण, कर्म, सामान्यम्, विशेष, समवाय, अभावश्च प्रमेयम्। साङ्ख्ये पुरुष प्रकृतिश्च ज्ञेयो वर्तते।[3] पूर्वमीमासाया द्रव्यम्, गुण, कर्म, सामान्यम्, परतन्त्रता, शक्ति, सादृश्यम्, सङ्ख्या च प्रमेयम्। रामानुजस्य विशिष्टाद्वैते द्रव्यमद्रव्य च प्रमेयमिति सम्मतम्। सर्वेषा दर्शनाना प्रमेयेषु—आत्मा, मन, मोक्षश्च सविशेष प्रतिभान्ति।

## आत्मपुरुषजीवादय

न्यायदर्शनेऽनुमानेनात्मनोऽस्तित्व प्रमाणीकृतम्। वेदवचनैस्तदनुमोदित च। येषाञ्चिन्मते आत्मा मानसप्रत्यक्षगम्यो भवति। जिज्ञासा ज्ञान चात्मन एव भवति[4], स एवात्माऽस्माक जीवनविन्यासस्य सयोजक।

ये तु स्वभाववादिन शरीरमेव ज्ञानाधिष्ठान मन्यन्ते तेषा समक्षमात्मविरहिते मृते शरीरे ज्ञानस्याभावेन आत्मनो ज्ञानाधिष्ठानत्वमिति प्रमाणितम्। अपर च—इन्द्रियाणि साधनानि। कार्यं कर्तुं न केवल साधनानि समर्थानि, अपितु कर्ता साधनै कार्याणि करोति। अत एव कथितम्—

आत्मेन्द्रियाद्यधिष्ठाता करण हि सकर्तृकम्॥ भाषापरिच्छेदे ४७
शरीरस्य न चैतन्य मृतेषु व्यभिचारत।
तथात्व चेदिन्द्रियाणामुपघाते कथ स्मृति॥ तत्रैव ४८
मनोऽपि न तथा ज्ञानाद्यनध्यक्ष तदा भवेत।

आत्मा धर्मस्याधर्मस्य चाश्रय। अतो देहान्तरप्राप्तौ पूर्वजन्मना धर्माधर्मयो फलानि

---

१ पंचभूताना गुणा—गन्धादय अर्थ इति। मनस्तु इन्द्रियै पुरस्कृत ज्ञानमात्मने प्रयच्छति। वाच बुद्धे, शरीरस्य च व्यापारा प्रवृत्तय। दोषास्तु प्रवृत्तीनामुत्पादका। मरणोत्तरं जन्मग्रहणमेव प्रेत्यभाव। फलं तु सुखदुःखानुवेदनम्, बाधनालक्षणं दुःखम्।

२ द्रव्य तु पंचभूतानि काल, दिक्, आत्मा, मनश्च। गुणाना सख्यातो १७—रूपम्, रस, गन्ध स्पर्श सख्या परिमाण, पृथक्त्वम्, संयोग, विभाग, परत्वापरत्वे, बुद्धि, सुखदुःखे, इच्छा, द्वेष, प्रयत्नश्च। कर्माणि—उत्क्षेपणम्, अवक्षेपणम्, आकुञ्चनम्, प्रसारणम्, गमन च। अनेकव्यक्तिषु सामान्य प्रत्यय कारण सामान्यमेव। विशेषेण एक परमाणुरपरस्मात् भिन्न। अनेन विशेषेण विशिष्टमिद वैशेषिक दर्शनम्। अवयवावयविना गुणगुणिना सम्बन्ध समवाय।

३. प्रकृते क्रमश विकारा—महत्, अहंकार, मन, पंचज्ञानेन्द्रियाणि कर्मेन्द्रियपंचक मात्रा, महाभूतानि च सन्ति। पुरुषेण सह तत्त्वानि पंचविंशति सन्ति।

४ इच्छा द्वेष प्रयत्न सुखदुःखज्ञानान्यात्मनो लिङ्गम्। न्यायसूत्रे १ १ १०।

सम्यग्ज्ञानाधिगमात् धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमवत् धृतशरीरः ॥ ६२-६७

अनेन प्रकारेण जीवनकालेऽपि मुक्तिः प्राप्यते । मरणानन्तरं तु जीवन्मुक्तः कैवल्यं ( पूर्णमोक्षं ) अश्नुते ।[1]

योगानुसारं सम्यग्दर्शनेन प्रकृतिपाशेभ्यः पुरुषस्य मुक्तिः सम्भवति । प्रकृतेः चित्तरूपं पुरुषं बध्नाति । चित्तवृत्तिनिरोधायाष्टाङ्गिको योगमार्गः ससाधनीयः । यावत्कालं चित्तं कार्यपरं भवति तावदेव पुरुषः संसारी भवति, अन्यथा पुरुषाय संसारस्यास्तित्वमपि न विद्यते ।

समाधिसम्पन्नो योगी कर्मक्षयमारभते । त्रिविधानि कर्माणि—प्रारब्धानि, सञ्चितानि, आगामीनि च भवन्ति । ईश्वरभक्त्या समाजसेवया चागामिकर्मभ्यो निवृत्तिर्भवति । मुक्तिमार्गे कर्माण्येव बन्धनानि ।

मीमांसायाः प्रारम्भिकयुगे मुक्तेः कल्पना स्पष्टा नासीत् । तदा यज्ञादिभिः स्वर्गगतिरेवाभीष्टमितिसम्मतमासीत् । परिवर्तितयुगे प्रभाकरो धर्माधर्मविरहितस्यात्मनो मोक्षगतिं निर्दिशति स्म । तत्रापि मोक्षाय शमदमब्रह्मचर्यादिनात्मज्ञानप्राप्तिरेव साधनं स्वीकृतम् । मीमांसानुसारं मोक्षावस्थायामात्मा शुद्धरूपे वर्तते, निर्द्वन्द्वश्च भवति ।

वेदान्तानुसारं ब्रह्मनिष्ठो मोक्षं लभते । उभयथा जीवन्मुक्ता विदेहमुक्ताश्च ब्रह्मनिष्ठा भवन्ति । यदा जीवनकाले व्यावहारिकदृष्टिर्न वर्तते तर्हि जीवन्मुक्तस्य दृष्टिः पारमार्थिकी भवति । मोक्षावस्थायामात्मा पारमार्थिकः, कूटस्थो नित्यः, आकाशवत् सर्वव्यापी सर्वविक्रियारहितो नित्यतृप्तो निरवयवः स्वयंज्योतिःस्वभावो भवति । जीवन्मुक्तः सर्वं ब्रह्मवत्पश्यति । मुक्तः स आत्मा ब्रह्मणा तादात्म्यं लभते ।

रामानुजाचार्यस्य विशिष्टाद्वैते भक्तिर्मुक्तये प्रधानसाधनं समाज्ञाता । त एव भक्ता भवितुमर्हन्ति ये निष्कामकर्मयोगेन हृदयस्य परिशोधनं कृत्वा भगवतोऽन्तर्यामिस्वरूपं विभावयन्ति । भक्तेः सम्पूर्णतैव मुक्तिः । उभयथा भक्तो परमसोपानं प्रपत्तिः । प्रपत्तिस्तु भगवति विलीनत्वमेव । आत्मनः स्वतन्त्रसत्ता मुक्तावस्थायामपि वर्तते । मुक्तात्मा सर्वज्ञः सन् सदैवेश्वरानुभूतिं करोति । मुक्तात्माऽणुरूपो भवति । ब्रह्म तु सर्वव्यापी विभुरेव । एतदेव तयोरन्तरम् । सृष्टि-व्यापारे मुक्तात्मनः कर्तृत्वं नास्ति ।

ब्रह्मलोकेऽसंख्या मुक्तात्मानो विद्यन्ते । ते विशुद्धसत्त्वमयाः सन्ति । सत्त्वैरेव ते निजविचारस्येच्छायाश्च स्वरूपं विरचयन्ति । भक्तिमार्गेण मुक्ता आत्मानो भक्तौ रता भवन्ति । ध्यानोपासनादिभिर्मुक्ता आत्मान ऐकान्तिका वैराग्यिणो भवन्ति ।

---

१ वैष्णववेदान्तिनो जीवन्मुक्तिं न मन्यन्ते ।

## सृष्टे रहस्यम्

न्यायानुसारमीश्वरः सृष्टिरचनां करोति । संसारे सर्वं दुःखमेव वर्तते । तर्हि किन्निमित्तं सृष्टेः रचना कृतेश्वरेण ? नैयायिकाः सृष्टिविधाने दयामेव पश्यन्ति भगवत ईश्वरस्य । मानवः संसारेऽस्मिन् स्वयं कर्तुमेवावसरं प्राप्नोति । अनेन प्रकारेण स कर्मबन्धनात् मुक्तो मोक्षं प्राप्नुयादिति सृष्टेरायोजनमभ्युदयार्थं भवति ।

वैशेषिकदर्शनानुसारं प्रलयकाले जगतः सर्वेषां वस्तूनां परमाणुरूपं भवति । पश्चात् प्राणिनामात्मानोऽदृष्टेन ( धर्माधर्माभ्यां ) सम्मिलिता निष्पन्दास्तिष्ठन्ति । प्रलयायोजनमादिदेवस्य कृपां निदर्शयति । यतः प्रलयानन्तरं जन्म-मरण-बन्धन-विमुक्ताः काले-काले प्राणिनो विश्रामं लभन्ते ।

विश्रान्तियुगस्यान्तोऽपि समायाति यदा पुनरादिदेवः प्राणिनामभ्युदयार्थं तेषां शरीरधारणमभिप्रैति । तदा परमाणुषु गतिर्जायते । तेषां संघर्षः समारभ्यते । परमाणूनां समाहारक्रमेण पञ्चभूतानां आधाररूपं प्रादुर्भवति । अग्नेः पृथिव्याश्च परमाणुभिर्हिरण्यगर्भं उत्पद्यते । आदिदेवः पश्चात् ब्रह्म विश्वं चोत्पादयति । ब्रह्मण एव प्रजापतयो देवाः पितरः ऋषयश्चत्वारो वर्णा अदृष्टानुसारं जन्मानि गृह्णन्ति ।

साङ्ख्यानुसारं प्रकृतौ बौद्धिकानामाधिभौतिकानां च तत्त्वानां समन्वयो वर्तते । अत एव प्रकृतेर्बुद्धेरहङ्कारस्य मनसो ज्ञानेन्द्रियाणां पञ्चभूतानां चोत्पत्तिर्भवति ।

प्रकृतेः सृष्टिस्त्रिगुणात्मिका भवति । तत्र सत्त्वगुणेन चैतन्यस्यानन्दस्य प्रकाशस्य सत्यस्य चाभिव्यक्तिर्भवति । रजसा तु स्वस्य कार्यपरतायाः भोगलिप्सायाश्चाभिव्यक्तिर्भवति । तमसा कार्यपरतायाः निरोधः मोहस्यावरणस्य च सृष्टिर्भवति । तमोगुणेनाज्ञानमालस्यं च जायेते । त्रयाणां गुणानां कार्याणि क्रमशः प्रकाशः प्रवृत्तिर्नियमनं च भवन्ति । प्रकृतेरुत्पद्यमानेषु वस्तुषु परस्परमन्तरं तेषां गुणानां मात्रानुसारि वर्तते ।

प्रकृतेः प्रथमविकासो महान् बुद्धिश्च भवति । बुद्धिः धर्मज्ञानवैराग्यैश्वर्यादिभावनानां कारिका भवति । बुद्धेरहङ्कारतत्त्वं जायते । अहङ्कारेणाभिमानस्य बोधो भवति । अहङ्कारेण पुरुषः प्रकृतेः क्रियमाणानि कार्याणि स्वीकरोति । तद्यथा—

> प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
> अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥ गीतायां ३ २७

अहङ्कारात् पञ्चज्ञानेन्द्रियाणां पञ्चकर्मेन्द्रियाणां पञ्चतन्मात्राणां मनसश्च प्रादुर्भावो भवति । तन्मात्रेभ्यः पञ्चभूतानि प्रवर्तन्ते ।

प्रकृतेर्विकासो विलयश्च क्रमानुसारमनादिकालादेवानन्तकालपर्यन्तं भवतः । विकासक्रमेणैव विलयोऽपि तत्त्वानां भवति । योगदर्शनानुसारं सृष्टिविकासविलयक्रमः प्रायः साङ्ख्यवद् वर्तते ।

मीमांसानुसारं सृष्टिरनादिरनन्ता च वर्तते । अस्याः कोऽपि रचयिता नास्ति ।

वैष्णववेदान्तानुसारं ब्रह्मण एव जगतः सृष्टिर्भवति । ब्रह्म एव सृष्टेरुपादानकारणं निमित्तकारणं च भवति । जगदिदं ब्रह्मणो लीलार्थं वर्तते । प्रलयकालेऽपि जगतः स्थितिरव्यक्तरूपेण भवति ।

शाङ्करवेदान्तानुसारं जगतः प्रादुर्भाव ईश्वरादेव भवति । तद्यथा—ईश्वरादाकाशः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथ्वी सम्भवन्ति । प्रलयकाले सर्वाणि भूतानि स्वकारणे विलीयन्ते । अन्ततो ईश्वरे आकाशो विलीयते ।

यस्य पादपा देशाः सर्वे सात्मका इति शङ्करः निर्दिशति । सर्वेषामात्मनां ब्रह्मण उत्पत्तिस्तथैव भवति यथाऽग्नेः स्फुलिङ्गाः जायन्ते । मुक्तावस्थायामात्मानः पुनर्ब्रह्मणि विलीयन्ते ।

रामानुजानुसारं प्रलयकाले ब्रह्मणः कारणावस्था, सृष्टेः समारम्भे च कार्यावस्था भवति । रामानुजस्य मतेन सृष्टेः समारम्भोऽध्यासः, माया, विवर्तः एव वा नास्ति । सृष्टिर्ब्रह्मणः परिणमनमेव । सृष्टिविन्यासे ब्रह्मणा सहेश्वरो जीवश्च जगदपि सदितिप्रमाणितं रामानुजेन । अनेन प्रकारेण शाङ्करस्य मायावादो रामानुजेन निराकृतः ।

## परमाणुवाद

परमाणुवादस्य विशेषचर्चा वैशेषिकदर्शने वर्तते । तद्यथा—ईश्वरस्य चिकीर्षावशात् परमाणुषु क्रिया जायते । तत्र परमाणुद्वयसंयोगे सति द्व्यणुकमुत्पद्यते । त्रिभिः द्व्यणुकैः त्र्यणुकम् । एवं चतुरणुकादिक्रमेण महती पृथ्वी, महत्य आपो महत्तेजो महान्वायुरुत्पद्यते । एवमुत्पन्नस्य कार्यद्रव्यस्य संजिहीर्षावशात् परमाणुषु क्रिया जायते । क्रियया परमाणुद्वयविभागे सति द्व्यणुकनाशो भवति । ततस्त्र्यणुकनाशः, ततः चतुरणुकस्यैवमेव महापृथिव्यादिनाशः ।

जैनबौद्धदर्शनयोरपि क्वचित् परमाणुवादः सम्मत एव ।

## प्रवृत्तिविवेचनम्

तत्त्वज्ञानेन यदा कश्चन पुरुषः समष्टिमयीं भावनां करोति, तदा तस्य सत्प्रवृत्तिर्जायते, मिथ्याज्ञानेनासत्प्रवृत्तयश्च सम्भवन्ति । तत्त्वज्ञानाय मननं निदिध्यासनं स्वाध्यायश्चापेक्षितानि । मिथ्याज्ञानेन रागद्वेषादिभिर्बद्धः पुरुषः सुखप्राप्तये दुःखनिवारणाय च यत्कर्म कुरुते तत् तस्य पुनर्जन्मबन्धनायैव भवति ।

वैशेषिकदर्शनानुसारमहिंसाश्रद्धा भूतहितत्व - सत्यवचनास्तेय-ब्रह्मचर्यानुपधाभावशुद्धि-क्रोधवर्जनाभिषेचन-शुचिद्रव्यसेवन देवभक्त्युपवासाप्रमादाः परिपालनीया इति कर्तव्यम् । योगद्वारात्मसंयमो जायते । तत्त्वज्ञानेन मानवः स्वार्थबुद्धेः स्वार्थपरतायाश्च मुक्तो भवति ।

साख्यानुसारमहं पुरुषोऽस्मीत्यनुसधेयम्। सत्त्वेन मानव ऋषित्वं समुपैति। ज्ञानपथे सर्वेषामधिकार सम्मत.। शूद्रोऽपि ज्ञानेन मुक्ति लब्धु समर्थ।

जीवनस्य सर्वा प्रवृत्तयो यज्ञा एवेति मीमांसामतम्। अभ्युदयो नित्यनैमित्तिककर्मसम्पादनेन भवतीति प्रमाणित तत्र। मोक्षोऽपि सुलभोऽनेन पथेति धारणासीत्।

वेदान्तसूत्रे सन्यासकर्मयोगयोरावश्यकता प्रतिपादिता। शङ्करस्तु सरलविधिनाष्टाङ्गिकयोगमार्गेण ब्रह्मज्ञान सर्वेभ्यो वर्णेभ्य. सुलभमिति सिद्धिलवान्। ईश्वरोपासनया पापाना क्षय, ऐश्वर्याणा प्राप्ति, पश्चात् मुक्ति सम्भवन्ति।

जीवस्य पतनमविद्याकर्मणा न भवति। विद्यया चाविद्याया नाशो भवतीति रामानुज प्रतिपादितवान्। विद्या तु सर्वेषा मोलिकतत्त्वरूपेणेश्वरग्रहणमिति। ईश्वरोपासनया पापनिवृत्तिसम्भाविति रामनुज उपादिशत्। निष्कामकर्म बन्धनाय न भवति, अपितु तेन सत्त्ववृद्धिर्जायत इति तस्य मतम्। तदनुसार भक्त्यापि ईश्वरस्य ज्ञान सम्भवति। यदा भक्तिर्निष्पन्ना जायते, आत्मन परमात्मना सह तादात्म्यमनुभूयते। आत्मन एवेश्वराय समर्पण प्रपत्तिरिति कथ्यते अनया मुक्ति सम्भाव्यते।

## सत्कार्यवाद

सत्कार्यवाद सांख्यदर्शनस्य वैशिष्ट्यम्। तदनुसार कारणे कार्य प्रागेव वर्तत। तद्यथा मृत्तिकाया घट प्रागेवासीत। तदधिकृत्य प्रोक्तम्—

असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥ सांख्यका० ९

तदत्र व्याख्याद्वारेण—"इह लोकेऽसत्करण नास्ति यथा—सिकताभ्यस्तैलोत्पत्ति। इह लोके यो येनार्थी स तदुपादानग्रहण करोति, दध्यर्थी क्षीरस्य न तु जलस्य ग्रहण करोति। सवस्य सवत्र सम्भवो नास्ति। यथा—सुवर्णस्य रजतादौ। इह कुलाल शक्तो मृद्दण्डचीवररज्जुनीरादिकरणोपकरणं वा शक्यमेव घट मृत्पिण्डादुत्पादयति। कारण यल्लक्षण तल्लक्षणमेव कार्यमपि, यथा—यवेभ्यो यवा व्रीहिभ्यो व्रीहय। यद्यसत् कार्यं स्यात् तत व्रीहिभ्य शालय स्यु। न च सन्तीति। तस्मात् सत् कार्यम्।"

न्यायदर्शनेऽसत्कार्यवाद सञ्चारित। सत्कार्यवादस्य विरोधिमत न्यायसङ्गतमेव। तथा हि—यदि कारणे कार्यस्य प्रागेवास्तित्व वर्तते तर्हि किन्निमित्त कार्यं क्रियते। कारणस्यास्तित्व प्राग्भवति पश्चात् कार्यमुत्पद्यते तद्यथा प्रथम बीज पश्चात् वृक्षो जायते।

वेदान्ते साख्यसम्मत सत्कार्यवादस्स्वीकृत। तदनुसारम्, उत्पत्तेः प्रागेव घटादयो विद्यमाना सन्ति, किन्तु ते आवृतत्वान्नोपलभ्या। कार्य तावन्मात्रमावरणैरज्ञेय भवति यावन्मात्र तस्य कर्ता न विद्यते। यद्यपि कारणे कार्य विद्यते,तथापि सहकारिताशक्तिमपे-

सते कार्यस्याविर्भाव । तिले तैलं वर्तते । तत्तैलं तिलस्य पेषणेनाविर्भवति । पेषणमेवात्र सहकारिताशक्तिः ।

## जैनदर्शनम्

जैनदर्शनानुसारं—सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः । एतेषु सम्यग्दर्शनं तु तत्त्वार्थश्रद्धानमेव । ततः तत्त्वार्थो ज्ञेयः । तत्त्वज्ञानाय जैनदर्शने [illegible] प्रमाणे स्तः—प्रत्यक्षं परोक्षं च ।

### प्रमाणानि

प्रत्यक्षं ज्ञानं त्रिविधम्—अवधिः मनःपर्ययं केवलं च । अवधिप्रत्यक्षं दिव्यदृष्टया सम्भवति । मनःपर्ययेणापरेषां मानसिकभावा ज्ञायन्ते । केवलप्रत्यक्षं तु सर्वज्ञत्वमेव । परोक्षप्रमाणं द्विविधं भवति—मतिः श्रुतं च । मतिप्रमाणमिन्द्रियाणां मनसश्च योगेन जायते । स्मृत्या पूर्वज्ञानस्य स्मरणं भवति । स्मृतिरेव संज्ञा भवति यदि तस्या उत्पत्तिः समानवस्तुनो दर्शनेन भवति । चिन्ताऽभिनिबोधश्च नैयायिकानामनुमानमेव । श्रुतज्ञानं द्विविधम्—अक्षरात्मकमनक्षरात्मकं च । पुस्तकेभ्यः प्राप्तं ज्ञानमक्षरात्मकं भवति । अनक्षरात्मकं ज्ञानमनुमानेन लभ्यते ।

### स्याद्वाद

उपर्युक्तप्रमाणैः कस्यापि वस्तुनो यः स्वभावः परिचीयते, तस्य निरूपणाय स्याद्वादो विकल्पितः । ततो वस्तुस्वभावज्ञानाय सप्तविधानि वाक्यानि निर्दिष्टानि—(१) स्यादस्ति, (२) स्यान्नास्ति, (३) स्यादस्ति नास्ति, (४) स्यादवक्तव्यः, (५) स्यादस्ति अवक्तव्यः, (६) स्यान्नास्ति अवक्तव्यः (७) स्यादस्ति नास्ति अवक्तव्यः ।

प्रमाणैस्तत्त्वानामधिगमो भवति । तत्त्वानि सप्त सन्ति—जीवः, अजीवः, आस्रवः, बन्धः, संवरः, निर्जरा, मोक्षश्च । जीवस्तु वैदिकदर्शनस्यात्मनः समकक्षो वर्तते । जीवा द्विविधाः—संसारिणो मुक्ताश्च । तत्र व्यवहारदृष्ट्या संसारिणो निश्चयनयेन मुक्ताश्च ज्ञेयाः ।

### जीवः

> जीवः उपयोगमयो[1]ऽमूर्तिः कर्ता स्वदेहपरिमाणः ।
> भोक्ता संसारस्थः सिद्धः स विस्रसोर्ध्वगतिः ॥

जीवस्यैव परिभाषाऽभिनवैव प्रवर्तते । सर्वाणि वैदिकान्यवैदिकानि वा दर्शनानि जीवविषयकमतमेतद् भिन्नमेव धारयन्ति ।

---

१. द्रव्यसंग्रहे जैनदर्शने ।

'जीवस्येन्द्रियाणि बलमायु श्वासोच्छ्वासो च व्यावहारिकदृष्ट्या भवन्ति । निश्चय-नयत जीवस्य चेतना भवति । कर्मबन्धनेन जीवो मूर्तरूप प्राप्नोति । कर्मानुसार जीव सुखदु ख भुनक्ति । पचभूतरूपेण जीव एकेन्द्रियो भवति । चरजीवा द्वीन्द्रिया , त्रीन्द्रिया , चतुरिन्द्रियाश्च भवन्ति । पचेन्द्रिया एव जीवा समनस्का भवन्ति' इत्येतानि जीवस्य वैशिष्ट्यानि ।

निश्चयात्मकदृष्ट्या चेतनायुक्तो जीव शुद्धज्ञानदर्शनविशिष्टो भवति । तस्मिन् वर्ण-रसगन्धादयो न वर्तन्ते । सुखदु खान्यपि जीवस्य न भवन्ति ।

मुक्तजीवो निष्कर्मा भवति । तस्याष्टगुणा विद्यन्ते—सम्यक्त्व ज्ञान दर्शन वीर्य सूक्ष्मता अवगाहनम्, अगुरुलघुत्वम् अव्याबाधत्व च । मुक्तजीवाना विशिष्टो लोक एव भवति । तत्र ते नित्या निर्जरास्तिष्ठन्ति ।

अजीव

अजीव षड्विधो भवति । तद्यथा—

अजीव पुन ज्ञेय पुद्गलो धर्मोऽधर्म आकाश ।
काल पुद्गलो मूर्तो रूपादिगुणोऽमूर्तय शेषास्तु ॥

पुद्गलस्तु भौतिकतत्त्वसमो भवति । पुद्गलस्य पर्याया —शब्दा बन्ध सूक्ष्म स्थूल सस्थान[१] भेद तम छाया उद्योत आतपश्च भवन्ति । पुद्गलो रूपरसादिविशिष्टो भवति । पुद्गलाना जीवाना च गमनसहकारी धर्मो भवति, यथा जल मत्स्याना तरणाय भवति । अधर्मो जीवाना पुद्गलाना च स्थानसहकारी भवति, यथा पथिकेभ्य विश्रमाय छाया भवति । आकाशे जीवादयोऽवकाश लभन्ते ।

कालस्तु द्रव्यपरिवर्तरूप परिणामादिलक्ष्य ।

जीवानामजीवाना च सप्त विशेषा —आस्रवो बन्धन सवर निर्जरा मोक्ष पुण्य पाप च भवन्ति । जीवा अजीवा सप्तविशेषाश्च जैनदर्शनस्य नव तत्त्वानि प्रतिष्ठितानि । आस्रवेण कर्मणा भावाना ■ जीवेन सह समागमो भवति । आस्रव इत्थ जीवस्य सस्का-राय भवति । बन्धेन जीव कर्मणा बध्यते । आस्रवस्याभाव सवर । सवरस्य ससिद्धये—व्रतसमितिगुप्तिधर्मानुप्रेक्षापरीषहजयचारित्राणां पालन निर्दिष्टम् । निर्जरया जीव कर्म-बन्धनान्मुच्यते । ततो मोक्ष । स्ववीर्ये शुभैरशुभैर्वा भावै जीव पापस्वभाव पुण्य-स्वभावो वा भवति ।

मोक्ष

यदा जीव उपर्युक्तनवतत्त्वानि प्रति श्रद्धा लभते तदा तस्य सम्यग्ज्ञानप्रक्रियाऽऽरभते ।

---

१ आकारप्रकार ।

सम्यग्ज्ञानेन जीवस्य संशयविमोहविभ्रमाणां क्षयो भवति ।[1] तदा चारित्रेणाशुभादिनिवृत्तिः शुभे प्रवृत्तिर्जायते । व्रतसमितिगुप्तय एव चारित्राणि । सम्यक्चारित्रेण कर्मबन्धनं प्रहीयते, कर्मणोऽवरोधश्च भवति । अयमेव मोक्षः । तथा हि—

सम्यग्दर्शनं ज्ञानं चरणं मोक्षस्य कारणं जानीहि ।
व्यवहारात् निश्चयतः तत्त्रितयमयो निज आत्मा ॥
मा मुह्यत मा रज्यत मा द्विष्यतेष्टानिष्टार्थेषु ।
स्थिरमिच्छथ यदि चित्तं विचित्रध्यानप्रसिद्धयै ॥
आत्मात्मनि रतः इदमेव परं भवति ध्यानम् ।

जैनदर्शनानुसारं मुक्तात्मा 'ईश्वर' इति कथ्यते ।

## बौद्धदर्शनम्

निर्वाणपथगामिनो बौद्धास्तु प्रज्ञप्तिमात्र एवात्मेति मन्यन्ते । अतस्तेऽनात्मवादिनोऽनीश्वरवादिनश्च वैदिकमतेन प्रतीयन्ते । तद्यथा—रथस्तु न कोऽपि स्वतन्त्रः पदार्थः । स तु केवलं शब्दमात्र एव चक्राक्षादीनां सम्भारः । तथैव रूपवेदनाविज्ञानसंज्ञासंस्काराणां पञ्चस्कन्धानां समाहार एवात्मा प्रतीतः ।[2] तस्य पञ्चस्कन्धबन्धस्य पुनर्जन्म भवति । एतेषां प्रत्येकस्य स्वीयमौलिकतत्त्वे विलयनमेव महानिर्वाणम् ।

उपर्युक्तसिद्धान्ता बौद्धानां प्रतीत्यसमुत्पादमुपजीवन्ति ।

अत्र प्रतीत्य (कारणानामेकत्रत्वेन) समुत्पादः (कस्यापि वस्तुनः उत्पत्तिः) इति हेतुफल-परम्परा ग्रहणीया । अनेन सिद्धान्तेन ज्ञायते यत्र किमपि शाश्वतम्, सर्वे धर्माः क्षणिका हेतुप्रत्ययजनिताश्च । तदनुसारं भवचक्रं प्रवर्तते । भवचक्रस्य द्वादशाङ्गानि—अविद्या, संस्कारः, विज्ञानम्, नामरूपम्, षडायतनम्, स्पर्शः, वेदना, तृष्णा, उपादानम्, भवः, जातिः, जरामरणं च ।[3] एतेषु प्रथमौ द्वौ पूर्वजन्मनः, अन्तिमे द्वे भाविजन्मनः,

---

१ संशयविमोहविभ्रमाणां समाहारेण समारोपः । तत्र भ्रान्तिरेव विमोहः । सन्देह एव संशयः । ज्ञानस्यान्यथात्वं विभ्रमः ।

२ रूपं इन्द्रियैः सह विषयाश्च रूपम् । वेदना सुखदुःखादीनां भावना । विज्ञानमहमाकारं, इन्द्रियैः ज्ञानं च भवति । संज्ञा नाम । संस्कारा मानसिकप्रवृत्तयः ।

३ अविद्या पूर्वजन्मनः क्लेशदशा । संस्काराः पूर्वजन्मनः कर्मावस्थानामनुबन्धादयः । विज्ञानं प्रतिसन्धिस्कन्धः, जन्मग्रहणक्षणे कुक्षिगतं नामरूपादीनां पञ्चस्कन्धानां विज्ञानमेव । नामरूपं विज्ञानानन्तरं षडायतनात्पूर्वसंस्थावस्था । षडायतनं स्पर्शात् पूर्वं पञ्चस्कन्धाः । स्पर्शः सुखदुःखादिविवेचनसंस्थावस्था । वेदना मैथुनरागसमुदाचारपर्यन्तावस्था । तृष्णा भोगमैथुनकामिनां पुरुषाणामवस्था । उपादानं भोगैश्वर्यसमुदाचाराख्या पुरुषस्य । कर्मावस्था भवः । जातिः पुनर्जन्म च । जरामरणं ततः प्रभृति वेदनावस्था ।

शेषाण्यष्टौ वर्तमानजन्मन शरीरस्यैव विद्यन्ते। एतानि द्वादशाङ्गानि त्रिविधा—क्लेश कर्म, वस्तु च। अविद्यातृष्णोपादानानि क्लेशस्वभावानि। संस्कारभवौ कर्मस्वभावौ। शेषाणि तु वस्तुस्वभावानि, क्लेशकर्मणोरधिष्ठानत्वात्।

### निर्वाणम्

बौद्धदर्शने निर्वाण वैदिकदर्शनस्य मोक्षस्थानीयं वर्तते। निर्वाणं तु परम क्षेम, तृष्णाक्षय दु खस्यान्तकर, मृत्योर्जय एव वर्तते। यथाग्निर्निर्वापित सम्प्रदृश्यो भवति तथैव निर्वाण प्राप्य पुरुषस्यास्तित्व किंचिदपि कुत्रापि न वसत।

रागस्य प्रहाणेन निर्वाण प्राप्यते। तदा कामसुखानि न विद्यन्ते। निर्वाणपथगामिना कृते चत्वारि 'आर्यसत्यानि' सन्धारितानि। तद्यथा—दु खम्, दु खस्य समुदय, दु खस्य निरोध, निरोधायाष्टाङ्गिकमार्गश्च। अष्टाङ्गिकमार्गो दृष्टिसंकल्पवाक्कर्मान्ताजीविकाव्यायामस्मृतिसमाधीना सम्यक्त्वमेव। समाधियोगपरो भवति।

[illegible] निर्वाण द्विविध मतम्—सोपधिशेष निरुपधिशेष च भवति। तयो प्रथमं जीवन्मुक्तस्यावस्था भवति, अपर च मरणानन्तरमेव जायते। परवर्तियुगेऽप्रतिष्ठितं निर्वाण सम्मतम्। तदनुसार बोधिसत्त्वा महाकरुणया प्रेरिता सन्त शून्यता न प्रतिपद्यन्ते यद्यपि ते सर्वथा योग्या भवन्ति।

## चत्वारि प्रस्थानानि

परवर्तियुगे बौद्धदर्शनस्य चत्वारि प्रस्थानानि वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकानि जातानि। एतेषु प्रथमे द्वे हीनयानस्य, शेषे द्वे महायानस्य शाखा सन्ति।[1] एतेषां परस्परभेद जगत सत्तामधिकृत्य मतवैविध्यानुसार समुदभवत्। तथाहि वैभाषिका बाह्यजगत सत्ता प्रत्यक्षेणैव मन्यन्ते। सौत्रान्तिका जगत सत्तामनुमानेन मन्यन्ते। जगत सत्ता मन्यन्ते अतएव वैभाषिका सौत्रान्तिकाश्च सर्वास्तिवादिन इति सज्ञिता। योगाचारास्तु बाह्यजगत सत्ता न मन्यन्ते। ते चित्त (विज्ञानम्) एव सत् मन्यन्ते। अतएव ते विज्ञानवादिन। शून्यवादिना नयेन जगत् विज्ञान च असत्ये। शून्यमेव केवल सत्। ते शून्यवादिनो माध्यमिका सर्ववैनाशिका इति सज्ञिता। गौतमबुद्धात् क्रमश १००, ४००, ५०० वर्षाणि पश्चात् वैभाषिकस्य, सौत्रान्तिकस्य माध्यमिकस्य च प्रस्थान प्रावर्तत। समारम्भ खीष्टाब्दत पश्चात् तृतीयशतकेऽभूत्।

### प्रमाण-व्यवस्था

बौद्धदर्शने प्रमाण द्विविधम्—प्रत्यक्षमनुमान च। तदनुसारमर्थाकारस्य विशदाभत्व-

१. हीनयान बौद्धधर्मदर्शनयो प्रथम रश्मि प्रायशो व्यक्तिगताभ्युदयाय गौतमबुद्धस्य मूलशिष्यानुरूप विकसितम्। परवर्तियुगे महायानं तदानीन्तनविविधदर्शने प्रभावितं बहुजनसुखाय बहुजनहिताय मिश्र या स्वचित्रं विकासयितुं प्रादुरभवत्।

मेव प्रत्यक्षम्, लिङ्गेनार्थस्यास्फुटज्ञानमनुमानं च । अग्नौ सन्निहिते सति तस्य ज्ञानं प्रत्यक्षं दूरे सति धूमलिङ्गेन तस्य ज्ञानमनुमानम् । तद्विकल्पबलेन सिध्यति । प्रथममिन्द्रियाश्रितं ज्ञानं प्रत्यक्षं भवति पश्चात् द्वितीये क्षणे मानसप्रत्यक्षं जायते । तद्यथा चक्षुर्व्यापारे उपरते मनोविज्ञानमेव प्रत्यक्षम् ।

योगिप्रत्यक्षं योगिनामेव भवति । योगिनो भूतमनागतं च वर्तमानवत् पश्यन्ति । योगिप्रत्यक्षमलौकिकयोगजसन्निकर्षेण जायते । तन्निर्विकल्पकं शुद्धमेव भवति ।

## स्वभाववादः

वस्तुतः स्वभाववादस्य दार्शनिकत्वं नास्ति । स्वभाववादे गहनचिन्तनस्य सम्यगभाव एव । स्वभाववादः केवलं वर्तमानमपेक्षते । तत्र भूतभविष्यतोर्विचारणा नास्ति । अस्यां स्थितौ वादेऽस्मिन् आत्मा, परलोकः[1], कर्मफलम्, मुक्तिः, पापपुण्ये, ईश्वरः, देवाः —सर्वाण्येव मिथ्येति सम्मतम् । प्रत्यक्षमेव केवलं प्रमाणं तेषां बोधगम्यम् । अस्य लोकस्यैव सत्ताया ग्रहणात् स्वभाववादो लोकायत इति संज्ञितः । स्वभाववादस्य प्रमुखाचार्यश्चार्वाकोऽभवत् । तस्य नाम्ना स्वभाववादश्चार्वाकदर्शनमिति ख्यातम् ।

स्वभाववादिनः प्रत्यक्षेण चत्वारि भूतानि—पृथ्वीं जलमग्निं वायुं च मन्यन्ते । तेभ्यः सर्वं जगत् प्रस्फुटितम् ।[2] बुद्धिरेभिः भूतैः निर्मिता । शरीरे बुद्धेः प्राधान्यम् । आत्मा तु नास्त्येव ।

## दार्शनिकानां व्यथितत्वम्

ऋषिभिः प्रवर्तितमेव भारतीयदर्शनं वेदमूलम् । वेदानुप्राणितमेव तेषामृषीणां व्यक्तित्वमभवत् । परवर्तिवैदिकयुगे द्विविधा दार्शनिका बभूवुः—गृहस्थाः संन्यासिनश्च । कतिपयदार्शनिका गृहस्थाः—अजातशत्रुजनकादयः राजानः, आरुणियाज्ञवल्क्योषस्तिचाक्रायणादयो ब्राह्मणा बभूवुः ।

---

१ इदं दर्शनं कामानुभवाय [illegible] यो वा सुखभुक् स एव स्वर्गस्थः, यो वा क्लेशभुक् स एव नारकीय इति मन्यमानः स्वर्गनरककल्पनस्य दोषोद्घाटनेऽपि [illegible] ।

आनन्द[illegible] पृ० ११२

२. एतद् निदर्शनमश्वघोषविरचिते बुद्धचरिते ९.५५–६१ सम्यक् दृश्यम् । यथा हि—
कः कण्टकस्य प्रकरोति तैक्ष्ण्यं विचित्रभावं मृगपक्षिणां वा ।
स्वभावतः सर्वमिदं प्रवृत्तं न कामकारोऽस्ति कुतः प्रयत्नः ॥ ९.६२

उपनिषत्कालात् प्रभृति दर्शनस्योद्भावका प्रायश वानप्रस्था सन्यासिनश्च बभूवु.। गृहस्थाश्रमस्य बन्धनानि दर्शनोद्दिष्टस्य मोक्षस्य मार्गे बाधा इति सम्मतम्। अतएव दर्शनिकाना बहुतय आर्षाणामाश्रमेषु भिक्षूणा विहारेषु च बभूवु। ऋषिजीवन तु ब्रह्मचर्यमेव।

परवर्तियुगे शङ्कराचार्येण दर्शनाय प्रवृत्तिकामाना चत्वारि लक्षणानि निर्दिष्टानि। तद्यथा—जिज्ञासा, निष्कामता, यमनियमपरायणता, मोक्षप्राप्तयेऽभिलाषश्च। शङ्करस्य व्यक्तित्वमेवोच्चादर्श प्रतिष्ठापयति। तस्य प्रतिभाया अलौकिकत्व सुविदितमेव। अष्टवर्षदेशीय एव स वेदेषु निष्णातो बभूव। बाल्ये स प्रव्रजित कर्मयोगी बभूव। समग्रभारतमेव स्वकार्यक्षेत्र विधाय सर्वत्र वेदान्तस्याद्वैतचिन्तनस्य धारा प्रवाहितवान्। तस्य दिग्विजयेनाद्वैतस्य सर्वत्र प्रभविष्णुता वरीवर्ति।

शङ्करोऽद्वैतसिद्धान्ताना प्रतिपादनाय बहून् ग्रन्थानरचयत्। समग्र भारतमद्वैत कर्तुमेवास्य चतुर्दिग्भागेषु विश्वविद्यालयाना स्थापना कृतवाश्च। पूजाविधिषु स पशुबलि नरबलि च निषेधितवान्। शङ्करस्य प्रायशो द्विशताब्द पश्चात् रामानुजो विशिष्टाद्वैतस्योन्नायकोऽभवत्। स तु यतिराज एवाभवत्। स दक्षिणभारते वैष्णवदर्शनस्य प्रचारमकरोत्।

एतेषा दार्शनिकाना व्यक्तित्वनिदर्शनेन स्पष्टमेव प्रतिभाति यत् भारतीयदर्शन विदुषामेव बुद्धेर्जिह्वाया वा केवल विषयो नाभूत्। तेषा जीवनमेव दर्शनावगाहनेन विशुद्ध परिपूत चाभवत्। तेषा कर्मण्यता समग्रराष्ट्रे प्रोज्ज्वलता विधातुमेवासीत्।

जैनदर्शनस्य सर्वोच्चोन्नायको महावीर आदौ राजकुमारोऽभवत्। स प्रव्रजित एव द्वादशवर्षाणि तपोऽतप्यत केवली च बभूव। केवली तु सर्वज्ञ एव। त्रिंशद्वर्षपर्यन्त स तदानीन्तनसमाजस्य समक्षमुन्नतदर्शनतत्त्व प्रतिष्ठापयितुमनिश प्रायतत। स्वानुयायिना संघ विधाय महावीरस्तस्य सञ्चलनाय सुव्यवस्था व्यधात्।

महावीरस्य व्यक्तित्वेऽपूर्वो साहसोऽद्भुतशक्तिश्च प्रतीयेते। आजीवन स पर्यटन्नेवाहिंसासत्यापरिग्रहादीना शाश्वत सन्देश नगरेषु ग्रामेषु वनवसतिषु च प्रचारितवान्। परवर्तिदर्शनप्रचारकाणा समक्ष सदैव महावीरस्यादर्श आसीत्।

बौद्धदर्शनस्य प्रथमप्रवर्तको गौतमबुद्धो महान् विचारकोऽभवत्। सत्यस्यानुसन्धानाय लौकिकविभूतीना परित्याग कर्तव्य एवेति तस्य मत जीवनविन्यासे सुप्रतिष्ठितम्। स स्वयमेव तपसा योगेन मननेन निदिध्यासनेन च निर्वाणपद प्राप्तवान्।

गौतमस्य व्यक्तित्वे ऋजुताया सौष्ठव व्यराजत। नासीत् किंचिदपि रहस्य तस्य व्यक्तित्वे। तस्यौदारता सच्चरित्र सहानुभूतिश्च सर्वेषा मनसि त प्रति श्रद्धा जनया-

मासु । तस्य व्यक्तित्वेन या शान्तिः क्षान्तिरभिजातीयता च प्रकटिता तासामेवाकर्षण-गुणैस्तदानीन्तनसमाजः प्रभावितः ।

लोकसेवा एव गौतमस्य परमो धर्मः । तस्य दयानिर्झरिणी दुःखार्तानां परितर्पणाय प्रस्रविता बभूव । दार्शनिकतया महाचार्यत्वस्य संगतिः साधारणजनसमाजस्य नेतृत्वं च गौतमस्य वैशिष्ट्यं प्रदर्शयतः ।

दर्शनस्यादिग्रन्था वेदा एवोपलभ्यन्ते । वेदस्तु पारम्पर्येण समागतानां ऋग्यजुः-सामाथर्वसंहितानाम्, ऐतरेयशतपथादीनां ब्राह्मणानाम्, आरण्यकानाम्, उपनिषदां च संज्ञा ।

परवर्तियुगस्य महाभारते बहुविधानां वैदिकावैदिकानां दर्शनसम्प्रदायानां विवरणं प्राप्यते । महाभारतस्य भीष्मपर्वणि भगवद्गीता संगृहीता । भारतीयसंस्कृतौ लोक-जीवने दर्शनस्य यो विशेषप्रभावः परिलक्ष्यते तस्य चमत्कारः प्रायशो गीताश्रित एव ।

षड्दर्शनेषु न्याय एव प्रथमः । तत्र न्यायसूत्रं गौतमप्रणीतमादिग्रन्थः । वात्स्यायनो न्यायभाष्यमिति ख्याता न्यायसूत्रस्य टीका रचितवान् । परवर्तियुगे वाचस्पतेर्न्यायतात्पर्य-टीकायां न्यायस्य सनातनपरम्परा विशदीभूता । बहवस्तत्र न्यायग्रन्थकाराः पूर्वग्रन्थानां टीकाकारिणो बभूवुः । अन्ये तु न्यायस्याभिनवप्रवृत्तीनां व्याख्यातारोऽभवन् । ख्रीष्ट-पश्चात् द्वादशे शतके मिथिलायां नव्यन्यायस्य समारम्भोऽभवत् । नव्यन्यायस्य प्रथमो ग्रन्थस्तत्त्वचिन्तामणिः प्राप्यते । परवर्तियुगे बहव आचार्याश्चिन्तामणिमधिकृत्य टीका-ग्रन्थानरचयन् । ख्रीष्ट पश्चात् सप्तदशशतकेऽन्नंभट्टः प्राच्यन्यायस्य नव्यन्यायस्य चैक-मुख्यीं प्रवृत्तिं विधातुं तर्कसङ्ग्रहं दीपिकां च विरचितवान् ।

वैशेषिकसूत्राणां रचयिता कणादः कश्यपो वास्ति । पश्चात् प्रशस्तपादेन पदार्थधर्म-संग्रहे वैशेषिकदर्शनं सम्यक् सिद्धान्तितम् । परवर्तियुगे चन्द्रेण दशपदार्थशास्त्रं भास्करेण तर्ककौमुदी विश्वनाथेन भाषापरिच्छेदः रचितानि ।

सांख्यस्य प्रथमो ग्रन्थ ईश्वरकृष्णस्य सांख्यकारिकास्ति । गौडपादेन वाचस्पतिना च कारिकाणां टीका रचिता । परवर्तियुगे ख्रीष्ट पश्चात् चतुर्दशशतके सांख्यप्रवचनसूत्रं लिखितम् । प्रवचनसूत्रस्य बहवष्टीकाकारा बभूवुः ।

योगदर्शनस्यादिग्रन्थः पतञ्जलेर्योगसूत्रमेव । व्यासेन योगसूत्राणां भाष्यं कृतम् । ख्रीष्ट पश्चात् नवमशतके व्यासभाष्यमधिकृत्य तत्त्ववैशारदीं टीकां वाचस्पतिमिश्रोऽरचयत् भोजस्तु राजमार्तण्डमेकादशशतकेऽरचयत् ।

पूर्वमीमांसाया आदिग्रन्थो जैमिनेर्मीमांसासूत्रं वर्तते । शबरो मीमांसासूत्रस्य टीकां प्रणीतवान् । ख्रीष्ट पश्चात् सप्तमे शतके कुमारिलः पूर्वग्रन्थानधिकृत्य श्लोकवार्तिकं तन्त्रवार्तिकं च रचितवान् । परवर्तियुगे तेषां ग्रन्थानां टीका रचिता ।

उपनिषद एव वेदान्तस्य प्रथमग्रन्था । ख्रीष्टाब्दत प्रागेव बादरायणेन व्यासेन वा वेदान्तसूत्रमुपनिषदो ब्रह्मविद्यामधिकृत्य लिखितम् । परवर्तियुगेऽद्वैतवेदान्तस्य प्रतिष्ठा कुर्वन् शङ्कराचार्य उपनिषदा गीताया वेदान्तसूत्रस्य च भाष्य प्रणीतवान् ।[1] शङ्करस्यान्यौ ग्रन्थौ विवेकचूडामणि:, उपदेशसाहस्री च वेदान्तपरौ। सदानीन्तनोऽय आचार्य सुरेश्वरो वार्तिकं नैष्कर्म्यसिद्धि चारचयत् । आनन्दगिरेर्न्यायनिर्णय समकालिक एव ।

शङ्करस्य वेदान्तसूत्रभाष्यमधिकृत्य पद्मपादेन पञ्चपादिकाया वाचस्पतिमिश्रेण च भामत्याः प्रणयनं कृतम् । पारम्पर्येणोपर्युक्तग्रन्थानां टीका विविधाचार्ये. प्रणीता: । ख्रीष्ट पश्चात् चतुर्दशशतके माधवाचार्येण पंचदशी जीवन्मुक्तिविवेकश्च रचितौ ।

ख्रीष्ट' पश्चात् द्वादशशतकस्यान्तिमे भागे श्रीहर्षेण खण्डनखण्डखाद्यमद्वैतसिद्धान्तानां तार्किकप्रतिष्ठा विधातुं प्रणीतम् । ग्रन्थोऽयं योगाचारबौद्धदर्शनेन प्रभावितो वर्तते । खण्डनखण्डखाद्यस्य चित्सुखीया टीका चित्सुखेन प्रणीता । सम्मतमेव प्रतिपादयता तेन तत्त्वदीपिका रचिता । परवर्तियुगेऽद्वैतवेदान्तस्य बहवो ग्रन्थाः प्रणीता. ।[2] योगवासिष्ठस्य अध्यात्मरामायणस्य चाद्वैतसिद्धान्ताना लोकप्रचारार्थं प्रणयनं कृतम् ।

विशिष्टाद्वैतस्य प्राथमिकसुप्रतिष्ठा रामानुजेन ब्रह्मसूत्रस्य श्रीभाष्ये कृता । रामानुजस्यापरे वेदान्तपरा ग्रन्था गीताभाष्य वेदार्थसंग्रहो वेदान्तसारो वेदान्तदीपश्च सन्ति ।

*बौद्धदर्शनस्य प्राचीनतमो ग्रन्थोऽभिधर्म इति ख्यात* ।[3] *अभिधर्मे मूलरूपेण गौतम* बुद्धस्य दार्शनिकविचारा सङ्गृहीता । परवर्तियुगस्य दार्शनिकविचाराणा प्रथम सग्रहो मिलिन्दप्रश्न इति ख्यातो नागसेनेन कृत । ख्रीष्ट पश्चात् चतुर्थे शतके बुद्धघोषेण विसुद्धिमग्गो रचित ।

परवर्तिबौद्धदर्शनस्य साहित्य प्राय सम्प्रदायानुसार विकसित दृश्यते । तत्र सर्वास्तिवादिना सप्त ग्रन्था प्रधाना —कात्यायनीपुत्रस्य ज्ञानप्रस्थानम्, शारिपुत्रस्य सगीतिपर्याय, वसुमित्रस्य प्रकरणपाद, देवशर्मणः विज्ञानकाय, वसुमित्रस्य धातुकाय, यशोमित्रस्य धर्मस्कन्ध, मौद्गल्यायनस्य प्रज्ञप्तिशास्त्र च । ज्ञानप्रस्थानस्य टीका महाविभाषेति ख्याता । वसुबन्धोरभिधर्मकोशो सर्वास्तिवादिना प्रमुख ग्रन्थ ।

सौत्रान्तिकसम्प्रदायस्य प्रवर्तक कुमारलात कल्पनामण्डितिकाया सौत्रान्तिकसिद्धा-

---

१ इमे त्रयो ग्रन्था समासत प्रस्थानत्रयीति ख्याता । शङ्करात् प्रागेव गौडपादः माण्डूक्यकारिकाया भर्तृहरिश्च वाक्यपदीयस्य रचना कृतवन्तौ । इमौ प्रायो बौद्धदर्शनेन प्रभावितौ स्त ।

२. तद्यथा रामाचार्यस्य तरङ्गिणी, ब्रह्मानंदस्य गौडब्रह्मानंदीयं गुरुचंद्रिका वा, धर्मराजस्य वेदांतपरिभाषा, अद्वैतानंदस्य ब्रह्मविद्याभरणम्, गोविन्दानन्दस्य रत्नप्रभा, सदानन्दस्य वेदान्तसार., प्रकाशानंदस्य सिद्धांतमुक्तावली, सदानन्दस्याद्वैतब्रह्मसिद्धि. लक्ष्मीधरस्याद्वैतमकरन्दश्च ।

३ अभिधर्म इति धम्मसगणि विभङ्ग—कथावत्थु—पुग्गलपञ्ञत्ति धातुकथायमक पट्ठान इति सप्तग्रंथाना समासत नाम ।

न्तान् निरूपितवान्। तस्य शिष्यः श्रीलाभ सौत्रान्तिकविभाषा रचितवान्। यशोमित्रोऽभिधर्मस्य स्फुटार्थेति टीका लिखितवान्।

योगाचारसम्प्रदायस्य बहवो ग्रन्था सन्ति। तत्र मैत्रेयनाथस्य महायानसूत्रालङ्कार, धर्मधर्मताविभङ्ग, महायानोत्तरतन्त्रम्, मध्यान्तविभङ्ग, अभिसमयालङ्कारकारिकादय प्रमुख सन्ति। परवर्तियुगे दिङ्नागरचिता प्रमाणसमुच्चयवृत्ति-न्यायप्रवेश-हेतुचक्रनिर्णय-प्रमाणशास्त्र न्यायप्रवेशादय प्रमुखा ग्रन्था।

शून्यवादस्य प्रतिष्ठा नागार्जुनो माध्यमिककारिका-युक्तिषष्टिका प्रमाण-विध्वसनोपायकौशल्य-विग्रहव्यावर्तिनी-सुहृल्लेख-चतुःस्तवग्रन्थं कृतवान्। परवर्तियुगे आर्यदेवचन्द्रकीर्तिशान्तिदेवशान्तरक्षितादय शून्यवादविषयकान् बहून् ग्रन्थान् रचितवन्त।

जैनदर्शनस्यादिग्रन्था द्वादशाङ्गानि चतुर्दशपूर्वाश्च सन्ति। आचार्यपरम्परया तेषां ज्ञानमन्तिमयुगे भद्रबाहुना प्राप्तम्। भद्रबाहो पश्चात् भागशः एव तेषां ज्ञानमवशिष्टम्। ख्रीष्टाब्दस्य प्रारम्भिकयुगे आचार्यधरसेनोऽभिनवसाहित्यिकपरम्परया प्रतिष्ठा प्राच्यदर्शनानुसारमेवाकारयत्। तस्य शिष्यौ भूतबलि पुष्पदन्तश्च षट्खण्डागम इति ख्यात सूत्रग्रन्थ रचितवन्तौ। तयो समकालिको गुणधर. कसायपाहुड गाथाबद्ध चकार। कषायपाहुडस्य टीका ६००० श्लोकबद्धा यतिवृषभेण रचिता। उपर्युक्तग्रन्थाना बह्व्यष्टीका परवर्तियुगे रचिता।

जैनदर्शनस्य स्वतन्त्रग्रन्थकार कुन्दकुन्दाचार्य ख्रीष्टस्य पश्चात् प्रथमशतके समयसार-प्रवचनसार-पञ्चास्तिकायाना रचना कृतवान्। तृतीयशतके उमास्वामिना तत्त्वार्थसूत्रे जैनदर्शनस्य सूक्ष्मविवेचन कृतम्। तत्त्वार्थसूत्रस्य बह्व्य टीका वर्तन्ते।

स्वामी समन्तभद्र आप्तमीमांसाया स्याद्वादस्य विवेचन कृतवान्। अकलङ्कदेवेन जैनन्यायस्य चत्वारो ग्रन्था —सिद्धिविनिश्चय., न्यायविनिश्चय, लघीयस्त्रयम्, प्रमाणसग्रहश्च प्रणीता। परवर्तियुगे माणिक्यनन्दी न्यायस्य परीक्षामुखमिति सूत्रग्रन्थ रचितवान्। तस्य टीका प्रभाचन्द्रेण प्रमेयकमलमार्तण्ड इति नाम्नी रचिता। एतेषु ग्रन्थेषु दिगम्बरसम्प्रदायदर्शन निरूपितम्।[१]

श्वेताम्बरसम्प्रदायस्य मूलग्रन्थाना सख्या चतुरशीति। तेषु प्रथम द्वादशाङ्गानि बभूवु। द्वादशाङ्गेष्वधुना केवलमेकादश एव लभ्यन्ते। अङ्गग्रन्थै सम्बद्धान्युपाङ्गानि बभूवु। एषु ग्रन्थेषु जैनदर्शनसिद्धान्ता विकीर्णा एव वर्तन्ते। परवर्तियुगे सिद्धसेनस्य न्यायावतार, हरिभद्रस्य षड्दर्शनसमुच्चय तथा मेरुतुङ्गस्य षड्दर्शनविचार सन्ति।



१. अपरे च जैनदर्शनग्रन्था —गुणभद्रस्यात्मानुशासनम्, अमृतचन्द्रस्य तत्त्वार्थसार पुरुषार्थसिद्ध्युपाय नेमिचन्द्रस्य द्रव्यसग्रह, त्रिलोकसार, देवसूरेः प्रमाणनयतत्त्वालोकालङ्कार, मल्लिषेणस्य स्याद्वादमञ्जरी, सकलकीर्तेः तत्त्वार्थदीपिका दिगम्बरसम्प्रदायस्य सन्ति।

# धार्मिकप्रवृत्तयः

अस्मिन् ब्रह्माण्डे यत् किञ्चिदपि विद्यते तस्य सर्वोत्तमोपयोगः केन प्रकारेण कर्तव्य इति धर्मशास्त्रस्य प्रमुखविचारविषयः । धर्मशास्त्रानुसारं मानवजीवनमेकान्तं नास्ति । पूर्वमपि जीवनमासीत्, प्रायशः पश्चादपि जीवनं भविष्यति । अस्यां स्थितौ वर्तमानजीवने तथा व्यवहर्तव्यं येन भाविजीवनेऽपि सुखं भवेत् । ततो मुक्तिर्नाम मरणानन्तरं सर्वोच्चाभ्युदयः । यदि स्वप्रयत्नेन सा कदाचिन्न लब्धा भवेत्तर्हि येन केन प्रकारेण स्वर्गसुखाय यत्नः करणीयः । अथवा संसारे पुनर्जन्मनि पुनरपि स्वाभ्युदयावस्थितीनां शाश्वतीकरणाय वर्तमानजीवने उपायः करणीय इति विपश्चितां मतम् । तदभिप्रेत्य धर्मस्य परिभाषा कृता—यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ।

## धर्मस्य परिधिः स्वरूपं च

वैदिकधर्मानुसारं सृष्टेः रचयिता विद्यते । तत्र सृष्टिविधाने देवासुरमानवपशुपक्षिवृक्षलतानदीसमुद्रसूर्यनक्षत्रादीनि वर्तन्ते । सर्वेषां रक्षा प्रतिष्ठा वा येन नैसर्गिकविधानेन भवति तद् ऋतम् । ऋतमेवाधिदैविको धर्मः । निसर्गस्यान्तर्भूतो मानवोऽपि ऋतेन रक्षितः । यथा ऋतेन पारम्परिकजीवनं सम्भवति, तथैव मानवधर्मेण सर्वेषां कल्याणमायोजितम् । तथाहि महाभारते—

धारणाद्धर्ममित्याहुः धर्मो धारयते प्रजाः ॥ कर्ण० ४९.५०

एष धर्मो महायोगो दानं भूतदया तथा ॥
ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिः क्षमा ।
सनातनस्य धर्मस्य मूलमेतत्सनातनम् ॥ आश्व० ९४ ३१

महाभारत आश्वमेधिकपर्वणि ९१ ३३-३४

अशोकेन धर्मस्य सर्वजनहिताय स्वरूपं परिभाषितम् । तदनुसारम्—'धर्मः साधुः । कियान् तु धर्म इति । अपास्रवो बहुकल्याणं दया दानं सत्यं शौचम्' ।[1] मनुः धर्मस्वरूपं निर्णीतवान्—

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ २.१२

---

1. अशोकस्य द्वितीयस्तम्भलेखात् ।

धृति क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रह ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ ६.९२

भारतीयधर्मस्य परिधौ मानवजीवनस्य सर्वासु अवस्थासु कर्तव्याकर्तव्यस्य विवेचनं वर्तते । मरणानन्तरमपि सुगतिः केन प्रकारेण भविष्यतीति तत्र विचारणीयम् । जीवन-विन्यासस्य विविधपक्षेषु—संस्काराश्रमवर्णव्यवस्थाभोजनपानकलाशिल्पोद्योगादिषु कीदृशी प्रवृत्तिः समीचीनेति धर्मप्रकरणम् । राजनीतिकजीवनमधिकृत्य सुष्ठु भणितं यत् धर्मो राजराजः । लौकिकजीवने त्रिवर्गे धर्मः परमं स्थानं भजते । धर्मानुसारिणौ अर्थकामौ भवेतामिति मनुमतम्—

'परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।' ४.१७६

अथ किम् महाभारतानुसारं तु

शरीरस्यापि नाशेन धर्म एव विशिष्यते । आदि० २०५ १७

## धर्मस्यापरिहार्यत्वम्

मरणानन्तरं केवलं धर्माधर्मौ पुरुषेण सह गच्छतः इति भारतीया धारणा धर्मस्यापरिहार्यत्वं स्थापयति ।[1] पुरा भारता इहलोकात् परलोकमधिकतरं महत्त्वपूर्णं मन्यन्ते [illegible]। तथा हि व्यासः—

तैस्तच्छरीरमुत्सृष्टं धर्म एकोऽनुगच्छति ।
तस्माद्धर्मः सहायश्च सेवितव्यः सदा नृभिः ॥
प्राणी धर्मसमायुक्तो गच्छेत्स्वर्गगतिं पराम् ॥ अनु० १११ १४

धर्मपद्धतौ प्रवृत्ता नरा इहलोके ऐश्वर्यं प्राप्नुयुर्न वा, किन्तु परलोके तेषां स्वर्गीयमैश्वर्यं सुनिश्चितमेवेति लोकधारणा बभूव ।

## धर्मस्य परिवृत्तिः वैचित्र्यं च

धर्मानुसारं मानवानाम् अभ्युदयाय यत्र सिद्धान्ताः शाश्वतीकृताः । ते एव धर्मस्य सनातनत्वं द्योतयन्ति, किन्तु धार्मिकविधीनां कर्मकाण्डादीनां च युगे युगेऽभिनवस्वरूपं प्रदर्शितम्—

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे । अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥
मनुस्मृतौ १ ८५-८६

[illegible] सर्वेषां धर्मव्याख्यानामैकमत्यं वर्तते—

---

१ तथा मनुः —
एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः । ८ १७

वेदा विभिन्ना स्मृतयो विभिन्ना नासौ मुनिर्यस्य मतं न भिन्नम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥

## धर्मसंगमः

भारतीयो धर्मो महानद इव बहूनां धर्मधाराणां संगमनेन वैपुल्यमवाप । प्राचीनतमस्यार्यधर्मस्य मूलाधारा ऋग्वेदे स्थापिता । तत्र परमार्येतरधर्माणां सङ्गमात् पौराणिको धर्मः समजायत ।

धर्मपरिधौ कस्यचिद् विरोधितत्त्वानामपि समाहारो भवेदिति महाभारते व्याख्यातम्–

स एव धर्मः सोऽधर्मो देशकाले प्रतिष्ठितः ।
आदानमनृतं हिंसा धर्मो ह्यावस्थिकः स्मृतः ॥ शान्तिपर्वणि ३६ ११

### आर्येतरधर्माः

आर्येतराणां धर्मस्य प्रथमस्वरूपं सिन्धुसभ्यताया अवशेषैः परिचीयते । तत्र शिवोपासका मूर्तिमपूजयन् । नागवृक्षपशुजलादीनां पूजा प्रावर्तत । पूजानिमित्तं सम्भवतः बलिः समर्पितः । शरीरस्य स्वच्छतायै स्नानविधेर्लोकप्रियत्वं सातिशयमासीत् । पूजाकर्मकाण्डादयः सङ्गीतनृत्यवाद्यादिभिः समन्विताः ।

सिन्धुसभ्यतायां मातृरूपेण कापि देवी पूजिता । सा तु प्रकृतिरेवादिशक्तेः प्रतीकं प्रतिभाति । तत्र मातृदेव्याः अनेकमूर्तयः लभ्यन्ते । वैदिकधर्मे मातृदेव्याः समकक्षा अदितिः पृथिवी चास्ताम् । पौराणिकधर्मे चण्डी, दुर्गा, भवानी वा मातृदेव्यः पूजनीया अभिमताः ।

सिन्धुसभ्यतायां मत्स्याकृतिधारिणीं देवीं जनाः पूजयन्ति स्म । एकस्यां मुद्रायां नारीगर्भात् वृक्षस्योत्पत्तिरङ्किता वर्तते । तत् पृथिवीदेव्याः अङ्कनं प्रतिभाति । अधुनापि ग्रामदेव्याः पूजा ग्रामेषु सर्वत्र प्रचलति ।

शिवोपासनाय शिवः त्रिमुखोऽपि कल्पितः । शिवो योगीति सम्भावितः । स मुद्रासु हिंस्रपशुभिः व्याघ्रगण्डकमहिषमृगादिभिः परिवृतो वर्तते । महायोगीश्वर, ऊर्ध्वलिङ्ग ( रुद्रेशः ) विरूपाक्षश्च शिवाऽङ्कितः । शिवलिङ्गान्यपि तत्र सन्ति । मूर्तिपूजा तदा प्रचलति स्म ।

सिन्धुसभ्यतायां चित्रगणा कल्पनामौलिकी विविधपशुमानवानां रुण्डमुण्डयोर्वैचित्र्यपूर्णसंयोगेन स्पष्टमेव ।

सिन्धुसभ्यतायामन्त्येष्टिक्रिया प्रावर्तत । भूगर्भे शवा निधापिताः । तत्र शवैः सह

पात्राणि, वस्त्राभूषणानि, प्रसाधनसामग्र्यश्च स्थापितानि । कतिपयशवा काष्ठपेटिकासु निवेश्य भूगर्भे निगूहिता । एवंविधानैस्तत्रत्यानां पूर्वजान् प्रति श्रद्धा प्रकटति ।

अन्येऽपि बहव आर्येतरधर्मा बभूवुः । ऋग्वेदानुसारं वृत्र आर्येतराणां जातीनां देवोऽभवत् । तस्मिन्युगे कृष्णो धर्मसंरक्षक एवार्येतरधर्मस्योन्नायकोऽभवत् । असुरेषु दानश्रद्धादीनां विधानं नासीत् । वैदिकयज्ञानां प्रचलनमपि तत्र नाभवत् । ते प्रेतानां परलोकविजयार्थं तेषां शवं सुगन्धितद्रव्यैः अलङ्कारैः वस्त्रैश्च प्रसाधयन्ति स्म ।[1] महाभारतानुसारं देवासुरराक्षसब्राह्मणादीनां धर्मा विभिन्ना एवाभवन् ।[2] राक्षसा अपवित्रभाषिता बभूवुः ।[3]

आर्येतरधर्मः पूजाप्रधान आसीत् । पूजायां पशुबलिः पुष्पोपहारश्च प्रचलितौ । शक्तेरावाहनं कृत्वा तस्याः प्रतिष्ठा मूर्तिगृहवृक्षचित्रादिषु प्रतीकद्वारा कृता । पश्चादतिथिरूपेण तस्याः स्वागतं सम्पादितम् । प्रतीकस्य स्नानं तस्योपरि पत्रपुष्पाक्षतानां विकिरणं तस्मै सुस्वादुभोजनसमर्पणं वस्त्राभूषणादिभिरलङ्करणं चन्दनलेपनं सिन्दूरलेपनं च कृतानि । पश्चात् प्रार्थनाध्यानादिभिर्भक्तस्य तल्लीनताभूत् । द्राविडेषु हनुमन्तमपूजयन् । पूजाविधानं प्रचलितमासीत् । क्वचित् नरबलिरपि देव्याः परितुष्टये कृता ।[4]

पौराणिकयुगे यक्षराक्षसभूतपिशाचसर्पवेतालादीनां पूजा प्रावर्तत ।[5] विष्णुपुराणे गोपानां गिरियज्ञ गोयज्ञश्च वैदिकेन्द्रयज्ञस्थानापन्नौ प्रवर्तताम् । तत्र दधिपायसमांसादिभिः पर्वताय बलिरदीयत ।[6]

## वैदिकधर्मः

वैदिकधर्मस्य वैशिष्ट्यं यज्ञविधानमेव । तस्मादेव धर्मस्यास्याधिगमो बभूव । तत्र यज्ञैर्देवानां परितोषः कृतः । साधारणतो देवाः प्रकृतेरैश्वर्यशालिन्यः शक्तयोऽथवा पुराणपुरुषाः पितरो नेतारो वा बभूवुः । सर्वेषामेव तेषां न केवलं व्यावहारिकस्वरूपं समादृतम्, अपि तु तेषामाध्यात्मिकस्वरूपस्य शाश्वतरूपेण प्रतिष्ठा कृता । आध्यात्मिकस्वरूपदर्शनं श्रद्धामपेक्षते । यज्ञनयाऽपि सर्वमिदाध्यात्मिकस्वरूपस्य ज्ञानं भवति । तद्यथा सूर्यो लौकिकस्वरूपेण जगत् प्रकाशयति, आध्यात्मिकस्वरूपेण च मानवानां बुद्धिं स्फोरयति । आध्या-

---

१. छान्दोग्योपनिषद् ८.८.५ ।
२. आदिपर्व १५३.७, सभा० ३८.७२ ।
३. ऋग्वेद १०.८७.१९ ।
४. योगिनीतन्त्रे १५३ ।
५. पद्मपुराणे उत्तरखण्डे २८० अध्याये ।
६. विष्णुपुराणे ५.१०.३८-४६ ।

मिव स्वरूपं दिव्यत्वं प्रतिष्ठापयति। भारता काले काले अश्वत्थवस्तुषु दिव्यत्वस्य दर्शनं चक्रु । परिणामत सर्वेषामेव तेषा देवत्वं प्रतिपादितम् ।

देवानामाचारव्यवहारादय मानवै ग्रहणीया इति मनीषिणा मतम्। इत्थं धर्मसंस्थाने देवानामादर्शचरितस्य कल्पना महत्त्वपूर्णा वर्तते ।

## देवप्रतिष्ठा

देवा शक्तिशालिन । कतिपयदेवा प्रकृतिशक्तीना नियन्त्रणं कुर्वन्ति । ते सर्वेषा प्राणिनामधिपतय । साधारणतः सर्वे देवा लोकोपकारिण, सत्यपरायणा, ऋजवश्च सन्ति । ते सच्चरित्राणा जनाना मित्राणि सन्ति, पापान् दण्डयन्ति च । वैदिककल्पनानुसार देवाना मानवै सहातिशयसामीप्यमासीत् । तद्यथाग्निं प्रति ऋषिर्निवेदयति—

स न पितेव सूनवेऽग्ने सूपायनो भव ।
सचस्वा न स्वस्तये ॥ ऋग्वेदे १ १.९

इन्द्रो युद्धस्य देवोऽभवत् । तस्य साहाय्येन युद्धे मानवा विजयमिच्छन्ति स्म । तथा हि ऋग्वेदे—

यस्मान्नृते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते ।
यो विश्वस्य प्रतिमानं बभूव योऽच्युतच्युत्स जनास इन्द्र ॥ २ १२.९

इन्द्रोऽसुराणा हन्ता प्रसिद्ध एव ।

वरुण सर्वेषा देवाना पोषकोऽभवत् । स ऋतं प्रवर्तयति । मानवजाया कल्याण विदधाति च। तथा हि ऋग्वेदे—

उत यो मानुषेष्वा यशश्चक्रे असाम्या । १.२५.१५
यूय पात स्वस्तिभि सदा न ॥ ७,८६ ८

अश्विनौर्लोकोपकारित्वा विश्रुता वर्तते । मानवलोके, देवलोके वा यत्र कुत्रचित् साहाय्यस्यावश्यकता भवति तत्राश्विनौ समागच्छत । तद्यथा ऋग्वेदे

युवं च्यवान जरसोऽमुमुक्त नि पेदव ऊहथुराशुमश्वम् ।
नि रहसस्तमस स्पर्तमत्रिं नि जाहुषं शिथिरे धातमन्त । ७. ७१ ६

विष्णोर्लोक सुप्रसिद्ध एव मरणानन्तरमाश्रय । तत्र देवोपासकाना मानवाना जीवन रमणीय भवति। लोकोपकाराय विष्णो उरुक्रमत्व कविभि प्रशंसितम्। तथाहि—ऋग्वेदे

तदस्य प्रियमभि पाथो अश्या नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णो पदे परमे मध्व उत्स ॥ १ १५४ ५

अपर च—एको विममे त्रिभिरित्पदेभि ॥ १ १५४ ३

परवर्तियुगे सम्प्रतिष्ठिता सरस्वती ऋग्वेदे वाजिनीवती, पावका सूनृतानां दात्रीति विभाविता बभूव । तद्यथा—

महो अर्णः सरस्वती प्रचेतयति केतुना धियो विश्वा वि राजति । १.३.१२

सरस्वती न सुभगा मयस्करत् । १.८९.३

ऐतरेयब्राह्मणानुसारम्—विष्णुः देवानां परमः ।[1]

वैदिकयुगेऽप्योल्लिखिता प्रमुखा देवाः प्रतिष्ठिताः सन्ति—

स्वर्लोकस्य देवाः—द्यौः, वरुणः, मित्रः, सूर्यः, सविता, विष्णुः, पूषा, अश्विनौ, उषा, चन्द्रः, रात्रिः । एते द्युस्थानाः ।

भुवो लोकस्य देवाः—इन्द्रः, अपां नपात्, वायुः, पर्जन्यः, आपः, रुद्रः, मरुतः । एते मध्यमस्थानाः, अन्तरिक्षस्थाना वा ।

भूलोकस्य देवाः—अग्निः, सोमः, नद्यः, पृथ्वी, समुद्रः । एते पृथ्वीस्थानाः ।

लघुदेवाः—ऋभवः, गन्धर्वाः, अप्सरसः, वृक्षः, वास्तोष्पतिः, क्षेत्रपतिः, सीता, युद्धोपकरणानि, पशवः, वनपर्वतादीनामधिष्ठातारः ।

कर्तृदेवाः—धाता, विधाता, त्राता, नेता, त्वष्टा ।

परवर्तियुगे प्रजापतिः स्रष्टा बभूव । हिरण्यगर्भः सर्वेषां प्राणिनामधिपतिः । अदितिरादित्यानां द्वादशानां माता बन्धनविमुक्तकारिणी देवी वर्तते । अदितेर्व्यापकस्वरूपं प्रकल्पितम् । तथा हि ऋग्वेदे—

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम् ॥ १.८९.१०

देवाः प्रायशो मानवरूपाः कल्पिताः । तेषां हस्तपादादीनां कल्पना व्यञ्जनया प्रसिद्धा । तथाहि सूर्यस्य रश्मयः तस्य कराः । अग्नेः ज्वालाः तस्य जिह्वा । कतिपयदेवानां विशेषगुणा वर्तन्ते । तद्यथा—इन्द्रस्य युद्धकौशलमग्नेः बृहस्पतेश्च पौरोहित्यं सवितुराचार्यत्वं च ।

यज्ञ

देवानां प्रीत्यर्थं यज्ञद्वारा तेभ्य उपहारः प्रादीयत । यत्किञ्चिदपि मानवो भुनक्ति तदेव देवेभ्योऽपि भोज्यमिति कल्पनासीत् । देवेभ्यो दधिघृतान्नादीनि समर्पितानि । सोमो देवानां प्रियपेयमभवत् । देवानां कृते पशुबलिः प्रावर्तत ।

यज्ञाः साधारणतो द्विविधा मताः—नित्याः, नैमित्तिकाश्च । नित्ययज्ञाः गृहस्थानां पञ्च महायज्ञा एव । नैमित्तिकयज्ञाः पुरोहितानां साहाय्येन सोद्देश्यं सम्पादिताः । तेषां-

---

[1] ऐ. ब्रा. १.१.१—तदनुसारं वैष्णवधर्मस्य मूलं वैदिकयुगे निदर्शनीयम् ।

मुद्देयानां परिधौ लौकिकाः पारलौकिकाश्च प्रायः सर्वे लाभाः सिद्धयश्च समाविष्टा भवन्ति । इदमेव यज्ञस्य लोकप्रियत्वस्य प्रधानकारणम् ।

भारते यज्ञानां लोपो नाभवत् कदापि । दशमशताब्द्यां जयसिंहस्य काश्मीरे अथवा मध्ययुगे राजस्थानस्य नृपाणां बहवो यज्ञा विश्रुता एव ।

यज्ञनाम्नो बौद्धधर्मेऽपि ग्रहणं बभूव । तद्यथा त्रिशरणयज्ञ, निर्वाणयज्ञ, समाधि-यज्ञ, प्रज्ञायज्ञ ।[1]

मरणोत्तरविधानम् ।

वैदिकयुगे मानवानां मरणानन्तरं पितृलोके यमलोकवासोऽभिमतः । यमलोक एव स्वर्गः । तत्र सर्वं सुखकरम् । तथाहि—ऋग्वेदे

यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ॥ ९ १०९ ११

स्वर्गे मानवा मर्त्यलोके सम्पादितानां यज्ञानामिष्टापूर्तानां दानादीनां च फलं प्राप्नुवन्ति । तत्र पितृभ्यः पुत्रपौत्रादिभिः प्रदत्तानि वस्तूनि भोग्यानि भवन्ति ।[2]

पापानां कृते नरकं तमेव भजनीयम् । तथाहि ऋग्वेदे—

इन्द्रासोमा दुष्कृतो वव्रे अन्तरनारम्भणे तमसि प्रविध्यतम् ।
यथा नातः पुनरेकश्चनोदयत्तद्वामस्तु सहसे मन्युमच्छवः ॥ ७ १०४.२

मरणानन्तरं मानवः स्वकर्मानुरूपं फलं प्राप्नोति, अन्ययामृतत्वं लभते । पुनर्जन्मनः सम्भावनासीन्न निश्चयम् ।

वैदिकयुगे शवः प्रायशो दग्धः । क्वचित् शवस्य निखननमपि प्रचलितमासीत् ।

## उपनिषद्धर्मः

उपनिषद्युगे धर्मस्य त्रयः स्कन्धाः समुपस्थापिताः—(१) यज्ञः अध्ययनम्, दानं च (२) नैष्ठिकब्रह्मचर्यम् (३) तपश्च । यज्ञस्य महत्त्वं नातिक्रममभवत् । यद्यपि यज्ञेन स्वर्गप्राप्तिः तदापि सम्मतासीत् किन्तु स्वर्गच्युतिमपि दर्शयित्वामृतपदं मोक्षपदमेव तपसा श्रद्धया च समाहितम् । तद्यथा मुण्डकोपनिषदि ।

इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति ॥ १ २ १०

---

१. दीघनिकायस्य कूटदन्तसुत्ते ।
२. ऋग्वेद १०।८९ ।

तप श्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्त ।
सूर्यद्वारेण ते विरजा प्रयान्ति यत्रामृत स पुरुषो ह्यव्ययात्मा ॥ १.२.११

ब्रह्मचर्येण ब्रह्मनिष्ठता प्राप्येति धर्म उपनिषदाम् । ब्रह्मचर्यस्य सम्यक् परिपालनाय वानप्रस्थसंन्यासयोर्योजन कृतम् । ब्रह्मचर्यं सोपानमेव ब्रह्मलोके गमनाय । एतदर्थं जीवन- मेव यज्ञ । तथा हि—पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रात सवन । अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनम् । अथ यान्यष्टाचत्वारिंशद्- वर्षाणि तृतीयसवनम् ।[१]

अतएव ब्रह्म एव ज्ञेयम् । विद्वान् ब्रह्मज्ञानेनामरपद लभते । ब्रह्मज्ञानेन सर्वेभ्यो दुःखेभ्यो मुच्यते च ।[२]

ज्ञानमात्रेण ज्ञानिषु कतिपयवैशिष्ट्यानि जायन्ते । तद्यथा—प्राणव्यानसमाना दीना वायूना दार्शनिकस्वरूपज्ञानेन पुरुष तेजस्वी, अन्नाद , श्रीमान्, यशस्वी, ब्रह्मवर्चस्वी, कीर्तिमान्, ओजस्वी, सुन्दर , प्रख्यातश्च भवति ।[३] अनेन विधानेन मानवानामुदात्त- प्रवृत्तय सम्भूता ।

छान्दोग्यानुसार हृदयमेव स्वर्ग. । तथा हि—स वा एष आत्मा हृदि । तस्यैतदेव निरुक्त हृद्ययमिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेति । तद्यथा हिरण्यनिधि निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमा. सर्वा प्रजा अहरहर्गच्छन्त्य एत ब्रह्मलोक न विन्दन्त्यनृतेन हि प्रत्यूढा ।[४]

सर्वमानवाचरणेभ्यो धर्मस्तदासीत्—ऋत, सत्यं, तप , दम , शम., अग्निहोत्रं, स्वाध्याय- प्रवचनादीनि । तदा हि मनीषिण कामनासीत्—यशोजनेऽसानि । श्रेयान्वस्यसोऽसानि । त त्वा भग प्रविशानि । स मा भग प्रविश । धान प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ।[५]

उपनिषत्सु जीवनविन्यासस्य शुद्धि निदर्शिता । तद्यथा भोजनपानादीना शुद्धये प्रकल्पित यत् मन प्राणवाचा स्वरूप क्रमश अन्नजलतेजोभिर्निर्मितम् ।[६] अपर च— आहारशुद्धौ सत्त्वशुद्धि , सत्त्वशुद्धौ ध्रुवा स्मृतिः ।[७] मानवस्य भावनाया संस्कारो वस्तूनां दिव्यत्वप्रतिपादनेन सम्यग्भवति । तथाहि श्वेताश्वतरे

१ छान्दोग्ये ३ १६ ।
२ बृहदारण्यके ४ ३ १४ ।
शतपथब्राह्मणे ११,४ ४१, ३ १० ९,१६ ।
३ छान्दोग्ये ३ १३ ।
४. छान्दोग्ये ८ ३ ।
५ तैत्तिरीयशिक्षावल्ल्याम् ९ १ ।
६. तैत्तिरीयशिक्षावल्ल्याम् ४.३ ।
७ छान्दोग्ये ६ ५.१-४ ।

यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश ।
य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमः ॥ २ १७

मनोभावोऽयं विश्वं प्रति सौहार्दं जनयति ।

## महाभारतीयो धर्मः

धर्मस्य दश पत्न्यः सम्मता महाभारतानुसारम्—

कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया तथा ।
बुद्धिर्लज्जा मतिश्चैव पत्न्यो धर्मस्य ता दश ॥ आदि० ६० ४

तस्मिन् युगे धर्मस्य किञ्चिदभिनवस्वरूपं विकसितम् । तत्र वैदिकयज्ञस्य समर्थनं प्राप्यते, किन्तु यज्ञादपि विनयस्य महत्त्वं तथा क्रियाणां सत्त्वम् यैः समाजस्याभ्युदयः सम्भावितः । शान्तिपर्वणि स्पष्टं प्रचारितम्—धर्मेण विधृताः प्रजाः ।[1] एतदनुरूपं क्वचिल्लोकनायकानां पूजा समारभ्यत । तथा हि—

यथाचर्यान्त चारित्र्यमुदात्तं ब्रह्मवादिनः ।
तथा तथाचरन् पार्थ ब्राह्मणायततः प्रजाः ॥ आदि० १६० १८

### अभिनवप्रवृत्तयः

महाभारते पापस्याचरणेन पुण्यं न भवतीति प्रतिपादितम् । पुण्यं तु तपसा यज्ञेन च भवति । पापन्तु मनसा वाचा कर्मणा चेति त्रिविधम् ।[2] तीर्थयात्राया महत्त्वमपि यज्ञादपि वरमभिमतम् । साधारणजना यज्ञसम्पादनाय विपुलधनापेक्षा प्रयुक्तासीत् । दरिद्रास्तु यज्ञं सम्पादयितुमसमर्था अभूवन् । सर्वेभ्यो वर्णेभ्य आश्रमेभ्यश्च तीर्थयात्रा समानीकृता । भारतस्य सर्वेषु भागेषु तीर्थानि सम्भावितानि ।

भावस्य नैर्मल्यं धार्मिकदृष्ट्या सविशेषं मतम् । तपस्तु मनसा वाचा बुद्ध्या वा पापस्याचरणम्, न तु शरीरशोषणमेव तपः ।[3]

### देवप्रतिमा

देवा महाभारतेऽपि मानवतायाः सान्निध्यं प्रतिभान्ति । तपसा सदेहं स्वर्गगमनं साधारणमभवत् । अर्जुनो देवेभ्यो शस्त्रास्त्रादिभिः सह नृत्यकलामपि शिक्षितवान् ।

---

१ शान्तिपर्वणि ११० ११, आदि० ७८ ६

२ उद्योगपर्वणि ४३ अध्याये हिमालयपर्वतस्य शिरोऽग्रम् बीजवत् चित्ततायम्, स्वदायम्, ध्यानयम्—मनः पद्मादिमात्मस्वरूपादुच्चतरा मता । आश्वमेधिकपर्वणि ९८, ९९ अध्याये ।

३ वनपर्वणि १९९ ९४–९७ ।

दमयन्त्या स्वयंवरे देवा समागता । बृहस्पतिर्देवाना मानवाना च सर्वेषा पुरोहितोऽभवत् ।[1] नारद स्वर्गे मर्त्यलोके च निर्बाधरूपेण पर्यटन चकार । महादेवोऽपि स्वयमेवार्जुनेन सहायुध्यत् । स्वर्गो हिमालयेऽवस्थित इति धारणासीत् ।[2]

देवतायतनाना पर्वताना च पूजा समारभ्यत ।[3]

देवाना व्यक्तित्वेन भारतस्य विविधवर्गीया निवासिन सामाजिकसंस्थाने सूचिता बभूवु । तद्यथा शिवोपासका एकत्र देवासुरनागपिशाचयातुधानादय सन्ति ।[4] तथैव विष्णोरुपासका मनुष्यकिन्नरयक्षगन्धर्वराक्षसदेवदानवादय सन्ति । विष्णु सर्वेषाम धीश्वर ।[5]

देवाना मानवरूपेणावतार विशेषतो महाभारतीया कल्पना प्रतिभाति । रामकृष्णौ मानवताया रक्षार्थं सर्वेषामभ्युदयाय च कार्यपरायणौ बभूवतु । तावीश्वरस्य प्रतिनिधी मतौ सर्वत्र पूजितौ च ।

महाभारतयुगे काली, दुर्गा, त्रिभुवनेश्वरी वा नारायणस्यातिशयप्रिया देवी प्रतिष्ठापिता । सा विषमपरिस्थितौ दुर्गे वा ग्रस्तान् जनान् सर्वत्र रक्षतीति धारणासीत् । स्तोत्रैस्तस्या स्मरण कृतम् ।

## देवेतराणां प्रतिष्ठा

महाभारतयुगे देवेतराणा गन्धर्वनागयक्षराक्षसभूतादीना सार्वजनिकपूजाविधान प्रचलितम ।[6] अनेन प्रकारेणार्येतराणा जातानामार्यजातिभि सह सङ्गमो बभूव । भूतयज्ञेऽपि यक्षराक्षसादीना परितोषोऽभवत् ।

## सामाजिकसंश्लिष्टता

महाभारतेऽन्नदानस्य जलदानस्य च महिमा समवर्धत । इष्टापूर्तस्य वैशिष्ट्य शाश्वतरूपेण स्वीकृतम ।[7] अपर च सर्वेषा वर्णाश्रमधर्मानुकूल कर्तव्यपालनमावश्यक विहितम् । स्वकर्म घृणितमपि न त्याज्यमिति विधान सामाजिकसुव्यवस्थार्थं बभूव ।

मानवताया अभ्युदयार्थं समीचीनानि विधानानि कृतानि । तद्यथा—भीतस्य शरणार्थिनश्च रक्षामकुर्वत पुरुषस्य देशे वर्षा यथाकाल न भवति । रक्ष्यस्य पुरुषस्य रक्षाम

---

१ आश्रमे धकपर्वणि ५ अध्याये ।
२ आदिपर्वणि १७६ ८, वनपर्वणि १५९ २२, १२५ १९ शान्तिपर्वणि ३२८ ६ ।
३. आदिप० ६४ ४०, २१२ ६ ।
४ आश्वमेधिकपर्वणि ८ ३ ६ ।
५ तत्रैव ४३ १४ ।
६ अनुशासनपर्वणि ९७ अध्याये ।
७ अनुशासनपर्वणि ६४ ३ ४,६ ।

कुर्वन् सन्ततिजंगमनाशे म्रियते, तस्य पितरः सम्मानिता न भवन्ति पितृलोके । स स्वयं स्वर्गाद् भ्रश्यति ।[1] मित्रद्रोहिणः कृतघ्नाश्च घोरनरकं समुपयान्ति ।[2]

## आचार-प्रतिष्ठा

*महाभारतानुसारमाचारस्तु यज्ञादपि श्रेष्ठतरः पुण्यदायको वर्तते । तथाहि—*

न यत्नेदपरिश्रान्तो भाति भाति दान सदा ।
न कृच्छ्रेऽप्यस्य सर्वस्य तपोऽस्योपभोगोऽपि च ॥ आदि० ७४ ६

अपरं च शान्तनुः तिर्यग्योनेः प्राणिनामपि पिता बभूवेति तत्र प्रतिपादितम् ।[3]

युद्धमपि यज्ञवत् सम्प्रतिष्ठितमासीद् धार्मिकदृष्ट्या । युद्धे मृता जना स्वर्गं प्राप्नुवन्तीति धारणा बभूव ।[4]

स्वकर्मणो विज्ञापनं लोकप्रतिष्ठार्थं वा धर्मं धनं विज्ञापयितुं महाभारते स्पष्टमेव निर्णीतं यत् दानं, यशोऽध्ययनं धर्मं वा यदि मानपूर्वकं कृतं तर्हि तदेव न केवलं निष्फलं भवति अपितु विनाशमपि करोति । तथा हि—

तपश्च दानं च शमो दमश्च ह्रीरार्जवं सर्वभूतानुकम्पा ।
नश्यन्ति मानेन तमोऽभिभूता पुंसः सदैवेति वदन्ति सन्तः ॥ आदि० ८५ ७२

यज्ञस्य तदनुकरणमिनवश्च न परिकल्पितमासीत् । तथा हि—

आरम्भयज्ञाः क्षत्राश्च हविर्यज्ञा विशः स्मृताः ।
परिचारयज्ञाः शूद्राश्च जपयज्ञा द्विजातयः ॥ शान्ति० २३७ १२

## कौटुम्बिकसुश्लिष्टता

*कौटुम्बिकसुश्लिष्टताया सर्वोत्तमादर्शो महाभारते स्थाने स्थाने विद्यते । तथा हि—*

मातापित्रोर्गुरूणां च पूजा बहुमता मम ।
इह युक्तो नरो लोकान् यशश्च महदश्नुते ॥ शान्तिपर्वणि १०९ ३
येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः ।
प्रीणाति मातरं येन पृथिवी तेन पूजिता ॥ अनुशासनपर्वणि ७ २५

## पापनिवृत्ति

पापान्निवृत्तिः तपसा, कर्मणा, दानेन च भाविता । पापादीदृशं निवृत्तिः सर्वा सम्मा-विता ये भविष्ये पापं न कुर्वन्ति स्म । आत्मशोधनाय यज्ञादुत्तरं प्रायश्चित्तदानादीनां विधानं प्रचलितम् । पशुपक्षिणां हत्याया वृक्षच्छेदनस्य च पापान्निवृत्तये त्रिदिवसान् वायुभक्षण

---

१ वनपर्वणि १९९.२०-२२ ।
२. शान्तिपर्वणि १६७ २० ।
३ आदिप० ९८.१६ ।
४. सभा० ११ ६२-६४ ।

स्वकुकर्मप्रकाशनं च विहितं ।[1] राजा चेद्दण्डनीयान् पुरुषान् न दण्डयति तर्हि तस्य शुद्धये अहर्निशमुपवासः प्रकल्पितः ।

## मरणोत्तरविधानम्

महाभारतानुसारं पुण्येन स्वर्गो लभ्यः । मरणानन्तरं स्वकर्मानुसारं त्रिविधा गतिः सम्भाविता—मनुष्यजन्म, स्वर्गवासः, तिर्यग्योनिश्च । पशुयोनिः कामक्रोधादिभिः सम्भाविता । ज्ञानेन ब्रह्मलोकप्राप्तिर्निर्दिष्टा । तत्र ब्रह्मणि लय एव गतिः । तपसा स्वर्गगमनं दानेन भोगप्राप्तिर्ज्ञानेन मोक्षः तीर्थस्नानेन पापक्षयश्च सम्भवन्ति । शुभकर्मणा देवत्वमशुभैश्च नारकीयजीवनं शुभाशुभैः पशुपक्षियोनिगमनं सर्वसम्मतमासीत् ।

स्वर्गाच्च्युतिः कथं भवतीति महाभारते सम्यग्व्याख्यातम्—

ज्ञातिः सुहृत्स्वजनो यो यथेह क्षीणे वित्ते त्यज्यते मानवैर्हि ।
तथा तत्र क्षीणपुण्यं मनुष्यं त्यजन्ति सद्यः सेश्वरा देवसङ्घाः ॥ आदि० ८५ २

## कर्मफलम्

पूर्वजीवनस्य कर्मणां विपाकः परजन्मनि यथाकालं भवति । कर्म तु बीजमिव वर्तमानजीवनेऽङ्कुरितं वृक्षश्च भूत्वा फलं ददाति, अन्यथा चिरात् परजन्मनि फलदं भवति । महाभारते स्वर्गनरकदायिनां कर्मणां संग्रहणं स्पष्टं कृतम् ।[2] अतिशयपुण्यकारिणः सदेहा एव देवैः स्वर्गं नीयन्ते । युधिष्ठिर इन्द्रेण सह स्वर्गमगच्छत् ।

पुनर्जन्म कथं भवतीति महाभारते निरूपितम्—

अस्त्रं रेतः पुष्पफलानुपृक्तमन्वेति तद्वै पुरुषेण सृष्टम् ।
स वै तस्या रज आपद्यते वै स गर्भभूतः समुपैति तत्र ॥ आदि० ८५.१०

गोब्राह्मणानां पूजा तु महाभारतयुगेऽतिशयफलप्रदा मता ।[3] शरीरस्य सौभगाय ज्ञानप्राप्तये च चान्द्रव्रतविधानमक्रियत ।[4]

इन्द्रस्य महाभारतयुगे माहात्म्यं क्षीणमभवत् । स तु परदारगामीति निरूपितः । महर्षिणा विपुलेन तस्य भर्त्सना कृता—देवा मनुष्याश्च तव पूजां न चिरं करिष्यन्ति ।[5] विपुलस्य वाक्यमिदं सत्यमभवत् ।

## वरशापौ

महाभारतयुगे वरशापयोः प्रचलनं सातिशयमासीत् । देवगन्धर्वाप्सरोमहर्षिब्राह्मण-

---

१ शान्तिपर्वणि ३५ अध्यायतः ।
२. स्वर्गारोहणपर्वणि ३.१३ १४ ।
३ वनपर्वणि २०० ६७ ।
४. अनुशासनपर्वणि ४१ २० ।
५ आश्वमेधिकपर्वणि ८ ३—६ ।

तपस्विजना पतिव्रता स्त्रियश्च वरशापयो प्रदाने समर्था इति धारणा बभूव। तपसा भक्त्या च वराऽऽदरेण च महता शापो लभ्य। इहलोकेऽपि देवाना वरा सद्य फलदायिनो बभूवु।

## मानवधर्म

### चतुर्वर्ग-स्थापना

मन्वनुसार वर्णाश्रमव्यवस्थानुबद्ध भारतीयजीवन चतुर्वर्ग समुद्दिश्य विलसति। चतुर्वर्गसोपानेन भारतीया सस्कृति सम्यक्तया सर्वोच्चशिखर समारोहति। एतेषु नैक उपेक्षणीय। तथाहि—

> धर्मार्थावुच्यते श्रेय कामार्थौ धर्म एव च।
> अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थिति॥ मनु० २.२२४

अपर च—मनुना देशधर्म, कुलधर्म, पाषण्डधर्म, गणधर्मश्च निर्दिष्टा।[1] धर्मस्य सनातनस्वरूप मनुस्मृतौ सगृहीतम्।

### सामाजिकसुश्लिष्टता

धर्मविधानैर्मनु सामाजिकसुश्लिष्टता प्रत्यपादयत्। तथा हि—वृद्धाना सेवया विद्या, आयु, यश, बल च वर्धन्ते। तत्राभिवादनप्रत्यभिवादन-कुशलक्षमप्रश्न परस्परसम्बोधन-मार्गदान ज्येष्ठपादिसम्बन्धिनो नियमा निर्दिष्टा।[2] परोपकारस्तु सद्य फलप्रदो निरूपित। तथा हि—

> वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नद।
> तिलप्रद प्रजामिष्टा दीपदश्चक्षुरुत्तमम्॥ ४.२२९

### कौटुम्बिकसुश्लिष्टता

कुटुम्बे च कश्चिन्निरादरणीय इति मनुना प्रतिपादितम्। तत्र केनापि सह विवादोऽपि वर्जित। एव कुर्वन् जन पापात्प्रमुच्यते।[3] मातापित्रोराचार्यस्य च प्रिय च सेवा च कर्तु विधानमुक्त्वा मनु प्रोक्तवान्—

> आचार्यो ब्रह्मणो मूर्ति पिता मूर्ति प्रजापते।
> माता पृथिव्या मूर्तिस्तु भ्राता स्वो मूर्तिरात्मन॥ २.२२६
> तेष्वेव त्रिषु तुष्टेषु तप सर्व समाप्यते॥ २.२२८

---

१ मनुस्मृतौ १.११८।
२. तत्रैव २.१२२—१३८।
३ तत्रैव ४.१८०,१८१।

त एव हि त्रयो लोकास्त एव त्रय आश्रमाः ।
त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ २ २३०
सर्वे तस्यादृताः धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफला क्रिया ॥ २२ २४

मनुना स्पष्टं निर्दिष्टम्—यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः । स कुटुम्बे वधूनां कन्यकानां च सुशोभनं स्थानं प्रत्यपादयत् ।[1]

यज्ञविधानम्

देवयज्ञप्रकरणे मनुना अग्नि-सोम-विश्वेदेव-धन्वन्तरि-कुहू-द्यावापृथिव्यनुमतिदेवताभ्यो गृह्याग्नौ हवनं विहितम् । तेन इन्द्रवरुणादिभ्यो लक्ष्मीभद्रकालीवनस्पतिभ्यश्च बलिसमर्पणं समादिष्टम् । सर्वेषां चराचराणां दृश्यादृश्यानां च कृते भरण-पोषणयोजनं मनुना बलिवैश्वदेवविधानेन कृतम् ।[2]

स्वर्गनरकौ

एकविंशतिनरकाः राज्ञो दानस्य प्रहोतुरेव निर्दिष्टाः । तेषु तामिस्रान्धतामिस्र-महारौरव-महावीचि-सम्प्रतापन-लोहशङ्कसिपत्रवनादयः प्रमुखाः ।[3] विविधैर्दानैः रमणीयानां स्वर्गलोकानां प्राप्तिः निर्दिष्टा ।[4] विष्णुपुराणानुसारं तु पापपुण्ये हि नरकस्वर्गसंज्ञे स्तः ।[5]

व्यावहारिकसौष्ठवम्

मनुर्मानवसमाजमभ्युत्थानशीलं कर्तुमियेष । इदमुद्दिश्य मनुकृतानि विधानानि द्रष्टव्यानि । तथा हि—ब्राह्मे मुहूर्ते उत्तिष्ठेत् । आभरणं धनाय यतितव्यम् । धनं दुर्लभं नास्ति । अपरिचितेन सह यात्रा न कुर्यात् । पवित्रस्थानसमीपे कच्चरं न कुर्यात् । शुष्कवैरविवादौ न कुर्यात् । सोपानं प्रति कदाप्याक्षेपं न कुर्यात् । द्वेषदम्भमानक्रोधक्रौर्याणि परित्याज्यानि । शरीराङ्गैश्चपलैर्न भवितव्यम् । कुलपद्धतिं न त्यजेत् । लघुजनानां तिरस्कारमुपेक्षेत । सज्जनानां मध्ये शुद्धः परिचयो दातव्यः ।[6]

स्वातन्त्र्यप्रेम

मनुर्धार्मिकदृष्ट्या स्वातन्त्र्यप्रेमादिशति । तद्यथा—

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः ॥

१ मनुस्मृतौ ३ ५१—६२ ।
२ तत्रैव ३ ८४—९७ ।
३ तत्रैव ४ ८७—९० ।
४ तत्रैव ४ २२९—२३३ ।
५ विष्णु० २ ६ ४४ ।
६ मनुस्मृतौ ४ ९२—१५२, १७४, १८६–१९१, २१८, २५५

यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः ।
तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥ ४ १६०–१६१

## पौराणिको धर्मः

पौराणिकधर्मस्य प्रवृत्तिर्द्विविधा वर्तते—सर्वजनीना साम्प्रदायिकी च । प्रथमं सर्वजनीना प्रवृत्तयो विविच्यन्ते । पौराणिको धर्मः प्रायशस्तान्त्रिक एव ।[1]

## अनुष्ठानानि मान्यताश्च

### भक्तिः

पौराणिकधर्मे भक्तेः प्राधान्यमासीत् । भक्तिस्तु त्रिविधा—मानसी वाचिकी कायिकी च । वेदार्थविमर्शो ध्यानधारणापूर्वकं मानसभक्तिः । मन्त्रजपवेदपाठादयो वाचिकभक्तिः । व्रतोपवासादयः कायिकभक्तिः । भक्तेरन्यान्यपि त्रीणि स्वरूपाणि—लौकिकी, वैदिकी, आध्यात्मिकी च सन्ति ।

धूपदुग्धरत्नदीपचन्दनमालापुष्पसुवर्णहारनृत्यगीतवाद्यभोज्यादिभिः पूजा लौकिकभक्तिः । वैदिकमन्त्रैः जपो यज्ञो वेदादीनां स्वाध्यायश्च वैदिकभक्तिः । आध्यात्मिकभक्तिर्द्विविधा—साङ्ख्यजा, योगजा च । प्रकृतिपुरुषयोर्विवेचनं साङ्ख्यजभक्तिः । योगाभ्यासपरं ध्यानं योगजभक्तिः ।[2] उद्देश्यमधिकृत्य भक्तिस्त्रिविधा—सात्त्विकी, राजसी तामसी च । सात्त्विकी भक्तिर्मोक्षेच्छया भवति । राजसी भक्तिर्विषयसिद्धये प्रभवति । अहङ्कारायमाडम्बराय वैरवृत्त्या समन्विता भवति तामसी भक्तिः ।[3]

भगवतः परितापाय वैरमपि साधनं मतम् । तथा हि भागवतानुसारम्—

यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् ।
तथा भक्तियोगेन इति मे निश्चिता मतिः ॥ ७ १ २६

भागवतधर्मस्य प्रभावेणाहिंसायाः सम्यक् प्रचारोऽभवत् । तदनुसृत्य वैदिकयज्ञे पशुहिंसास्थाने घृतपशुः पिष्टपशुर्वा विधारित इति प्रकटितं कल्हणेन । तेन कश्मीरराजो मेघवाहनो वर्णितः —

तस्य राज्ये जिनस्येव मारविद्वेषिणः प्रभोः ।
क्रतौ घृतपशुः पिष्टपशुर्मुं तवलावभूत् ॥ राजत० ३.७

---

१. तत्रास्य स्वरूपं भागवते ११ ३ ४७-५४ स्पष्टीकृतम्
२ पद्मपुराणे सृष्टिखण्डे १५ अध्याये
३ पद्मपु० उत्तरखण्डे १२६ अध्याये

## व्रतानि

पौराणिकयुगे व्रतविधेर्विस्तार सातिशयो वर्तते । तद्यथा भीमद्वादशीव्रते—उपवास, विष्णुपूजन, कृष्णमहादेवगणेशादीना गन्धपुष्पधूपादिभि पूजन, मस्तके कलशोत्पतज्जलधाराधारण हवन रुद्राध्यायपाठ, विष्णुसामगायन च समन्वितानि । कतिपयव्रतेषु विशिष्टजीवनविन्यासविधि सम्भावित । तद्यथा—अहिंसाव्रते मासभोजनपरित्याग । प्रीतिव्रते आषाढमासादारभ्य चतुर्मास तैलाभ्य जननिषेध ।[1]

व्रताना बहुविधोपयोगिता सम्भाविता । तथा हि—आदित्यशयनव्रतेन पापानि प्रनष्टानि । तस्य कीर्तनमात्रेण माहात्म्यश्रवणेन चेन्द्रस्य प्रियो भवति । चन्द्रव्रतेन सौन्दर्यमारोग्य च लभ्येत । चन्द्रमसा नामकीर्तनेनोत्तमा बुद्धिर्लभ्यते, विष्णुलोके स्थान च प्राप्यते ।[2]

व्रतानामुपर्युक्तवर्णनेन स्पष्ट प्रतिभाति यत् पौराणिकयुगे यज्ञाना स्थान व्रतैरंशतोऽवश्यमेव गृहीतम्, यतस्तेषामनुष्ठानेन बहुविधा ऐहलौकिका पारलौकिकाश्चाभ्युदया सम्भाविता । तथा विधानं प्रायश सर्वेभ्यो वर्णेभ्यो वर्गेभ्यश्चाक्रियत ।

सर्वव्रतेषु सत्यस्य, ब्रह्मचर्यस्याहिंसाया अस्तदानस्य शुद्धभावस्य नित्यताऽमताया श्रावश्यकता भागवते प्रतिपादिता ।[3]

## जप

पौराणिकयुगे जपस्य महिमा सर्ववित । तद्यथा—गायत्रीजपे आपादमस्तक शरीरस्य चतुर्विशतिस्थान गायत्रीमन्त्रस्य प्रत्येकाक्षरस्य न्यासेन ब्रह्मलोक प्राप्यते । बहवो मन्त्रा जपाय निर्दिष्टा । तद्यथा—यजुर्मन्त्र, विष्णुमन्त्र, माहेश्वरमहामन्त्र, देवीमन्त्र:, सूर्यमन्त्र गणेशमन्त्र ।[4] जपेन पापविनाशन प्रकल्पितम् । सूर्यमन्त्रजपेन सन्तानविद्याधनादी प्राप्यन्ते ।[5] अन्ये जपमन्त्रा गङ्गासीतारामादिविषयका सन्ति । तथा हि राममन्त्र—

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीताया पतये नम ॥[6]

## दिव्यसत्ताना पूजा

प्रथम तावद् वृक्षपूजा । स्नानस्य पश्चात् पिप्पलवृक्षस्पर्शेन सर्वेभ्य पापेभ्यो मुक्तिर्भवति । अश्वत्थवृक्षदर्शनेन पापनाश, स्पर्शेन लक्ष्मीप्राप्ति, परिक्रमयायुर्वर्धनम्, हविष्य-

---

१ पद्मपुराणे सृष्टिखण्डे २० अध्यायत । तत्रैवान्यव्रतानि—रुद्रनीलगौरीशिवसौम्यसौभाग्यसारस्वतसामवीरसूर्यविष्णुशीलदीप्तिदृढब्रह्मकल्पवृक्षधनमदसुगतमातृवैनायकसौरयमकादीनि वर्णितानि ।

२ तत्रैव २४ अध्यायत ।

३ भागवते ८,१६,४७—५९

४–५ पद्मपुराणे सृष्टिखण्डस्य ४३ अध्याय ।

६ विस्तृतविवरणाय पद्मपुराणस्योत्तरखण्डे २८१ अध्यायो द्रष्टव्य ।

दुग्धनैवेद्यपुष्पधूपदीपादीनामर्पणेनावश्यमेव स्वर्गे स्थानं लभ्यते । आमलकं परितः पंचाशदधिकत्रिशतहस्तायामभूमिं कृष्णेनैव समावृता । तुलसी स्वयं विष्णुनारोपितेति धारणा बभूव । तस्याः सेवया गुरुब्राह्मणदेवतातिथ्यादीनां सेवनमनायासेन भवति ।[1]

देवालयेषु दीपदानेन देवमूर्तिभ्यो वस्त्रदानेन धार्मिकभवनानां निर्माणालङ्करणनवीकरणस्वच्छीकरणैश्च बहुविधानां लौकिकपारलौकिकानामभ्युदयानां समुत्पत्तिः सम्भाविता । देवमूर्तीनां प्रतिष्ठायाः अतिशयमहत्त्वं सङ्कीर्तितम् ।[2]

## गोब्राह्मणपूजा

पुराणानुसारं वेदाग्निगोब्राह्मणेभ्यो जगतः प्रादुर्भावोऽभवत् । गौः सर्वेषां देवानां प्रतीकरूपेण सम्मानिता । तस्या विविधाङ्गेषु विविधदेवानां वासः प्रकल्पितः । तद्यथा मुखे वेदः, शृङ्गयोः शङ्करविष्णू च । गवां प्रणामपूर्वकं प्रदक्षिणा, प्रातःकाले स्पर्शः, गोमन्त्रजपः, गोधूलिस्नानं गोदानं च स्वर्गमुक्तिपापनिवृत्त्यर्थं च समाम्नातानि ।[3]

ब्राह्मणस्तु देवानामपि देवोऽभिमतः । स धर्ममूर्तिः, मोक्षप्रदाता च । ब्राह्मणस्य परितोषेण विष्णोः परितुष्टिर्भवति । शरीरे तस्य विष्णुर्वसति । ब्राह्मणपूजनेन आयुर्यशोविद्याधनादीनां वृद्धिर्जायते । इयं प्रतिष्ठा केवलमाचारपरायणेभ्यो लोकेभ्यो भवति नान्येभ्यः ।[4]

## नदीसेवनम्

नदीनां पुण्यप्रभावः समाम्नातः । तासु गङ्गा सर्वोत्तमा । गङ्गायां स्नानं तस्यास्तटे पितृभ्यः पिण्डदानं तर्पणं च गङ्गाजलदर्शनं गङ्गातटे वासो गङ्गाया नामकीर्तनं जले प्राणविसर्जनं साधुसेवनं तस्यामस्थिविसर्जनं सर्वाण्येव स्वर्गाय, मुक्त्यै, पापनिवृत्त्यै वा बभूवुः । गङ्गासेवनेन मानवभूदासप्रवृत्तीनामुदयो भवति ।[5] अपरा नद्यः—गण्डकी, वेत्रवती, साभ्रमती च समादरणीयाः ।

गंगाया जलं पातुं विदेशेभ्यो राजानः प्रयागात्तस्य प्राप्तिमकुर्वन् । तदा जलपात्रे कश्मीरराजस्य जयापीडस्य मुद्राङ्किता । अयमधिकारस्तेन राज्ञा गङ्गभूमौ लक्षाश्वानां ब्राह्मणेभ्यो दानेन सम्प्राप्तः ।

## तीर्थानि

तीर्थानां सङ्ख्या पौराणिकयुगे वर्धिता । सर्वा नद्यः सर्वे पर्वता जलाशयाश्च तीर्थमेव । सर्वेषां तीर्थानां देवो विष्णुः । यज्ञभूमिः, श्राद्धभूमिः, यज्ञः, अग्निहोत्रम्, स्वाध्याय-

---

१–२ पद्मपुराणे सृष्टिखण्डे ५३–५९ अध्यायाः ।
३. पद्मपुराणे सृष्टिखण्डे ४५ अध्यायः ।
४ तत्रैव ४३ अध्यायः ।
५. पद्मपुराणे सृष्टिखण्डे ६० अध्यायः ।

मन्दिरम्, गोशाला, सोमयाजिनो ब्राह्मणस्यावासः, पवित्रोपवन, पिप्पलपर्कटीवटवृक्षा, मातापित्रो स्थानम्, पुराणपाठस्थानम्, आचार्यकुलम्, सतीना गृहाणि, सुयोग्यपुत्रस्य स्थानम्—सर्वाण्येव तीर्थानि सम्मतानि। तीर्थेषु वास, स्नान दान च पुण्यप्रदानि सन्ति।[1] भागवते विद्वासोऽपि तीर्थानीति प्रतिपादितम्—

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामया ।
ते पुनन्त्युरुकालेन दर्शनादेव साधव ॥
नाग्निर्न सूर्यो न च चन्द्रतारका न भूर्जल खं श्वसनोऽथ वाङ्मन ।
उपासिता भेदकृतो हरन्त्यघ विपश्चितो घ्नन्ति मुहूर्तसेवया ॥ १० ८४ ११-१२

भारतदेशस्यैक्यविधाने तीर्थाना महत्त्वमनुत्तममेव वरीवर्ति ।

## दानम्

सत्पात्रेभ्यो दानेन विष्णुरपि प्रसन्नो भवति । प्रसन्नो भूत्वा स दातु कामना पूरयतीति धारणासीत् । दानप्रभावेण बुद्धिशक्तिधनगुणादयोऽभ्युदिता । अदाता रोगी भवति । सुखस्य स्वर्गमोक्षयोश्च प्राप्तिर्दानेन सम्भाव्यन्ते । तीर्थेषु यज्ञेषु च दानस्य महाफल जायते ।[2] अन्नदान श्रेष्ठमेव । अन्नमेवामृतमिति धारणातोऽन्नदान प्राणदानम ।[3] पद्मपुराणानुसार दानभाव विष्णु सत्य करोति—

यादृशेनापि भावेन मामुद्दिश्य ददाति य ।
तादृश तस्य वै भाव सत्यमेव करोम्यहम् ॥

## मालाधारणम्

धार्मिकविधिषु रुद्राक्षमालाधारणमावश्यकमेव । रुद्राक्षमालास्पर्शेन स्वर्गसुख तस्य धारणेन मोक्षश्च सम्भावितै ।[4] तुलसीमालाया वैष्णवधर्मे विशेषमहत्त्व प्रकल्पितम् ।[5]

## पुराणकथा

पुराणकथाना श्रवण वैदिककालत प्रचलितमासीत् । पौराणिकयुगे तेषा श्रवणेन पापेभ्यो निवृत्ति, वैभवाना प्राप्ति, गति, आरोग्यम्, प्रतिदिन स्वातन्त्र्य च सम्भावितानि ।[6] गीताकथा तु विष्णुमयी मता । तस्या श्लोकपादाभ्यासेनापि मुक्ति प्राप्यते ।[7]

---

१. पद्मपुराणे सृष्टिखण्डे ३१ अध्यायत ।
२ पद्म० सृष्टिख० ३१ ४० अध्यायत ।
३ तत्रैव ६४ अध्यायत ।
४ पद्मपुराणे सृष्टिखण्डे ५८ अध्यायत ।
५ तत्रैव पातालखण्ड ७९ अध्यायत ।
६ पद्मपुराणे पातालखण्डे रामकथोपसहारप्रसङ्गात् ।
७ तत्रैवोत्तरखण्डे १७१ अध्यायत ।

श्रीमद्भागवत विष्णो साक्षाद्वाङ्मयी मूर्तिरेव । तस्य सप्ताहश्रवणेन सर्वाणि पापानि प्रणश्यन्ति । भागवतस्य दशमैकार्धस्यापि नित्यपाठेन राजसूयाश्वमेधयो फलं प्रकल्पितम् । अन्येषामपि पुराणानां प्रायस्तादृग् महत्त्व निदर्शितम् ।[१] तथा हि भागवते ध्रुवचरित-मधिकृत्य प्रोक्तम्—

यश्च यशस्यमायुष्य पुण्य स्वस्त्ययन महत् ।
स्वर्ग्यं ध्रौव्य सौमनस्य प्रशस्यमघमर्षणम् ॥ ४ १२ ४५
ध्यायेच्छ्रद्दधानानां तीर्थपादपदाश्रय ।
नेच्छस्तत्रात्मनाऽस्मान सन्तुष्ट इति सिध्यति ॥ ४ १२ ५०

ईदृशी मान्यता कथासाहित्यस्याबालवृद्धलोकप्रियताया प्रधानकारणम् ।
धर्मप्रचारस्य योजना महती बभूव । तथा हि भागवते—

धर्मं ग्राहयितु प्राय प्रवक्तारश्च देहिनाम् ।
आचरन्त्यनुमोदन्ते क्रियमाण स्तुवन्ति च ॥ १२ १०·२९

## देवप्रतिष्ठा

### त्रिदेवा

पौराणिकयुगे ब्रह्मा, विष्णु, महादेवश्च सर्वश्रेष्ठा त्रिदेवा सम्मानिता । ते सृष्टे-रुद्भवस्य पालनस्य प्रलयस्य चादिकारण म यन्ते । त्रिष्वपि मोक्षप्रदानस्य शक्तिर्विद्यते । इदमेव तयां प्रमुखवैशिष्ट्यमस्ति ।

त्रिदेवानामेकत्व पुरस्कृतम् । तथा हि विष्णुपुराणानुसार भगवान् ब्रह्मरूपेण विश्व रचयति, विष्णुरूपेण पालयति शिवरूपेण संहारयति च । वायुपुराणानुसार शिव विष्णु प्रति प्रोक्तवान्—मुक्तिविनस्तव जप कृत्वा मयि लीना भवन्ति । त्व प्रकृति, अहं पुरुष । त्व मेऽर्धशरीर तथैवाह तवार्धशरीरम् । अह तव हृदये त्व च मम हृदये स्थित ।[२] भाग वतेऽपि तेषामेकत्व प्रतिपादितम् । तथा हि—

तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि ।
ब्रह्मरुद्रौ च भूतानि भेदेनाज्ञोऽनुपश्यति ॥ ४ ७ ५२
त्रयाणामेकभावानां यो न पश्यति वै भिदाम् ।
सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति ॥ ४ ७ ५४

पुराणेषु त्रयाणां देवानां परस्पर सौहार्दमेकत्व च निष्कृष्टम् । सुष्ठु मत पद्मपुराण-स्येदृशम्—

---

१ पद्म० उत्तरख० १६० अध्याय ।
२ वायुपुराणे २५ ११ ३० ।

एकमूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वरा ।
त्रयाणामन्तर नास्ति गुणभेदा प्रकीर्तिता. ॥ भूमिखण्ड ७१ २०

अन्ये देवा

पौराणिकयुगे शिवपरिवार समाज्ञात । गणेशस्कन्दौ शिवस्य पुत्रौ सम्मानितौ। गणेशस्याग्रपूजा विहिता । सर्वे देवा अपि गणेशस्याग्रपूजा कुर्वन्तीति निर्दिष्टम् । पुष्पफलमूलमोदकदधिघृतधूपदीपादिभि वाद्यसङ्ख्या च गणेशो निषेवित ।[१]

सूर्यो ब्रह्मण स्वरूपमेवाभिमत । तस्याराधनया मोक्षोऽपि सम्भाव्यते स्म । सूर्यपूजया शारीरसौख्य प्रकल्पितम् । सूर्यपूजार्थं मन्त्रपाठो नैवेद्य फलमर्घ्यं कदलीपत्र रक्तचन्दन च समर्पितानि ।[२]

लक्ष्मी

विष्णो पत्नीति लक्ष्मी पौराणिकयुगे सविशेष महत्त्वमभजत । विष्णुलोके लक्ष्मीसहितो नारायणो वसतीति मान्यतासीत् । लक्ष्मीरादिभूता त्रिगुणमयी परमेश्वरी सर्वेषा कृते बभूव । तथधा नारीषु सौन्दर्यशीलसदाचारसौभाग्यरूपेण लक्ष्मी प्रतिष्ठिता । वेदास्तेषा सर्वाणि श्रेयस्तत्त्वानि च लक्ष्मीरूपाणि सन्ति । सर्वे देवा लक्ष्म्या अनुग्रहेण शक्तिमन्त सन्ति ।

दुर्गा

दुर्गा तु विष्णोर्योगनिद्रा महामाया वा विभाविता। दुर्गाया अपराणि नामानि—आर्या, वेदगर्भा, अम्बिका, भद्रा, भद्रकाली, क्षेमदा, भाग्यदा च तस्या वैशिष्ट्यानि प्रकटयन्ति । तस्या पूजार्थं सुरामासादीनामपि विधानमासीत् ।[४]

भूतिकान्तिसन्नतिक्षान्तिरूपेणापि दुर्गा ध्यायते स्म । तस्या प्रत्यक्षरूपाणि—आकाशपृथिवीधृतिलज्जापुष्टयुषस एव । जगत सर्वा शक्तयो दुर्गाया प्रतिनिधिभूता ।[५]

अधिष्ठातारो देवा

अधिष्ठातृणा देवाना सङ्ख्या पुराणपु सातिशय समवर्धत । तथाहि वेद-वेदान्तमन्त्रतन्त्रपुराणशास्त्रादय, गङ्गादयो नद्य, पुष्करादयो जलाशया, सर्वाणि क्षेत्राणि, सर्वाणि वनानि, भक्तिज्ञानवैराग्यादयो देवरूपेण सन्धार्यन्त स्म ।[६]

---

१ पद्मपुराणे सृष्टिखण्डे ६१ अध्यायत ।
२. तत्रैव ७५ ७६ अध्यायत ।
३ तत्रैवोत्तरखण्डे १५५ १५६ अध्यायत ।
४ विष्णुपुराणे ५ १ ७० ८६ ।
५ विष्णुपुराणे ५ १ ७०–८६ ।
६ पद्मपुराणे उत्तरखण्डे १८९, १९० अध्यायत ।

मानवानां सान्निध्यम्

मानवलोकेऽस्मिन् देवानां कार्यक्षेत्रमेव वर्तते । पुष्करतीर्थस्य प्रतिष्ठा स्वयं ब्रह्मणा कृता । स देवर्षिब्रह्मर्षिभिः सह यदा कदा भूतले विराजमानो भवति । देवानां पुत्रा अपि कतिपयमानवा बभूवुः । अत्रिर्ब्रह्मणः पुत्रोऽस्ति ।[1] अपरं च—भगवान् स्वयं मानवानां पथप्रदर्शनं करोति, धर्ममुपदिशति, उपासकस्य चाण्डालस्य गृहे वसति, जनानां धर्मपरीक्षां करोति च ।[2] मानवैः सह देवानां वार्तालापो भवति । भक्तानामुपकारार्थं स्वयम् उपस्थिता वयमिति देवाः कथयन्ति । चाण्डालस्य समागत्य स्वयं विष्णुः भक्तस्य कृशरं चौर्यवृत्त्या खादति । अन्ततः तस्य समक्षं साक्षात्प्रादुर्भूय तं भक्तं स्वविमानेन विष्णुलोकं नयति ।[3]

देवानां लौकिकव्यवहारो मानवानामिव प्रतिभाति । तेषां कुटुम्बानि प्रसिद्धानि सन्ति । यथा शिवस्य स्त्रीपुत्रादयः सन्ति । ब्रह्मणः पुत्रो नारदो विदित एव ।

विष्णोरवताराः

विष्णुः स्वयमवताररूपेण मानवलोके आत्मानं सृजति । तत्र दश प्रमुखावताराः — वराह-मत्स्य-कूर्म-नृसिंह-वामन-परशुराम-रामकृष्ण-बुद्ध-कल्कयः पञ्चदशान्येऽवताराः —सनक-सनन्दन-सनातन-सनत्कुमार-नारद-नरनारायण-कपिल-दत्तात्रेय-यज्ञ-ऋषभ-पृथु-धन्वन्तरि-मोहिनी—व्यास-बलरामाः । भागवतानुसारं भगवतोऽसङ्ख्या अवतारा बभूवुः । सर्वेऽवतारा मानवानां कल्याणाय धर्मसंस्थापनार्थं च प्रादुर्भूताः ।

## लोककल्याणम्

कौटुम्बिकसामाजिकसुश्लिष्टता

आत्मनः सद्व्यवहारेण सर्वेषां परितोषोऽपि लोकविजयस्य साधनमेव । यदि कोऽप्यपमानं कुर्यात्तर्हि तूष्णींभावेन तत्सहेतेति धर्मशिक्षा ।[4] प्राणिनः प्रति दया, शत्रुमित्रयोः समत्वं च प्रेतयोनेरात्मनः परित्राणाय निर्दिष्टम् ।[5] मानवानां परितः सौहार्दपूर्णसन्नियोगस्य सृष्टये विधानमिदं समर्थमभवत् ।

दरिद्रता कष्टप्रिया इति सत्यमेव । दारिद्र्यकारणानि परस्वापहरणमसत्यं सन्ध्याशयन-मन्तःकरणस्य मलिनत्वं च निरूपितानि ।[6] एतेषां दुर्वृत्तीनां परित्यागो लोककल्याणाय समभवत् । यथा समर्थितमपि विष्णुपुराणे—

---

१ पद्मपुराणे सृष्टिखण्डे २७, ३१ अध्याये ।
२ तत्रैव ४७, ५० अध्याये ।
३ तत्रैव ८२ अध्याये ।
४ पद्मपुराणे सृष्टिखण्डे १५ अध्याये ।
५. तत्रैव २६ अध्याये ।
६. पद्मपुराणे उत्तरखण्डे २६० अध्याये ।

यथात्मनि च पुत्रे च सर्वभूतेषु यस्तथा।
हितकामो हरिस्तेन सर्वथा तोष्यते सुखम्॥ ३ ८ १७
परदारपरद्रव्यपरहिंसासु यो रतिम्।
न करोति पुमान भूप तोष्यते तेन केशव॥ ३ ८ १४

लोककल्याणाय पूर्तानामतिशय माहात्म्य विद्यते। पूर्तविधानेन जलाशयकूपोपवन मन्दिरादीना निर्मातारो लोके परलोके च परमाभ्युदयस्याधिकारिणोऽभिमता।[1] लोकोपकारायान्यान्यपि कार्याणि स्वर्गप्रदानि भवन्ति। तद्यथा—वृक्षारोपण सेतुरचन प्रपाव्यवस्थापन गोचरप्रदान च।

लोकहितकारिकर्मणामपरित्यागेन दैवीना शक्तीना समुद्भव सम्भव।[2] एतत्सकपदे विष्णुपुराणेन प्रमाणितम्। तथा हि—

प्राणिनामुपकाराय यथैवेह परत्र च।
कर्मणा मनसा वाचा तदेव मतिमान् भजेत॥ ३ १२ ४५

एतदेव समर्थित कल्हणेन—

कायस्यास्य परित्यागादनल्पा जन्तवो यदि।
सुखिन स्युरसौ भ्रातर्वणिज्या भ्यायसी न किम॥ राजत० ८ २२३६

# धर्मस्य सुग्राह्यत्वम्

पौराणिको धर्म सर्वजनग्राह्यो विकसित। तदनुसार धनिका निर्धना, उच्चवर्णा नीचवर्णा वा सर्वेऽपि धर्मपथेन स्वकल्याण कर्तुं समर्था बभूवु। महाभारतस्य नकुलोपाख्यानानुसार युधिष्ठिरस्याश्वमेधादपि कुरुक्षेत्रनिवासिन उञ्छवृत्तिधारिणो ब्राह्मणस्य सक्तुदान विशेषतरमासीत। पद्मपुराणानुसार कामनापरित्यागेनापि सर्वेषा व्रताना पालन भवति। क्रोधत्यागेन तीर्थसेवन जायते। दया तु जपसमा। उपवास एवोत्तम तप। परदाराणा त्यागो महायज्ञ।[3] चाण्डाला शूद्राश्च पवित्रेण धार्मिकेण च जीवनविन्यासेन मुनिपदमारोढु समर्था।[4] तदेव ब्रह्मपुराणेऽपि समर्थितम।[5]

पूर्तविधान दरिद्राणा कूपनिर्माण धनिकाना जलाशयनिर्माणमिव पुण्यप्रद मतम।

---

१ पद्मपुराणे सृष्टिखण्डे २४ अध्याये। भागवतानुसार पूर्तादयो भगवत आराधनस्य साधनमस्ति। १० ५२ ४०
२ भागवते १० ७ १३
३ ४ पद्मपुराण सृष्टिखण्डे ५० अध्यायत।
५ श्वपाकोऽपि च मद्भक्त सम्यक् श्रद्धासमन्वित।
प्राप्नोत्यभिमता सिद्धिमन्येषा तत्र का कथा॥ १७८ १८६

## धर्मेण स्वास्थ्यसंवर्धनम्

पद्मपुराणे प्रतिदिनं दुग्धदधिघृतादीनां भोजनस्य महत्त्वं वर्णितम्। अगस्त्यभोजनं त्यजतः पुरुषस्य शरीरस्य नाशनं सञ्जातम्।[1] स्वास्थ्य-संवर्धनायैवापराण्यपि विधानानि वर्तन्ते। तथा-हि—आर्द्रपादो न शयीत, आर्द्रपादो भुञ्जीत, तमसि भोजनं शयनं वा न कुर्वीत।[2] आमलकसेवनेन पापान्मुक्तिरायुर्वर्धनं धर्मसंचयो दारिद्र्यपहरणं च सम्भाव्यन्ते।[3] आमलकस्य सेवनमाधुनिकयुगे विज्ञानानुसारं लाभप्रदमभिमतम्। तुलसीपत्रस्य धार्मिकमहत्त्वं तदेवानुसरति।

## अलौकिकविधानानि

धर्मस्यालौकिकविधानानि प्रत्यक्षाणि न भवन्ति, किन्तु तेषां मान्यता समाजे वर्तते। तेषु प्रथमं तावत् कर्मफलमेव।

कर्मफलम्

कर्मणः इह जन्मनि फलं साक्षात् वर्तते, किन्तु मरणानन्तरमपि कतिपयकर्माणि कर्तारमनुबध्नन्तीति धर्मकल्पना। अपरजन्मनि तेषां कर्मणां फलं भुज्यते। कर्मानुरूपमेव पुनर्जन्म भवति। तद्यथा—

पुमान्न देवो न नरो न पशुर्न च पादपः।
शरीराकृतिभेदास्तु भूपैते कर्मयोनयः॥

विष्णुपुराणे २ १३ ९८

कर्मणा जायते जन्तुः कर्मणैव विलीयते।
सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते॥
किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम्।
अनीशेनान्यथा कर्तुं स्वभावविहितं नृणाम्॥

भागवते १० २४ १३,१५

भागवतानुसारं सर्वे कर्मपरा भवन्तु। तथा हि—

केचित् कुर्वन्ति कर्माणि कामैरहृतचेतसः।
त्यजन्तः प्रकृतीर्दैवीर्यथाहं लोकसङ्ग्रहम्॥

भागवते १० ८० ३०

मरणोत्तरविधानम्

पुराणानुसारं मुक्तिः सुलभतरा बभूव। तथा हि—गङ्गायां यदि प्राणविसर्जनं जायते

---

१ पद्मपुराणे सृष्टिखण्डे ५१ अध्यायः।
२ तत्रैव ४६ ५३।
३. तत्रैव ५८ अध्यायः।

तर्हि न पुन स्तन्यपानमपेक्षित भवति ।[१] मरणोत्तरगतिर्मरणकालिकबुद्ध्यनुरूपेति निर्धारितम् । सा सुबुद्धि पुण्योदयेन सम्भवति ।[२]

पापिनस्तु नरकभोगानन्तर क्रमश स्थावरक्षुमिजलचरपक्षिपशुमनुष्यदेवादीना योनिषु जन्म गृहीत्वा अन्ततो मुमुक्षवो भवन्ति ।[३] समाज पापाद्विरत कर्तुं धार्मिकं विधातु च नरकस्य भयकल्पना स्वर्गस्य मनोहारिता च सोत्कर्षपरा ।

## वैष्णवधर्म:

विष्णुस्तु वैदिककालीनो लोकहितपरायणो वैदिकदेव परवर्तियुगेऽवतारद्वारेण मानवताया विशेष सान्निध्य प्राप्तवान् । तद्यथा गीतानुसारम्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मान सृजाम्यहम् ॥

गीताया वेदवादस्य, सन्यासस्य, यज्ञविधानस्य च हेयत्व प्रतिपादितम् । निष्कामबुद्ध्या भगवदर्पणाय कर्तव्यपालन तु कर्मयोग । गीतानुसार कर्मयोग, सर्वश्रेष्ठो धर्म ।

## विष्णोर्व्यक्तित्वम्

पुराणानुसार विष्णु सर्वोच्चोदात्ताना गुणानामधिष्ठानमस्ति । स तु सर्वशक्तिमान्, सर्वव्यापी, सर्वज्ञ उपकारपरायण, परमपावन, पुण्यस्वरूप, महाकान्त, यज्ञवल्लभ, शिव, सर्वाश्रय, शान्त, पुरुषार्थस्वरूपो वर्तते ।[४] भागवते विष्णुना स्वय प्रोक्तम्—

अह भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रिय ॥ ९ ४ ६३

इन्द्रस्य स्तवनेन विष्णोर्माहात्म्य भागवते निवेदितम्[५]—

नमस्तुभ्य भगवते पुरुषाय महात्मने ।
स्वच्छन्दोपात्तदेहाय विशुद्धज्ञानमूर्तये ।
सर्वस्मै सर्वबीजाय सर्वभूतात्मने नम. ॥ १० २७.९–१०

## वैष्णवस्य व्यक्तित्वम्

विष्णोर्व्यक्तित्वस्यानुरूप वैष्णवाना व्यक्तित्व विकसित भवति । तथा हि—सर्वेषा प्राणिनामात्मरूपेण भगवान् तिष्ठति । अत एव सर्वे प्राणिन समादरणीया । कस्यचिदप्यनादरेण विष्णोरनादरो जायते । तद्यथा भागवते प्रोक्तम्—

---

१–२. पद्मपुराणे सृष्टिखण्डे ४७ अध्यायत ।
३. विष्णुपुराणे द्वितीयाशे ६ ३२ ।
४ पद्मपुराणे भूमिखण्डे ९८ अध्यायत ।
५. अस्मिन् प्रसङ्गे कृष्ण एव विष्णु ।

अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ।
अर्हयेद्दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा ॥ ३.२९.२७

मानवो भागवतानुसारं श्रद्धासम्पन्नः, भक्तः, विनीतः, अनसूयः, भूतेषु कृतमैत्रः, शुश्रूषाभिरतश्च भवेत्[1] । वैष्णवस्तु काममर्थं च वर्गं परित्यजेत् । कामानामुदय पतनाय भवति । तद्यथा—

इन्द्रियाणि मनः प्राण आत्मा धर्मो धृतिर्मतिः ।
ह्रीः श्रीस्तेजः स्मृतिः सत्यं यस्य नश्यन्ति जन्मना ॥
विमुञ्चति यदा कामान् मानवो मनसि स्थितान् ।
तर्ह्येव पुण्डरीकाक्ष भगवत्त्वाय कल्पते ॥ ७ १०.८–९

गृहस्थोऽपि वैष्णवो गृहदारादिषु कदापि ससक्तो मा भवतु । तस्य लोकोपकारत्वं हि सर्वोच्चाराधनम् । तद्यथा—

तप्यन्ते लोकतापेन साधवः प्रायशो जनाः ।
परमाराधनं तद्धि पुरुषस्याखिलात्मनः ॥ ८ ७ ४४

वैष्णवस्य समग्रो जीवनविन्यासो भगवते समर्पितो भवति । तस्य समदृष्टिः सर्वत्र वर्तते । सर्वं प्रति तस्य भगवद्भावना वर्तते ।

## वैष्णवी भावना

विष्णुरेव देवासुरयक्षराक्षसमनुष्याग्निजलरूपरसकालादीनां पारमार्थिकरूपेण तिष्ठतीति वैष्णवी भावना । विष्णुः सर्वेषां कर्मणां भोक्ता तेषां सामग्री फलं च भवति । विष्णोर्भक्तो मनसि करोति—भगवान् मम स्वरूपेणैव जगद्रूपेण तिष्ठति । अहमेव सर्वस्मिन् वर्ते । सर्वं मयि वर्तते । अहमेव परमपुरुषः ।[2]

## आराधनम्

आराधने ध्यानस्य स्थानं प्रथमं विद्यते । तद् द्विविधं—निराकारं साकारं च । साकारध्यानस्य प्रथमा रीतिरुपनिषत्सु वर्णिता । तद्यथा—

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥

निराकारं ध्यानं ज्ञानेन सम्भवति । योगिन एव तत्कर्तुं क्षमाः । निराकारस्यापि विष्णोः कार्याणि कर्माणि च विभावितानि । तद्यथा—वेदास्तस्य वाणी । निराकारस्व-

१. भागवते ३ ३२ ४१–४२ ।
२. विष्णुपुराणे १.१९ ६७–७२, ८१, ८५, ८९ ।

रूपस्य ध्यानेन परमपदप्राप्तिर्भवति। साकारध्यानाय सर्वं विश्वं विष्णोर्वासनया वासित मन्यते। विश्वमिदं विष्णौ वर्तते। विष्णो रूपं मानवाकारमभिमतम्। साकारध्यानेन विष्णुलोको लभ्यते।

पूजायाः कृते विष्णोर्मूर्त्तिः सिंहासने स्थाप्यते। तदा षोडशोपचारविधिना क्रमशः पूजा क्रियते।[1] षोडशोपचारः पुरुषसूक्तस्य ऋग्भिः प्रारभ्यते। षोडशोपचारस्य पश्चात् गरुडाङ्के मूर्तिं शाययित्वा विष्णुनामकीर्तनं हवनं च क्रियेते। विष्णोः परितोषाय स्तोत्राणि गीतवाद्यादीनि च प्रस्तूयन्ते। भगवतो मूर्तेरभ्यङ्गस्य, उन्मर्दनस्य, दर्पणदर्शनस्य, दन्तधावनस्यापि प्रक्रिया भवति। पूजाकाले भक्तः क्वचिन्नर्तनशीलो भवति।

भगवतः पूजायाः पञ्चाङ्गानि—अभिगमनमुपादानं योगः स्वाध्यायः इज्या च निर्णीतानि। देवस्थानस्य स्वच्छीकरणं निर्माल्यस्य दूरीकरणं चाभिगमनम्, पूजार्थं चन्दनपुष्पादीनां सङ्ग्रहणमुपादानम्, आत्मन्येव भगवतो दर्शनं योगः, वैष्णवमन्त्राणां जपः स्वाध्यायः, यथार्थविधिनार्चनमिज्या च भवन्ति। आभिः पञ्चपूजाभिः क्रमशः सार्ष्टि सामीप्यसालोक्यसायुज्यसारूप्या मुक्तयः प्राप्यन्ते।[2] पूजान्तेऽधोलिखितमन्त्रपुरस्सरं दण्डवद्विधिना भगवन्तं प्रति प्रणामाभिव्यक्तिः क्रियते—

> अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।
> दासोऽहमिति मां मत्वा क्षमस्व मधुसूदन॥

विष्णोश्चरणोदकं पीयते।

विष्णुविषयकमन्त्राणां जपेनापि पूजा सम्पादिता। तद्यथा षोडशाक्षरमन्त्रः—गोपीजनवल्लभचरणान् शरणं प्रपद्ये। दशाक्षरमन्त्रः—नमो गोपीजनवल्लभाभ्याम्। अष्टाक्षरमन्त्रः—ओ३म्, नमो नारायणाय। द्वादशाक्षरमन्त्रः—ओ३म्, नमो भगवते वासुदेवाय। विष्णुगायत्री—ओ३म् नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्। एषां मन्त्राणां जपेन लौकिकपारलौकिकामा लाभाः सूचिताः।[3] विष्णोर्विविधावताराणां नामकीर्तनेन सर्वपापेभ्यो मुक्तिर्भवति। सङ्कीर्तनाय विष्णोः सहस्रनामानि स्तोत्रे सङ्कलितानि। ततः परं महासूत्रम्—'रामरामेति रामेति रमे रामे मनोरमे' प्रकल्पितम्।

वैष्णवधर्मे सम्मतानां विविधदेवानां पूजार्थं बहूनि स्तोत्राणि विरचितानि। स्तोत्राणां महिमा भागवतवचने निगदितः। तद्यथा—

---

१ षोडशोपचाराः—आवाहनम्, आसनम्, अर्घ्यम्, पाद्यम्, आचमनीयम्, स्नानीयम्, वस्त्रम्, यज्ञोपवीतम्, गन्धः, पुष्पम्, अक्षतः, धूपः, दीपः, नैवेद्यम्, ताम्बूलम्, नमस्कारश्च।

२ पद्मपुराणे पातालखण्डे ७९ अध्यायतः।

३ पद्मपुराणे पातालखण्डे ८१ अध्यायतः, नारदपुराणे पूर्वभागे ७० अध्यायतः।

विन्दते पुरुषोऽमुष्माद्यद्विच्छत्यसत्वरम् ।
मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ॥
इदं यः कल्य उत्थाय प्राञ्जलिः श्रद्धयान्वितः ।
शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः ॥ ४ २४ ७७-७८

भागवतस्याजामिलप्रकरणेन ज्ञायते यत्—

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद् व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ ६ २ ७

वैष्णवधर्मेऽदेवाना पूजा परित्यक्ता । किन्तु विशेषप्रयोजनान्युद्दिश्य तेषां पूजापि समीहिता । तद्यथा—सौन्दर्याय गन्धर्वाणाम्, बाधानिवारणाय यक्षाणाम् अभिचाराय निर्ऋतीना च पूजा कार्या ।[1]

दक्षिणभारते 'आलवारा' इति ख्याता ऋषयः, माधमुनिः, यामुनाचार्यः, रामानुजाचार्यः वैष्णवधर्मस्य प्रचारका बभूवुः । उत्तरभारते रामानन्दः, तस्य रैदासपद्मावतीप्रमृतयः शिष्याः, तुलसीमलूकदासादयोऽनुयायिनश्च वैष्णवधर्मस्य सर्वत्र प्रचार कृतवन्तः । अन्येऽपि बहवः कवयः पुराणकाराश्च वैष्णवधर्मप्रचारका बभूवुः ।

## शैवधर्म

प्राचीनतमोऽयं शैवधर्मः प्रथमं सिन्धुसभ्यतावशेषे परिचीयते । सिन्धुसभ्यताया शिवः ऋग्वेदे वर्णितस्य रुद्रस्य किञ्चित्समकक्ष एव । रुद्रस्तु पशुप इति वैदिकधारणा ।[2] संहारकोऽयं रुद्रः स्वभावतः सर्वेषां कल्याणाभिलाषिणामार्याणां स्तुत्योऽभवत् । यजुर्वेदस्य शतरुद्रिये वर्णितो रुद्रः आर्येतराणां शिवस्य प्रायशः साम्यं भजते । अथर्ववेदे महादेवो व्रात्यानामधिष्ठाता बभूव ।[3] श्वेताश्वतरोपनिषदि रुद्रः शिवः गीताया विष्णुवत्, उपनिषदां ब्रह्मवद्वाऽन्यतमो देवो वर्णितः । स देवानामादिरभवत् । तस्मादेव हिरण्यगर्भस्योत्पत्तिः समाम्नाता । तथाहि—

ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वामृता भवन्ति ॥ ३ ७

महाभारतानुसारं शिवः—सर्वभूतमहेश्वरः, सर्वेश्वरः, कल्याणकारी, परमकारणं, सर्वव्यापकश्चास्ति । हिमालये कृष्णोऽर्जुनश्च तस्य स्तुतिं कुरुतः । एभिः प्रकरणैः स्पष्टं प्रतिभाति यत् तस्मिन् युगे शिवः परमपूज्योऽभवत् ।[4]

---

१ भागवते ३ १० २४ २८ ।

२ ऋग्वेदे १ ११४ ९ ।

३ अथर्ववेदे १५ ५ १—७ ।

४ अनुशासनपर्वणि १४ अध्याये ।

पौराणिकयुगे शिवस्य महिमा सातिशयं समवर्धत । स परमो योगी ऐश्वर्येण देवान्, बलेनासुरान् ज्ञानेन ऋषीनतिशेते ।[1] तस्याष्टरूपाणि—पञ्चतत्त्वानि, सूर्य, चन्द्र, दीक्षितो ब्राह्मणश्च विश्वात्मकान्येव वर्तन्ते ।

शिवस्य लोकरक्षकरूपं विषपानेन प्रसिद्धम् । आत्मारामोऽपि शिवो लोकरक्षार्थं शिवया सह विचरति ।[2]

## माहेश्वरयोगः

शिवस्य योगपद्धती माहेश्वर इति विदित । माहेश्वरयोगे—प्राणायाम-ध्यानप्रत्याहारधारणास्मरणानां वैशिष्ट्यं वर्तते । अनेन योगेन नैर्मल्यं भवति । प्राणायामेन दोषाणां प्रत्याहारेण विषयाणां ध्यानेनानीश्वरगुणानां प्रवृत्तयोऽपाकृता ।[3] लिङ्गपुराणे शिवलिङ्गपूजा प्रतिपादिता ।[4]

### शैवतन्त्रम्

शैवतन्त्रे पशु पशुपति पाशश्चेति त्रय पदार्था समाम्नाता । तेषु पशु जीव एव, पशुपति शिव, पाशस्तु जीवस्य मोहात्मक बन्धनम् । बन्धनाद्विमुक्त्यै चत्वार पादा —विद्या, योग, क्रिया, चर्या च सन्ति । विद्यया ज्ञानावबोधो जायते । योगेन मोक्षो भवति । चर्यया शुद्धाचारस्य ग्रहण निषिद्धाचारस्य त्यागश्च भवत । दीक्षाविधिः क्रियेति कथ्यते । क्रियापादेन दीक्षितस्याभ्युदयाय मन्त्रसन्ध्यापूजाजपहोमादयो विहिता ।

## पाशुपतसम्प्रदायः

पाशुपतसम्प्रदायस्यादिप्रवर्तक शिवस्यावतार 'लकुली' इति मन्यते । तस्य प्रमुखग्रन्थ पञ्चाध्यायी पञ्चार्थविद्या वा वर्तते । पञ्चार्था —कार्यं कारण योगः विधि दुःखान्तश्च सन्ति । कार्यं त्रिविधम्—विद्या कला पशुश्च भवति । कारणेन सृष्टे पोषण प्रलयश्च भवत । आदिकारण शिव एव । योगेन पशु पशुपतिना सम्बद्धो भवति । धर्मार्थसाधको व्यापारो विधि द्विविध —व्रत द्वार च । भस्मस्नान भस्मशय्या उपहार[5] जप

---

१ वायुपुराणे ७७ अध्याये ।
२ भागवते ४.२४.१८ ।
३ वायुपुराणे १०.७९–८४ ।
४ लिङ्गपुराणे ३० अध्याये ।
५, उपहार —हसित गीत नृत्य हुडुक्कार नमस्कार जपश्च ।

प्रदक्षिणा च व्रतम् । क्राथनं स्पन्दनं मण्डनं शृङ्गारणमवितत्करणमवितद्भाषणं तु मान्तदत्त द्वारम् । योगेनालौकिकसिद्धीनां प्राप्तिरपि तु सान्त एव ।

## कापालः कालामुखश्च सम्प्रदायौ

कापाले कालामुखे च शिवस्य भैरवरूपं समादृतम् । भैरवस्य पत्नी चण्डिकाऽपि निषेवणीया । सा मुण्डमालां धारयति । तदर्थं मद्येन सह नरबलिर्दीयते ।

कापालिका हस्ते कपालं लौहदण्डं च धारयन्ति । कपाले नररक्तं मद्यं वा दृश्यते । कापालिकानां केन्द्रं श्रीशैलमासीत् ।

कालामुखास्तु प्रायशः कापालिका इव सिद्धान्तदृष्ट्या भवन्ति । ऐहलौकिकानां पारलौकिकानां च सिद्धये तेषां षट् साधनानि—कपाले भोजनं चिताभस्मस्नानं भस्मभक्षणं गदाधारणं मद्यपात्रस्थापनं मद्यपात्रे स्थितस्य देवस्य पूजनं च सन्ति । कालामुखेषु महाव्रतिकास्तु घोरा एव ।

## काश्मीर. शैवसम्प्रदाय

काश्मीरशैवसम्प्रदायानुसारं सृष्टिरीश्वरस्य विश्वात्मकं रूपं भवति । शिवः सृष्टेरुद्भावयिताऽस्ति । शिव उपादानं विनाऽपि सृष्टेः रचनां करोति ।

अस्मिन्सम्प्रदाये मानवस्याज्ञानं मलमायाकर्मभिः समुत्पादितं मन्यन्ते । नादमाध्यमेन मलमायाकर्मणां प्रभावो जायते । नादस्तु शिवस्य शक्तिरेव । तस्याः सहचारिण्योऽम्बा, ज्येष्ठा, रौद्री, वामा च भवन्ति ।

मोक्षाय मलमायाकर्मणां प्रभावेभ्यो निवृत्तिरपेक्षिता भवति । शिवेन साक्षात्कारः तादात्म्यं च मुक्तिर्भवति ।

## वीरशैवसम्प्रदायः

वीरशैवसम्प्रदाये शिवः चराचराणां धारणाय केवलं स्थलं भवति । शिवस्य शक्त्या क्षोभः सञ्जायते । अनेन क्षोभेण स्थलस्य द्वौ भागौ—लिङ्गस्थलमङ्गस्थलं च भवतः । लिङ्गस्थलं शिवो भवति । अङ्गस्थलं तु जीवात्मा । शिवः स्वशक्त्या आराध्यो भवति । जीवस्तु स्वभक्त्याऽऽराधको जायते । भक्त्या पुनरपि लिङ्गस्थलाङ्गस्थलयोरेकीकरणं सम्भवति । तदेव मुक्तिः । वीरसम्प्रदायस्यानुयायिनो ब्राह्मणा लिङ्गायताः । तेषामनुयायिनोऽपि लिङ्गायताः सन्ति । ते मांसमदिरादीनां सेवनं न कुर्वन्ति । लिङ्गायतानां दीक्षामन्त्रः 'ओऽम् नमः शिवाय' इति भवति । दीक्षायाः पश्चात् लिङ्गायता यज्ञोपवीतस्थाने लिङ्गस्य मूर्तिं धारयन्ति । कन्यकानामपि दीक्षा भवति ।

## शाक्तसम्प्रदायः

शक्तेर्वर्णनमथर्ववेदे विद्यते । तद्यथा—

एषा सनत्नी सनमेव जातैषा पुराणी परि सर्वं बभूव ।
मही देव्युषसो विभाती सैकेनैकेन मिषता विचष्टे ॥ १० ८ ३०

शाक्तसम्प्रदायस्य मूलं सिन्धुसभ्यतायां मातृदेव्याः पूजायां वर्तते । वैदिकसाहित्येऽदितिः पृथिवी च देव्यौ प्रायशः आदिशक्तिरूपिण्यौ प्रतिष्ठिते । शैवसम्प्रदाये शक्तिः शिवस्य पत्नी एव । शिवस्य सर्वे पराक्रमाः शक्तिदेव्याः साहाय्येन सम्भाव्यन्ते ।

शाक्तसम्प्रदायस्य तन्त्रसाहित्ये शक्तिः—आनन्दभैरवी, त्रिपुरसुन्दरी, ललिता इति ख्यातास्ति । शिवस्तु महाभैरवः, आनन्दभैरवो वा । शिवशक्त्योः सामरस्यं सृष्टेः समारम्भः । तत्रानन्दभैरवी सृष्ट्युत्पादने, आनन्दभैरवस्तु तस्याः संहारे प्रमुखरूपेण संलग्नौ । आत्मनः मोक्षलाभाय त्रिपुरसुन्दर्या सह तादात्म्यं शाक्तानां सर्वोच्चसिद्धिः ।

शाक्तास्तु द्विविधाः—कौलिकाः समयिनश्च । तेषु कौलिकाः पञ्चमकारभोगिनो वस्तुतो घोराः ।[1] तेषामैन्द्रियकसुखानि घृणास्पदम् । समयिनस्तु पवित्रात्मानः प्रतीकमात्रेणाराधकाः सन्ति ।

सर्वेषु भारतीयसम्प्रदायेषु तन्त्रस्य प्रतिष्ठा बभूव ।[2]

## गाणपत्यसम्प्रदायः

गाणपत्यसम्प्रदायस्यानुयायिनो गणपतिं सर्वोच्चदेवं मन्यन्ते । तस्मादेव सृष्टेरुद्भवं ते प्रतिपादयन्ति । गणपतिरयं वैदिककालतः प्रायः सदैवाराधितः । तथा हि वेदे मरुतां गणस्याधिपतिरूपः स वर्तते । महाभारते स विनायकरूपेण सम्प्रतिष्ठितः । क्वचित्तेषां विनायकानां विघ्नकारिणी प्रवृत्तिरपि निदर्शिता । गणपतेरुपासका बाहौ गणपतेर्मुखदन्तादीनां मुद्रणं तप्तलोहखण्डेन कारयन्ति । कतिपयगाणपत्या आचारदृष्ट्या कौलिका इव व्यवहरन्ति । मदिराणां मदिराक्षीणां च सेवनं तेषां परा प्रीतिरासीत् ।

आधुनिकयुगेऽपि सर्वेषु धार्मिकविधिषु गणपतेः प्रथमपूजा गाणपत्यसम्प्रदायस्य कस्मिंश्चिद्युगेऽतिशयलोकप्रियत्वं प्रतिपादयति ।

## सौरसम्प्रदायः

वैदिकयुगात् सूर्यस्य विविधनामभी रूपैश्च सम्बद्धा स्तुतिः प्रचरति । सूर्यः सविता

१ शाक्तानां पूजादिषु गुरुणा मदिरापानं कल्हणेन निदर्शितम् । राजत० ५ ५२३
२ बौद्धधर्मे जैनधर्मे च परवर्तियुगे तान्त्रिका समुद्भूता ।

वाचार्यरूपेण मानवताया सर्वोच्चोन्नायकोऽभिमत । द्वादशरूपैरादित्य सूर्यो वा प्रमुख-देवानामुद्भव प्रकल्पित ।[1] सूर्यश्चराचरस्यात्मा एव ।[2] अपर च आदित्यो ब्रह्मेति तैत्तिरीये निर्दिशितम् ।[3] सूर्यो जगत माता, पिता, गुरुश्चाभिमत ।[4]

प्रायशो विष्णुवत् सूर्यस्य पूजा विहिता । सूर्यनमस्काराऽर्घ्यदान च सूर्यपूजानिमित्त सम्पाद्येते । आदित्यव्रत सूर्योदयादारभ्य सूर्यास्तपर्यन्त सूर्योन्मुखा भूत्वाराधको मन्त्राणा स्तोत्राणां च जप करोति ।

सौरसम्प्रदायानुयायिनो ललाटे रक्तचन्दनेन सूर्याकृति रचयन्ति । रक्तकुसुमाना माला धारयन्ति, उदयोन्मुख सूर्य ब्रह्मरूपेण, मध्याह्नसूर्यमीश्वररूपेण, अस्तोन्मुख सूर्य च विष्णुरूपेण पूजयन्ति ।

सौरसम्प्रदायस्य पुराऽतिशयलोकप्रियता बभूव । हर्षादयो बहवो राजान सूर्योपासका बभूवु । सूर्योपासनाय मन्दिराणि निर्मितानि । तेषु कलिङ्गप्रदेशस्य कोणार्कमन्दिर खीष्टत पश्चात् त्रयोदशशताब्दे निर्मितम् । तन्मन्दिरमधुनापि कलाकृतेरनुपममादर्श समक्षीक्रियते ।

## मूर्तिपूजा

भारते मूर्तिपूजा वैदिकेतरधर्मानुयायिना रीति पौराणिकयुग सुप्रचलिता बभूव । तथापि मूर्तिपूजा वैदिकधर्मेण सम्यक् परिपालिता बभूव । समृद्धिशालिनो जना राजानश्चा-सख्यानि मन्दिराणि मूर्तीश्च निर्मापितवन्त । तदाश्रित्य मूर्तिकलाया वास्तुकलायाश्च भूयान् विकास सजात ।

## धार्मिकसहिष्णुता

धार्मिकसहिष्णुताया प्रथममुदाहरण महाभारते राजते—

धर्मं यो बाधते धर्मो न स धर्म कुधर्म तत् ।
अविरोधात् तु यो धर्म स धर्म सत्यविक्रम ॥ वनपर्वणि १३१ १०

बौद्धधर्मस्य प्रवर्तकस्य गौतमस्य विविधसम्प्रदायान् प्रति सम्मानभावनासीत् ।[5]

---

१ ब्रह्मपुराणे ३० अध्याये ।
२ ऋग्वेदे १ ११५ १
३ तैत्तिरीयोपनिषदि ३ १ १ ।
४ ब्रह्मपुराणे २६ अध्याये ।
५ महावग्गे १ ७५ ।

जैनधर्मे रामकृष्णादीनां महापुरुषाणां श्लाघ्यमहापुरुषश्रेण्यां समादरो बभूव। जैनसम्प्रदाये कालान्तरे वैष्णववर्गः समुद्भूतः।

पौराणिकधर्माणां पारस्परिकसहिष्णुता शङ्कराचार्येण सविशेषं समायोजिता। स स्वयं षण्मतस्थापनाचार्यः सन् शैववैष्णवसौरशाक्तगाणपत्यकालिकसम्प्रदायानां सहास्तित्वं सम्भावितवान्।

## सहिष्णुतायाः मूलाधारः

सहिष्णुतायाः मूलाधाररूपेण विदुषां सा धारणा वर्तते ययेदं शाश्वतसत्यं सन्धारितम्-

एकं सद्विप्रा बहुधा वदन्ति। एकं नियानं बहुधो रथाः।

एतदधिकृत्य भागवते प्रोक्तम्—

सर्व एव यजन्ति त्वां सर्वदेवमयेश्वरम्
येऽप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो॥
यथाद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो
विशन्ति सर्वतः सिन्धुं तद्वत्त्वां गतयोऽन्ततः॥ १०.४० ९,१०

पृथिव्याः सहिष्णुताथर्ववेदे निर्दिष्टा—

जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसाम्। १२ १ ४५

सर्वेषां भारतीयधर्माणां भित्तिमूलं प्राणिमात्रेषु दया विश्वबन्धुत्वं सत्यमहिंसाम् चारशुद्धिं च प्रथममवलम्बते, तेषु सर्वेषु समानरूपेण महापुरुषाणां प्रतिष्ठा कृता, प्रतोप वासैश्च शारीरिकशुद्धिः मानसिकपवित्रता च प्रकल्पिते। न कोऽपि धर्मो घृणां वैषम्यं वा पुरस्करोति। अस्यां स्थितौ स्थाने एव पद्मपुराणे निदिष्टम्—

स्वधर्ममपि चावेक्ष्य परधर्मं न दूषयेत्। सृष्टिखण्डे १९ ३३२

एक एवेश्वरः सर्वेषां पितेति सिद्धान्तेन, अथवा स्वस्मादन्यन्न किञ्चनेति मतेन सर्वेषां धर्माणां साहचर्यं समाश्रितमेव। कालिदासेन स्पष्टीकृतमेव

विष्णोर्हरस्तस्य हरिः कदाचित् वेधास्तयोस्तावपि धातुराद्यौ। कुमार० ७ ४४

प्रायशः सर्वेषु धर्मेषु विविधधर्माणामुच्चतमशिक्षा आत्मसात्कृता। पौराणिकधर्मे गौतमोऽवताररूपेण गृहीतः। जैनबौद्धादर्शानुरूपं पौराणिकधर्मेऽपि मांसभोजनस्य हिंसा-यज्ञस्य च परित्यागो व्यघोषत।

भारतीया राजानः प्रायः स्वयं धार्मिकसहिष्णुतायाः पुरस्कर्तार आसन्। चन्द्रगुप्त-मौर्यहर्षकुमारपालादयः सर्वान् धर्मान् प्रति श्रद्धापरायणा बभूवुः। तेषां प्रजापि यथा राजा तथा प्रजेति सिद्धान्तेन धार्मिकसहिष्णुतां व्यवहृतवती। अशोकस्य मानवधर्मः सुविदितः। स सर्वेषां धर्माणां सुप्रतिष्ठामियेष।

भारतीया गृहस्थाः सर्वान् धार्मिकसम्प्रदायान् प्रायशः समाद्रियन्त। ब्राह्मणाः प्रायशः ससंघं गौतमबुद्धं निमन्त्रयन्त, आतिथ्यं कृत्वा च बुद्धोपदेशं शृण्वन्त। जैनसाधूनां समाजे समादरोऽभवत्। अत एव ब्राह्मणजैनबौद्धाचार्याणामेकत्र वसतिः पुरा प्रायः बभूव। अधुनापि मथुरा-वाराणसी-साँची-भिलसा-एलूरादिषु स्थानेषु धार्मिकसम्प्रदायानामैक्यभावना कलाकृतिभिः पुरस्क्रियते।

पौराणिकयुगे ब्रह्मणो विष्णोर्महेशस्य च एकत्र पूजा समीहिता। एकस्मिन्नेव मन्दिरेऽनेकदेवतानां मूर्तयो राजन्ते। अद्यावधि तासां देवतानामनुयायिनस्तत्र सहयोगेनाराधनपूजादिकं कुर्वन्ति।

कश्मीरदेशे धार्मिकसहिष्णुतायाः सर्वोच्चविकासः संजातः। एतत्समर्थितं कल्हणेन—

तीर्थे मन्मथजिन्मगध्वजदृढाभयोर्जिताचार्यकैः
साधारामरणं प्रियापरिणतिस्वर्णानपत्रं प्रभो।
भाव्येकस्य शिवाहिफूत्कृतिचलत्पिङ्गाग्निरेणूपमम्
पेशान्तरितनभोपादर्शंगतहिन्विण्डामनन्यस्य च ॥ ८.३३६९

कल्हणानुसारं कश्मीरस्य राजा जोकः जैनोऽभवत्। किन्तु तेन तपसा शङ्करः परितोषितः। तत्रैव महाराजो ललितादित्यः विहार-चैत्य-स्तूप-मन्दिराणि निर्माय शाश्वतं यशो लेभे।[1]

## बौद्धधर्म

गौतमस्य धर्मो द्विविधः—गृहस्थानां कृते, भिक्षूणां कृते च समवर्धत। गृहस्थधर्म आचारप्रधानः भिक्षुधर्मोऽस्तु शुद्धिप्रधानश्च बभूवतुः। भिक्षुधर्मे योगमार्गेण निर्वाणप्राप्तिर्निर्दिष्टा। गृहस्थधर्मेण समाजे सदाचारस्य प्रतिष्ठा सर्वत्र शान्तिश्च समीहिता।

बौद्धधर्मेऽपि वैदिकधर्मवत् कर्मफलं, पुनर्जन्म, मोक्षश्च सम्मतानि। मोक्षाय ( निर्वाणाय ) गौतमोऽष्टाङ्गिकमार्गं प्रस्तुतवान्। निर्वाणाय स कामानां परित्यागं विशेषमहत्त्वपूर्णं व्यधात्। तत्र यज्ञानां महत्त्वं नास्तीति गौतमस्य मुख्यप्रतिज्ञा।

## तृष्णात्यागः

स्वव्यक्तित्वस्य विकासाय मानवो बाह्यवस्तूनि नापेक्षते। तस्मै प्रयोजनाय ज्ञानप्रकाशेन चित्तवृत्तीनां शोधनमावश्यकम्। आधिभौतिकीनां सिद्धीनां भोगविलासानां च पाशाः पुनर्जन्मबन्धं गाढयन्ति। ते पाशाः दुःखकारणानि भवन्ति।

---

१. राज० १.१०२, १०७, ८.१९८-२००।

## कर्मण्यता

गृहस्थान् गौतम कर्मण्यान् भवितुमुपादिशत् । गौतमानुसारमालस्यस्य भयङ्कर-फलानि भवन्ति । अलसा शीघ्र निर्धना भवन्ति । आलस्य तु सम्पत्तिनाशस्य द्वारम् । कर्मण्यताया अपूर्वा प्रशस्ति धम्मपदे विद्यते । तद्यथा—

यो च वस्ससत जीवे कुसीतो हीनवीरियो ।
एकाह जीवित सेय्यो विरियमारभतो दल्ह ॥ ८.१३

तदनुसृत्य सुत्तनिपाते धम्मिकसुत्ते प्रोक्तम्—

धम्मेन मातापितरो भरेय्य पयोजये धम्मिक सोवणिज्ज ।
एत गिही वत्तय अप्पमत्तो सयपभे नाम उपेति देवेऽति ॥ २९

## सामाजिकसुश्लिष्टता

बौद्धधर्मानुसार प्रतिनिधिरूपेण मातापितरौ पूर्वदिशा, गुरु दक्षिणदिशा, पत्नी पश्चिमदिशा, बन्धु-बान्धवा उत्तरदिशा, भृत्या पातालदिशा, साधव आकाशदिशा सन्ति । सर्वान् प्रतिनिधीन् प्रति सुशीलव्यवहार तेषा पूजा भवति । सर्वेषामभ्युदयाय सुखाय च प्रयत्न करणीय । अनेन प्रकारेण कुटुम्बे समाजे च सौमनस्य प्रसारितम् ।[1] तदनुसृत्य धम्मपदे निदिष्टम्—

यो पाणमतिपातेति मुसावाद च भासति
लोके अदिन्न आदियति परदार च गच्छति ॥
सुरामेरयपान च यो नरो अनुयुञ्जति ।
इधेव मेसो लोकस्मि मूल खनति अत्तनो ॥ १८.१२-१३

मानवीयगौरवस्य मानदण्डो गौतमेन सुष्ठु निर्धारित —

यम्हि सच्च च धम्मो च अहिंसा सञ्ञमो दमो ।
स वे वन्तमलो धीरो थेरो इति पवुच्चति ॥ धम्मपदे १९.६

## त्रिविधयानः

यानस्तु पन्था । स त्रिविध भवति—हीनयान, प्रत्येकबुद्धयान, महायानश्च । हीनयानानुसार श्रावका व्यक्तिगताभ्युदयाय यतन्ते । साधकास्तु श्रावका एव निर्वाण-

---

१ बुद्धचर्याया सिगालोवादसुत्ते ।

पथगामिन चतुर्विधा—स्रोतआपन्ना, सकृदागामिन, अनागामिन, अर्हन्तश्च क्रमशः प्रपन्ना भवन्ति। श्रावकोऽर्हन्भूत्वा निर्वाणं लभते।

प्रत्येकबुद्धयानं तेषां महात्मनां भवति ये गुरुं विना निर्वाणपथज्ञानं धृत्वा बोधिं प्राप्नुवन्ति। केवलं स्वकीयं कल्याणं स कुरुते नान्येषाम्।

महायानस्तु बोधिसत्त्वयानं सर्वेषां प्राणिनां कल्याणाय भवति। बोधिसत्त्व सन् पुरुषो लोककल्याणस्यावसरं प्राप्नोति। चरितं तस्य विशेषरूपेणोदारं करुणामयं च भवति।

महायानेन साधको महाकरुणया सर्वदा प्राणिनां निर्वाणाय प्रयत्नं करोति। साधकस्य बोधिप्रस्थानचित्तस्यावस्थानन्तरं दानं शीलं प्रज्ञा वीर्यं क्षान्तिः ध्यानं च षट्पारमिता व्रतरूपेण धार्यन्ते।

महायानशाखाया पूजाविधानम्—वन्दनमर्चनं पापदेशनं पुण्यानुमोदनं बुद्धाध्येषणं बुद्धयाचनं बोधिपरिणमनं चास्ति। मूर्तिपूजायाः प्रचलनं च वर्तते। तत्र स्तूपचैत्यादीनां पूजा पत्रपुष्पदीपदानादिभिः क्रियते। तीर्थानि प्रकल्पितानि। तद्यथा—गौतमस्य जन्मभूमिः तस्य बोधिस्थानं धर्मचक्रप्रवर्तनस्थानं महापरिनिर्वाणस्थानं च।

बौद्धधर्मानुयायिनां गृहस्थानामातिथ्यवृत्तिः, तेषां संघपोषणोत्साहश्च कर्तव्यमिति निर्धारितम्।

## महायानस्य वैशिष्ट्यानि

महायानानुसारं निर्वाणप्राप्तये भिक्षुजीवनस्य स्वीकरणमपेक्षितं नासीत्। गृहस्थोऽपि बोधिसत्त्वो भूत्वा स्वपरोपकारवृत्त्या निर्वाणलाभाय समर्थः। महायाने प्रतिष्ठिते सति कतिपयभिक्षवः कठोरजीवनवृत्तिमसहमाना विवाहं कृत्वा गृहस्था बभूवुः।

महायाने परोपकारार्थं पापमपि निर्दोषमिति स्वीकृतम्। अनया मान्यतया व्यभिचारिणां विहारे संघे च प्रवेशाय द्वारमनावृतम्। पापमार्जनाय सरलविधानान्यपि प्रस्तुतानि। निःसन्देहमेवानेनायोजनेन भिक्षूणामपि पापवृत्तयः समिद्धाः।

महायानानुसारं तत्रागणितबुद्धा बभूवुः। तद्यथा विष्णोरवतारा पौराणिकधर्मे समाज्ञातास्तथैव बुद्धानामवतारा यथाकालं षट्, चतुर्विंशतिः, अनन्ताश्च प्रमाणीकृताः। ब्रह्माण्डस्यासंख्येषु लोकेषु गणनाबाह्या बुद्धा बभूवुः।

ब्राह्मणधर्मवत् महायाने बौद्धधर्मे स्वर्गस्य कल्पना वर्तते। तत्र सुखावतीति ख्याते स्वर्गे महर्षयो वसन्ति। अस्य लोकस्याधिपतिरमिताभः सूर्यरूपेण राजते। तस्य नामकीर्तनमात्रेण पापिनामपि सुगतिर्भवति।

कतिपयबोधिसत्त्वाना मञ्जुश्रीमैत्रेयावलोकितेश्वरादीना लोकोपकारिता विख्यातैव। ते मानवान् सत्पथे प्रवर्तयन्ति, मृतात्मन स्वर्ग गमयन्ति, निर्वाणाय सर्वानेव प्राणिन प्रोत्साहयन्ति च।

ब्रह्मविष्णुशिवकालीप्रमुखाः देवता परवर्तियुगे उपास्या. सन्ति। अवलोकितेश्वर विष्णुरेवाभिमत। सप्तर्पयोऽपि समाज्ञाता। बौद्धधर्मे सृष्टेविकासो वेदान्तानुसार प्रति-पादित। तद्यथा—धर्मकायो ब्रह्म, सम्भोगकाय ईश्वर इति। आदिबुद्धोऽवलोकितेश्वर सम्भोगकाय। तस्मादेव ब्रह्मादयो देवा प्रादुर्भूता।

## वज्रयानः

वज्रयाने तन्त्रस्य विकासोऽभवत्। अस्मिन् सम्प्रदाये हठयोगस्य वैशिष्ट्य विद्यते। हठशब्दे ह सूर्य एव दक्षिणनाड्या., ठ चन्द्र एव वामनाड्या. प्रतीकम्। इमे नाड्यौ क्रमश पिङ्गलेडे च सुषुम्णा नाडीमभित. वर्तेते। योगिन सुषुम्णामूर्ध्वमुखी कर्तुमेव साधना कुर्वन्ति। अनया साधनया कुण्डलिनी जागर्ति। तया सहस्रारचक्रस्थितशिवस्य रसास्वादो गृह्यते। वज्रयाने योगस्य पतन दृश्यते। तथाहि—तदनुसार योगसाधने मन्दिरमदिरामदिराक्षीणामुपयोग समीहित। वज्रयाने यमनियमादीनामुपेक्षा स्पष्टमेव।

## बौद्धधर्मस्य ह्रासः

हीनयाने बौद्धधर्मस्य मूलतत्त्वानि सर्वोपरि सम्मतानि। कालान्तरे महायानयुगे बौद्ध-धर्म लोकप्रिय कर्तमेवाचारविषयकाणि शैथिल्यानि प्रायश उपेक्षितानि। ईदृशे भिक्षु-समाजे मनीषिणा प्रादुर्भावो नाभवत्। परिणामत शनै शनैर्बौद्धाचार्याणा हतप्रभत्व विदितचरमासीत्। अन्यधर्माणामाचार्यै सह विवादे स्वभावतस्तेषा पराजयोऽभवत्। तन्त्र-सम्प्रदाय कामुकतापूर्ण जीवन सार्वजनिकधिक्कारणार्ह सञ्जातम्।

बौद्धाना प्रधानप्रतिपक्षिणो वैदिकधर्मावलम्बिनस्तु स्वधर्माणा युगानुरूपत्व विधातु सफल प्रयतन्ते स्म। वैष्णवधर्मे जीवनस्य पवित्रता प्रतिपादिता। सा बौद्धधर्मस्याष्टाङ्गिक-मार्गप्रणिहितात् जीवननैर्मल्यादधिकतर प्रभावपूर्णा बभूव। याज्ञिकहिंसाया विरोधोऽपि कृता। अस्या स्थितौ प्रारम्भिकयुगे महायाने वैष्णवधर्मस्य कतिपयसिद्धान्ता स्वीकृता। कालान्तरे महायानो वैष्णवधर्मे विलीनोऽभवत्। वैष्णवधर्मेऽपि गौतमोऽवतार एव प्रमाणी-कृता। अनेन विधिना शीघ्र बौद्धधर्मावलम्बिना सख्या स्वल्पा बभूव।

भारतीयधर्माणा महानदात् बौद्धधर्मस्य प्रवाह सजात। कालान्तरे बौद्धधर्मस्य शाखा विदेशेषु प्रचारिता बभूव। अधुनापि तत्र तासा प्रभावो वर्तते। भारतेऽपि बौद्ध-धर्म पौराणिकधर्मे विलीनोऽमरो बभूव।

## जैनधर्मः

सम्प्रदायानुसारं जैनधर्मोऽनादिरनन्तश्चास्ति । सृष्टेरभिनवकल्पे धर्मोपदेशाय तीर्थङ्कर उत्पद्यते । अनेन प्रकारेण चतुर्विंशतितीर्थङ्कराः समुत्पन्नाः । तेषु प्रथम ऋषभ एव, अन्तिमास्त्रयश्च नेमिनाथ, पार्श्वनाथ महावीरश्च बभूवुः ।

### पूजा

अस्मिन् धर्मे वैदिकयज्ञा निषिद्धाः । देवानां प्रतिष्ठाऽपि तत्र स्वल्पैव । तर्हि नासीत् देवयज्ञानां देवपूजानां चावसरः जैनधर्मे ।

जैनधर्मे पञ्चपरमेष्ठिनां पूजा विहिता । पञ्चपरमेष्ठिनस्तु अर्हन्, सिद्ध, आचार्य, उपाध्याय, साधुश्च भवन्ति । जीवन्मुक्तमहात्मानोऽर्हन्तः । तीर्थङ्करा अर्हन्तो भवन्ति । मुक्तपुरुषाः सिद्धाः कथ्यन्ते । आचार्याः साधूनां व्यक्तित्वस्य विकासाय यतन्ते । उपाध्यायाः शास्त्रपारङ्गताः सन्तः साधूनां शिक्षकाः भवन्ति । मोक्षमार्गपथिकाः साधवः सन्ति । गृहस्थेभ्यः पूजया सह तीर्थयात्राऽपि विहिता ।

पञ्चपरमेष्ठिनां पूजा निर्धारिता । मूर्तीनां प्रतिष्ठा मन्दिरेषु बभूव । तत्र तीर्थङ्कराणां स्तुतयः, नमस्कारपूर्वकं मूर्तिप्रदक्षिणा च प्रथमं सम्पादिता । तदनन्तरमभिषेकः जलचन्दनाक्षतपुष्पनैवेद्यदीपधूपफलादिभिः पूजनं च कृते । पूजया शारीरिकशुद्धिर्मोक्षप्राप्तिश्च सम्भाविते । तत्र मानसिकपूजाया विधानमपि बभूव । तीर्थेषु पूजावैशिष्ट्यं प्रदर्शनीयमासीत् ।

### व्रतम्

अहिंसा तु सर्वोत्कृष्टव्रतमेव । अहिंसाव्रतानुसारं जगतश्चराचराणां दृश्यानां केषाञ्चिदपि प्राणिनां ज्ञाताज्ञाता हत्या हानिः परित्याज्या । तथा—रात्रिभोजनत्यागः, जलपानशुद्धिः, प्राणशुद्धिश्च नियताः । परिग्रहव्रतेनोचितोपायं नात्यधिकधनसङ्ग्रहस्य मर्यादा स्वीकृता ।[1] जैनानामन्यव्रतानि—अस्तेयसत्यब्रह्मचर्याणि सुविदितानि ।

### धर्मलक्षणम्

दशलक्षणोऽयं जैनधर्मः । तत्र क्षमा-मार्दवार्जव-सत्य-शौच-संयम-तपस्त्यागाकिञ्चन्य-ब्रह्मचर्याणि प्रतिष्ठितानि । इमानि लक्षणानि भागवतधर्मे बौद्धधर्मे वा समानरूपेण स्वीकृतानि । धर्मपथे गमनाय त्रयाणां शल्यानामभावोऽपेक्षितः । तत्प्रथमं निदानशल्यं कामानां बाधां प्रस्तौति । मायाशल्यं व्यवहारे कुटिलतामादधाति । मिथ्यात्वशल्येन प्रभावितो जनोऽसत्यमपि सत्यमिति विजानाति ।

---

१. अयमेव परिग्रहो मोक्षाय महान् सम्बाधकः ।

जगत उपेक्षा

जैनधर्मानुसार देहोऽयं स्वभावतोऽपवित्र एव। देहस्य सुखाय किमपि करणीयं न विद्यते। अतएव लौकिकविभूतीनामर्जनं संग्रहणं वा न कर्तव्यम्। अस्यां स्थितौ जैनगृहस्थेभ्योऽपि कर्म कर्तुं प्रोत्साहनं न विद्यते। निष्कामकर्मयोगस्यादर्शो जैनधर्मे न समाश्रितः।

मरणोत्तरविधानम्

मरणानन्तरं ये जीवा निर्वाणं प्राप्नुवन्ति ते सिद्धा भूत्वा विश्वमण्डलस्य शिखरेऽवस्थिता भवन्ति। तेषां लोकः ईषत्प्राग्भार इति प्रोक्तः। सिद्धानामात्मानः तस्मिन् लोके ज्ञानदर्शनानन्दमया भवन्ति।

जैनधर्मेऽपि पौराणिकधर्मसममेव नरकस्य प्रकल्पनं विद्यते। नारकीययातना बहुविधा वर्तन्ते। तद्यथा प्रदाहनं क्रकचेन पाटनं कृमिभिर्भक्षणं च। नरकात् पुनरपि मातुर्गर्भे पतनं भवति।

तपस्विनो मुनयो यदि निर्वाणं न प्राप्नुवन्ति तर्हि ते देवलोके देवयोनौ समुत्पन्ना भवन्ति। तत्र तेषां शोभा सर्वोत्कृष्टा भवति। सोपवासं प्राणोत्सर्जनं कृत्वा गृहस्थाः स्वर्गे देवेन्द्रपदं प्राप्नुवन्ति। ततोऽवतीर्य भूलोके ते चक्रवर्तिनः सम्राजः भवन्ति। अन्ततः ते सन्यासिनो भूत्वा दीक्षां गृह्णन्ति।

धर्मग्रन्थाः

वैदिकधर्मस्य प्रवर्तनमृग्वेदादिसंहिताग्रन्थैः भवति। वैदिकयुगे याज्ञिकधर्मस्य विवेचनं ब्राह्मणग्रन्थेषु कृतम्। ततः परमारण्यकेषु, उपनिषत्सु च धर्मस्य पारमार्थिकस्वरूपं व्याख्यातम्। वैदिककालस्य पश्चात् सूत्रस्मृतिग्रन्थेषु वर्णाश्रमयोः सूक्ष्मविवेचनं दृश्यते। महाभारते, पुराणेषु, उपपुराणेषु च वर्णाश्रमधर्मस्य व्यावहारिकं स्वरूपं सविस्तरं वर्णितम्। बहवः तन्त्रग्रन्थाः तदेव वर्णयन्ति।

बौद्धानामादिधर्मग्रन्थं त्रिपिटकमिति ख्यातम्। त्रिपिटकमाश्रित्य परवर्तियुगे बहवो ग्रन्थाः संस्कृतभाषायां लिखिताः। जैनधर्मस्य प्रारम्भिकस्वरूपमङ्गोपाङ्गशास्त्रेषु विद्यते। ततः परं जैनधर्मस्य विवेचनं पुराणेषु, चरितकाव्येषु, कथासु च कृतं दृश्यते।

## भारतीयधर्मवैशिष्ट्यम्

भारतीयधर्माणामाधारः प्राकृतिको मनोवैज्ञानिको बौद्धिकश्चास्ति। बहूनां लोकानामनवरतचिन्तनानुभवैर्भारतीयधर्मस्य शाश्वतसंस्कारो समजनि। देशेऽस्मिन् सर्वेषु धर्मेषु अध्यात्मतत्त्वं सर्वोच्चं समुपस्थापितम्। तत्र गाम्भीर्यं वरीवर्ति। शान्तिशृङ्गारकरुणादीनां निर्झरः प्रवहति सर्वेषु धर्मेषु। तत्रावगाहमाना लोका इहलोके विशुद्धिं परत्र च मुक्तिं लभन्तामिति योजना महामनीषिणामाचार्याणां प्रतिभासते।

# शिल्पसाधना

शिल्पकलाप्रमाणमादौ प्रकटितं दृश्यते ।[1] तथा हि—चित्रं तु पत्रपुष्पाणां रङ्गेषु, चलितकुसुमानां पत्रपुटेषु, मौक्तिकशुक्तीनां रेखान्यासे च प्राकृतिकमेव । मूर्तरूपं तु जगदेव पाञ्चभौतिकं दृश्यते । नदीप्रवाहेषु शिलाशकला प्रायशः मूर्तरूपं धारयन्ति, क्षुद्रजन्तूनां पक्षिणां कीटादीनां च गृहाः बहुधा कलाप्रवणतां विभावयन्ति । तत् सर्वं सुमनोहरम् ।

शिल्पमधिकृत्यैतरेयब्राह्मणे प्रोक्तम्—

दैवशिल्पान्येतेषां वै शिल्पानामनुकृतीह शिल्पमधिगम्यते ।[2]

## चित्रम्

मानवकृतचित्राणां द्विविधं स्वरूपं वर्तते—वनवासिभिः कृतम्, नागरिकैः कृतं च । वनवासिनां चित्रं प्रागैतिहासिकमिति निगद्यते । वनवासिनः प्रकृतेः मनोरमे उत्सङ्गे उपविश्य समक्षमेव सौन्दर्यशालिनीं प्रकृतिच्छविं दृष्ट्वा मनसि प्रोल्लसिताः स्वभावत एव चित्राभ्यासे लीना भवन्ति । पुरा बहुषु स्थानेषु तैः वनवासिभिश्चित्राणि कृतानि, किन्तु कालक्रमेण प्रायशश्चित्राणि विनष्टानि । केवलं स्वल्पान्येव चित्राणि पर्वतगुहासु प्रकृत्यैव सुरक्षितानि प्राप्यन्तेऽधुना ।

## वन्यचित्राणि

पर्वतश्रेणीषु कतिपयगुहाः वनवासिभिः परिचिन्विताः सन्ति । ईदृशानां चित्राणां चत्वारि केन्द्राणि सन्ति—( १ ) मिर्जापुरजनपदस्य सोनद्रोणी, ( २ ) मानिकपुरबांदा-जनपदे, ( ३ ) रायगढजनपदे सिंघनपुरस्य पर्वते काबरापर्वते च, ( ४ ) महादेवपर्वते होशङ्गाबादे पचमढीजनपदे च ।

मिर्जापुरजनपदे वन्यानां हस्तिनां पक्षिणां च ग्रहणस्य, नृत्यस्य च चित्रणं वर्त्तमानमेव । क्वचित् मृगादिवन्यपशूनां चित्रणमतीव सुन्दरं प्रतिभाति । तत्र मलदरियागुहायां

---

१ महाभारतानुसारं तु शिल्पानि गणनातीतानि सन्ति । विश्वकर्मा तु 'कर्ता शिल्पसहस्राणाम्, वर्तते । आदि० ६० ३३

अभ्यासवशात्स्वेन निष्पादिता छायोपयोगिनी निर्मितिः तामधिकृत्य तन्त्रविशेषः च शिल्पमित्यवधाय पुरा शिल्पानां सङ्ख्या सहस्रपर्यन्ता विनिश्चिता ।

२ ऐतरेयब्राह्मणे ६.५ ।

मृगयाक्रमे वर्णितस्य श्रान्तस्य च शूकरस्य पक्षिणा जलसन्तरणस्य च दृश्यचित्रं लभ्यते। विजयगढगुहाया कस्यचित् व्याघ्रस्य सिंहस्य च चित्रणं वर्तते। इमानि चित्राणि खीष्टस्य चतुर्थशतकादारभ्य दशमशतकपर्यन्तं निर्मितानि। बांदाजनपदे सरहतगुहाया त्रिभिरश्वारोहैस्त्रयाणामश्वानां वहनं दर्शितम्। मालवागुहाया शकटे उपविष्टः कश्चित् पुरुषो दर्शितः। शकटात् पश्चभागे द्वौ पुरुषौ चित्रितौ प्रथमस्य पुरुषस्य हस्ते धनुर्बाणौ, अपरस्य हस्ते यष्टिश्च वर्तन्ते। कुरियाकुण्डगुहाया हरिणाना मृगयादृश्य चित्रितम्।

सिंघनपुरगुहासु कावरापर्वतगुहासु च मृगयादृश्यस्य मकर-हरिण-सरटादीनां चित्रणं कृतम्। मानवानामाकृतयो यष्टिसमाभिः पीनरेखाभिर्निदर्शिता। इमानि चित्राणि खीष्टस्य पूर्वमेव निर्मितानि।

पचमढोसमीपं प्रायः पञ्चाशत् गुहाश्चित्रमयाः कृताः। आसु गुहासु मृगयादृश्यं मधुसञ्चयदृश्यं समूहयुद्धं पशुचारणं तृणाच्छादितगृहाः पर्णकुटीनिवासिनश्च चित्रद्वारा निर्दर्शितानि। हस्तिनः, चित्रकाः, ऋक्षाः, शूकराः, हरिणाः, मकराश्च तासु चित्रिताः। क्वचित् पालितपशवो बलीवर्दाः, अजाः, कुक्कुराश्च चित्रिताः। तत्रैव 'डपर डोरोथी' गुहायां वानरस्य वंशीवादनं मनोहारि दृश्यमेव चित्रितम्। आसु गुहासु प्राचीनतमानि चित्राणि खीष्टात् ५०० वर्षाणि प्रागेव कृतानि।

मध्यप्रदेशे मन्दसौरनगरस्य परिसरे त्रिंशद्गुफानां भित्तिषु, पटलेषु च गैरिकचित्राणि वर्तन्ते। एतेषु चित्रेषु पशवः, नर्तकाः, गोपालाश्चामरीकृताः। स्वस्तिक-चक्र-सूर्य-सर्वतोभद्राष्टदलकमलादीनि च तत्र चित्रितानि।

उत्कलप्रदेशे सम्बलपुरस्य हैदराबादप्रदेशे रायचूरस्य तमिलनाडे बिलारीनगरस्य परिसरे तस्मिन् युगे क्षुरेण चित्राणि कारितानि दृश्यन्ते।

चित्रोपकरणेषु गैरिकं प्रायः प्रयुक्तमेव दृश्यते। चित्रेषु क्वचित् कृष्णवर्णरचना दग्धकाष्ठैः कृता प्रतिभाति।

## नागरचित्राणि

नागरचित्रस्य प्रथमं प्रत्यक्षपरिचयः सिन्धुसभ्यतायाश्चित्रैः प्राप्यते। सिन्धुसभ्यतायाश्चित्रशैली पूर्ववर्तिनां कलाकाराणां चिरसाधनाभिः सुविकसिता एव। तस्मिन् युगे चित्रकलाया लोकप्रियत्वं नित्यप्रयुक्तवस्त्रपात्रादीनां चित्रणं प्रसिध्यति।

सिन्धुसभ्यतायुगे ज्यामितिचित्राणि रेखाचित्राणि वा पत्रपुष्पादीनां तारराणां पशुपक्षिणां चित्राणि च पात्रेषु कृतानि। तत्र पत्रपुष्पादीनां मध्ये मयूरादयः पक्षिणः, मत्स्यकच्छपादयः जलचराश्च निवेशिताः। प्रायः सर्वे प्राणधारिणः सञ्चरणशीला एव समाकलिताः।

सिन्धुसभ्यतायुगे चित्रणाय कूर्चिकाया उपयोगोऽभूत् । श्वेत-रक्त-कृष्ण-पीत-हरितादिभी रङ्गैश्चित्राणि निर्मीयन्ते स्म ।

सिन्धुसभ्यतायाः पश्चात् वैदिकयुगे भारतीयचित्रस्य विकास कथमभवदिति ज्ञातु तदानीन्तनसाहित्यमेवावलम्ब्यम् । वैदिकयुगस्य महाभारतादियुगस्य वा चित्रावशेषा अलभ्या एव ।[1] चित्रस्य प्रचलन वैदिकसभ्यतायामासीदिति निम्नलिखितैरुल्लेखैरवगन्तव्यम्—राजसूययज्ञे यजमानस्य राज्ञ. तार्प्यवस्त्रे यज्ञरूपाणि कृतानि । गवा कर्णेषु कर्करिदात्रस्थूणादोनामाकृतीना रचना स्वधितिया कृता ।[2] यज्ञकर्मणि क्वचिदश्वस्य पद परिलिखितमासीत् ।[3]

परवर्तिचित्रकरणस्योल्लेखा बौद्धसाहित्ये वर्तन्ते । तथा हि उम्मगजातकानुसारं कस्मिंश्चित् सुरङ्गे इन्द्रस्य वैभवम्, सुमेरु, समुद्र, महाद्वीपा, हिमालय, सूर्य-चन्द्र-दिक्पाला, भुवनानि च चित्रितानि । पात्रेषु बहुविधानि चित्राणि निर्मितानि, मालासु चित्राणि निवेदितानि च ।[4] उत्तरीयेषु पुष्पाणि पशवो वा वर्णिता ।[5] गृहभित्तिषु नरनारीणा मनोरमचित्राणि रचितानि ।[6] ई० पू० द्वितीयशताब्दे पतञ्जलिना कसवधस्य, बलिबन्धनस्य च चित्रणमुल्लिखितम् ।[7] अश्वचित्रविलिखनस्योल्लेख. महाभारते वर्तते ।[8]

राजाश्रये नाट्यगृहेषु चित्राणि रचितानि ।[9] राजप्रासादेषु राज्ञा राज्ञीना च चित्राणि निर्मितानि । राजकीयवस्त्राणामलङ्करणं चित्राचार्यै कृतम् ।

सिन्धुसभ्यताया पश्चात् भारतीयचित्रकलाया ऐतिहासिकपरम्पराया प्रथमं विस्पष्ट

1. From the references in the early literature of India dealt with in the preceding chapter, it has been already inferred that painting was a developed form of artistic expression previous even to the rise of Buddhism, and the character of the most ancient frescoes at Ajanta serves to strengthen this supposition. Percy Brown . Indian Painting p 32.
२ शतपथे ५ ३ ५.१० अथर्ववेदे ६.१४१.२, १२.४.६ मैत्रायणीसंहितायां ४ २ ९ ।
३. शतपथे १३ ४.३.४ ।
४. कुसजातके ५३१ ।
५ महावग्गे ५.१० ३, ८ २९ ।
६. चुल्लवग्गे ६.३ २ ।
७ Keith History of Sanskrit Drama p.28
८ आरण्यक पर्वणि २७८.१३ ।
९ नाट्यशास्त्रे २.९०—९१ ।

स्वरूपमजन्तागुहाचित्रेषु प्राप्यते।[1] अजन्ताया नवमी दशमी च गुहे खीष्टत पूर्वं द्वितीय-शतके प्रथमशतके च निर्मिते। अत्र 'छदन्त' जातकस्य कथा चित्रिता। चित्रकलाया द्वितीय स्वरूपमजन्ताया शेषासु गुहासु प्राप्यते। तद् गुप्तकालीनमेव। गुप्तकालीनचित्र-कलाया अवशेषा मध्यप्रदेशस्य बाघगुहासु, दक्षिणभारतस्य बादामिगुहासु, तञ्जौरजन-पदस्य सित्तनवासलगुहासु, काञ्चीनगरस्य शिवमन्दिरे च प्राप्यन्ते।

अजन्ता-चित्राणि

अजन्तायाश्चित्रावलीषु पूर्णं जगदेव सन्निविष्टम्। तासु सर्वेषा प्राकृतिकाना मान-वीयाना च वस्तूना सर्वासा स्थितीना च परिकल्पन बभूव। मानवीयजीवनस्य चतुर्णां वर्गाणामितिवृत्तानि चित्रेषु समन्वितानि। मोक्षपराणि चित्राणि तत्र प्रामुख्य भजन्ते।

अजन्तायाश्चित्रशैली रसभावपूर्णा प्रतिभाति। तद्यथा षोडशगुहाया मरणासन्नाया राजकुमार्याश्चित्र करुणरसभावसृष्टावद्वितीयमेव। गौतमबुद्धस्य समग्र जीवन तत्र निद-र्शितम्। सप्तदशगुहाया यशोधरया बुद्धाय राहुलस्य समर्पण चित्रितम्। तदेव तस्य गुप्त-स्याप्रतिमा कथा बभूव, यत काचित् माता स्वपुत्रस्य बुद्धशरणगमनमेव सर्वोच्चो भाग्यो-दय इत्यमन्यत।

गौतमबुद्धस्य पद्मपाणिबोधिसत्त्वक्रमादारभ्य महापरिनिर्वाणपर्यन्ता कथा सविस्तर द्वितीयगुहाया षोडशगुहाया सप्तदशगुहाया च चित्रिता वर्तते। सप्तदशगुहाया सौन्दर-नन्दस्य कथा चित्रता।

कतिपयचित्राणि मानवताया समक्षमौदार्यस्यादर्शं प्रतिष्ठापयितुमेव कृतानि। तद्यथा प्रथमगुहाया स्वर्णतुलाया कस्यचिद्राजर्षेर्मांस कपोततुल्य तोल्यते। बोधिसत्त्वाना कथाना चित्रण राष्ट्रियचरित्रस्य विकासाय कृतम्।[2]

---

१ ई० पू० ११००-१००० युगे नेवासा इति प्रसिद्धे स्थाने मृत्पात्रे हरिणादीना चित्रण कृतमित्यु त्खननेन सम्प्राप्तम्।

2 The aim of the Buddhist artist was to visualise the ideals of his creed, to illustrate by pictorial parables all the beautiful sentiments of the Buddhist religion These were designed to appeal to the higher feelings of the spectator, so that sustained by their supreme charm, the littleness of his own personality vanishes, and he becomes exalted and absorbed The Buddhist frescoes no doubt attained this object, and by their sheer artistry elevated the individual into the actual realms of the higher beings, thus bringing him to the feet of the Master himself Percy Brown Indian Painting P 8

अजन्तायाश्चित्रशैली सफला प्रतिभाति । तत्रत्यकलाकारा मानव-जीवनस्य भारतीय-प्रकृतेश्च कुशला अध्येतारो बभूवु । रससर्जनाय विविधभावान् प्रदर्शयितुमाङ्गिकान् विन्यासान् विलासांश्च नैपुण्येन ते व्यञ्जयन्त । तत्र नाट्यशास्त्रे वर्णिता मुद्रा प्रत्यक्षीकृता एव । गुहासु चित्ररचना धरातलभागं परित्यज्य प्रायशः सर्वत्रैव कृता । तद्यथा भित्तिषु, स्तम्भेषु, अन्तःपटलेषु च चित्राणि विद्यन्ते । अन्तःपटलचित्राणां सौष्ठवपूर्ण-विनिवेशस्तु महदाश्चर्यमेव ।

अजन्तायादिचित्राणां रचनायां पादपानां धातूनां च रसाः प्रयुक्ताः । चित्राचार्यादिचित्र-करणात् प्राक् भित्तिं समतलां विधाय वज्रलेपस्यावरणेन योग्यां पृष्ठभूमिं कृतवन्त । चित्रस्य पूर्वरूपं कृष्णरेखाभिरङ्कितम् । वर्णस्य चयनं भावानुरूपं कृतम् । चित्राचार्याणां तूलिका सर्वत्र सन्तुलिता वर्तते ।

## बाघचित्राणि

बाघचित्राणि गुप्तयुगे रचितानि । बाघस्य गुहाभवनानि अजन्तायाः गुहानां समक्षं नात्युत्कृष्टानि प्रतिभान्ति, किन्तु बाघचित्रशैली पूर्णरूपेण विकसिता वर्तते । चित्रेषु परिधिगतलतापत्रचित्रणस्य बाहुल्यमस्ति । लतापत्रादिषु मध्ये क्वचित् पशुपक्षिणां पुरुषाणां वा विचरणं चित्रितम् । स्थानीयदृश्यानि, तत्रत्यादिवासिनां रूपाणि च चित्रेषु प्रायशो वि-निवेशितानि । बाघचित्रेषु सर्वोत्तमं हल्लीसकनृत्यदृश्यमेवावशिष्टं विद्यते ।[1] अस्मिन् चित्रे रासलीलावत् रमणीनां समूहः कस्यचित् पुरुषस्य नेतृत्वे सङ्गीतमयनाटकस्य प्रदर्शनं करोति । क्वचिदेव गौतमबुद्धस्य बोधिसत्त्वानां च चरितगाथा चित्रिता । अन्यत्र हस्ति-मानवानां च राजकीययात्राप्रसङ्गे सजीवं चित्रणं कृतम् ।

## बादामिगुहाचित्राणि

तत्रत्यवैष्णवगुहायां शिवपार्वतीपरिणयदृश्यं चित्रितम् । आकृतिषु सौकुमार्यं रमणीयं वर्तते ।

## सित्तनवासलगुहाचित्राणि

अस्मिन् प्रदेशे जैनसंस्कृतिसम्बद्धा गुहा वर्तन्ते । तत्र नृत्यचित्राणां वैशिष्ट्यमस्ति । नर्तकीनां हावभावादिकं नृत्यमुद्राश्च प्रदर्शितानि । एकस्या गुहायामन्तःपटले सरोवरदृश्यं चित्रितम् । तत्र सघनपद्मवनमध्ये हंससारसादयः पक्षिणो मकरमत्स्यादयो जलजन्तवश्च चित्रिताः । एकस्यां गुहायामुच्चपरिवारस्य चित्रणं विद्यते ।

गुप्तयुगे बहुषु राजभवनेषु, चित्रगृहेषु, मन्दिरेषु च चित्रकारैरसङ्ख्यविषयकाणि चित्राणि निर्मितानि । तेषामुल्लेखमात्रमेव फाह्यानह्वेनसाङ्गादीनां यात्रावर्णनेषु प्राप्यते ।

१ मण्डलेन च यत्स्त्रीणां नृत्तं हल्लीसकं तु तत् ।
नेता तत्र भवेदेको गोपस्त्रीणां यथा हरिः ॥ कामसूत्रे १.१०.२५ टीका

एलूराया कैलाशमन्दिरे भित्तिचित्राणि कृतानि सन्ति। अत्र गरुडासीनस्य विष्णोल-क्ष्म्याश्च चित्रणं सर्वोत्कृष्टम्। चित्रशैली तु प्रायश परवर्तियुगस्याजन्ताचित्रणानुरूपा वर्तते। एषा चित्राणा रचना खीष्टस्य पश्चादष्टमे नवमे च शतकेऽभूत्।

तञ्जौरस्य बृहदीश्वरमन्दिरे चोलराजनिर्मापितानि एकादशशतकस्य चित्राणि प्राप्यन्ते। द्वादशशतकस्य चित्र झाँसीजनपदस्य मदनपुरमन्दिरस्यान्त पटले निर्मित दर्शनीयमेव।

दशमशतकादारभ्य द्वादशशतकपर्यन्त वङ्गप्रदेशे पालराजाश्रये लघुचित्रकला विक-सिता। एकादशशतकादारभ्य षोडशशतकपर्यन्त पश्चिमचित्रकला गुर्जरप्रदेशे विकसिता। तेषा लघुचित्राणा निदर्शन हस्तलिखितपुस्तकाना पृष्ठेषु भवति। बौद्धग्रन्थस्य प्रज्ञापारमि-ताया प्रतिषु देवाना सर्वोत्कृष्टानि चित्राणि विद्यन्ते।

गुर्जरशैलीचित्राणि ताडपत्रेषु साधारणपत्रेषु वा रचितानि। चित्राणा पृष्ठभूमिका प्रथम रक्तवर्णा रचिता, परवर्तियुगे नीला स्वर्णाभा वा पृष्ठभूमिका प्रचलिता बभूव। एषु चित्रेषु कोणविशिष्ट मुखं, शुकनासा, उद्भिन्ननेत्र च विशेषा सन्ति। अलङ्करणविषयाणा चित्रेषु बाहुल्य वर्तते। चित्राणि त्रिविधानि सन्ति—जैनसाहित्यविषयकाणि, वैष्णवसा-हित्यविषयकाणि, लौकिकचित्राणि च। लौकिकचित्रेषु वसन्तविलासचित्रणं सर्वोत्कृष्ट वर्तते। तदधिकृत्य नवसप्ततिलघुचित्राणि कुण्डलितचित्रपटे रचितानि। अस्मिन् प्रकरणे वसन्तस्य चारुताया प्राकृतिकविलासस्य च सौमनस्य चित्रद्वारा विभावितम्।

## चित्रस्य लोकोपयोगिता

वन्यचित्रैर्नागरचित्रैश्च प्राय सर्वदा मानवानामावासा अलकृता। वन्यचित्रैर्दर्शकाना पराक्रमेभ्य प्रोत्साहनमपि समभवत्। रसिकाना हृदये चित्रदर्शने सतत रसनिष्पत्तिरजा-यतेति नि सन्दिग्धमेव।

सिन्धुसभ्यतायुगे वस्त्रपात्रादिषु चित्र रचितम्। श्मशानेऽपि शवं सह निधापिताना पात्रेषु तमालशिरीषादीना वृक्षाणा चित्र कृतम्। सिन्धुसभ्यताया लिपिरिचित्रमयी बभूव। लिपिचित्रेषु वृक्षा, पत्रपुष्पाणि, उत्पतनशीला पक्षिणः, सन्तरणपरायणा मत्स्या पथ-बध्न वर्तन्ते।

बौद्धसाहित्यानुसार चित्रस्योपयोगिता नागरिकाणा व्यावहारिकजीवने संवर्धितेति प्रतिभाति। राज्ञो मनोरञ्जनाय चित्रागाराणि बभूवु। राजकोयरथा सुचित्रिता बभूवु। चित्ररचना मनोरजनाय कृता। साधारणजना अपि गृहभित्तोश्चित्रैरलकृतवन्त।

महाभारतानुसार पताका रञ्जिता बभूवु। चित्रपटेषु हस्त्यश्वरथादय निर्मिता। सभायामासनविधानं क्वचित् पक्षिणा रेखाकृति रचयित्वा तदनुसार कृतम्। तद्यथा

द्रौपद्याः स्वयंवरे निपुणमागहृतिमनुसृत्य जना आविष्टाः । सौन्दर्यस्यानुसारं नायिकाया कर्णादे चित्रं तु दमयन्तीमनोविनोदाय वभूव ।

अजन्ताचित्रे धर्मसंवर्धनस्यायोजनं कृतमिति प्रागेव निर्दिष्टम् । विदेशेषु धर्मप्रसारणाय चित्रस्याभिनवोपयोगः स्वीकृतः । स्तूपचित्राणि रचितानि । गजप्रासादभित्तिषु राजकीयकुटुम्बस्य सदस्यानां चित्राणि निर्मापितानि । भिक्षुका जैना बौद्धा वा स्वकीयमतानां दिग्दर्शनं कृतवन्तः । ज्ञानवर्धनार्थं चित्रस्योपयोगिता सर्वैरनुभूता ।

ख्रीष्टस्य पश्चात् सप्तमे शताब्दे पुषजमहारे धनिना गृहे पर्शियस्यादिचित्रं रचितम् । इन्दिरायाः निदेशेन भित्तिषु चित्राणि कारितानि । न केवलं वस्त्रेषु शरीरस्य विविधाङ्गेष्वपि चित्राणां स्थानं शोभनं मतम् । तद्यथा—कपोले कुङ्कुमेन पत्रलता, स्तनयोः कालागुरुणा पत्राणि पुष्पाणि च स्त्रीभिः रचितानि । राजप्रासादानां भित्तिचित्रैर्विश्वस्य भौगोलिकदर्शनं कारितम् । विवाहावसरे मण्डपद्वारे पत्रलतादयो रचिताः ।

विवाहार्थं स्वयंवरकृते नायकनायिकादीनां चित्राणि रचितानीति सुविदितमेव ।

चक्रवर्तिमहाराजाभिषेकावसरे सिंहासने यद् व्याघ्रचर्मास्तृतं तस्मिन् छद्मीयामा पृथिव्या चित्रं कृतम् ।

## चित्रशैली

विविधोपयोगानधिकृत्य कलाकारादिचित्रकलाया विविधाः शैल्यः विकसितवन्तः । चित्रस्य षडङ्गानि प्रसिद्धानि विदितानि—

रूपभेदः प्रमाणानि भावलावण्ययोजनम् ।
सादृश्यं वर्णिकाभङ्ग इति चित्रं षडङ्गकम् ॥

तत्र रूपभेदो निरूपणीयवस्तुनः प्रत्यङ्गमध्ययनमेव । प्रमाणं तस्याकारप्रकारज्ञानम् । भावस्तेनाभिव्यक्ता रसा भावाश्च सन्ति । लावण्ययोजनेन चित्रे कलात्मकचारुता निर्दिष्टा भवति । सादृश्यं तु सामान्यगुणस्वरूपम् । वर्णिकाभङ्गेन रङ्गनत्वं भवति ।

पद्मपुराणानुसारं चन्दनादिद्रवोद्भवं चित्रमार्द्रमिति मतितम् । चित्रं तु भूतले, जलेऽम्बरे वा कार्यं कृत्रिमैरकृत्रिमैर्वा रङ्गैः ।[1]

चित्रलक्षणमधिकृत्य विविधविषयाणां चित्राङ्कितस्य मानादिकस्य स्वतन्त्रीयस्य च परिभाषया सिद्धान्ता विरचिताः ।[2]

---

1 पद्म० ४८ ३३ ।

2 विष्णुधर्मोत्तरपुराणस्य तृतीयखण्डे ३५-४३ अध्यायाः ।

## चित्रकलायाः विदेशेषु प्रसारः

बौद्धधर्मेण सह भारतीयचित्रकला विदेशेषु प्रसृता। लङ्का-स्याम-ब्रह्मा-नेपाल-खोतान-तिब्बत-जापान-चीनादिषु देशेषु चित्रकला भारतीयशैल्या प्रभाविता। चित्रद्वारा धर्मस्य साक्षात् शिक्षणस्य पद्धतिः प्रचलितासीत्। एतदर्थं कुण्डलचित्राणि प्रयुक्तानि बभूवुः। खीष्टस्य पश्चात् सप्तषष्टितमे वर्षे काश्यपमातङ्गश्चीनमहाराजस्य मिङ्गतीमहोदयस्यानुरोधानुसारं धार्मिकचित्रैः सह चीनमगच्छत्। तस्मात् कालादारभ्य सप्तमशताब्दपर्यन्तमसङ्ख्यानि भारतीयचित्राणि चीने प्रेषितानि। चीनदेशस्य भित्तिचित्रशैली भारतानुरूपैव दृश्यते। भारतीया चित्राचार्या धर्मप्रचाराय चीनं गतवन्तः। जापानस्य होरियूजीमन्दिरस्य चित्राणि अजन्तानुरूपाणि प्रतिभासन्ते।

पूर्वतुर्किस्तानस्य खोतानप्रदेशे खीष्टस्य प्रारम्भिकयुगे भारतीयचित्रकलायाः प्रसरणं समभवत्। तत्र कौशेयवस्त्रेषु भित्तिषु च चित्राणि अजन्तानुरूपाणि अष्टमशतके निष्पादितानि। दन्दन-उलिकलस्थानस्य चित्रं सम्भवतः केनापि अजन्ताचित्रकारेण कृतमिति प्रतिभाति।

## मूर्तिः

भारतीयमूर्तीनां प्रथमपरिचयः सिन्धुसभ्यतायाः अवशेषे प्राप्यते। सिन्धु-सभ्यतायुगे विविधशैलीनां मूर्तीनां रचना कृता। तस्मात् कालादारभ्य प्रायशो द्विसहस्रवर्षेषु या मूर्तयो रचितास्तासां केवलमुल्लेख एव साहित्यग्रन्थेषु विद्यते। तासामवशेषा अप्राप्ता एव। मौर्ययुगादेव मूर्तिकलायाः पुनर्दर्शनं भवति।

## सिन्धुसभ्यताया मूर्तयः

सिन्धुसभ्यतायुगे प्रायश्चतुर्विधा मूर्तयो रचिताः—(१) शिलाशकलानां तक्षणेन कृताः (२) धातून् द्रवीकृत्य निर्मितरूपाः (३) अभिघातेन मुद्रिताः (४) मृण्मयाकृतयो हस्तेन रचिताः।

सुप्रसिद्धैव सिन्धुसभ्यताया ध्यानावस्थितयोगिनो मूर्तिः। सा प्रस्तरस्य मूर्तिः कलाप्रमाणेन लोकोत्तरैव मन्यते। अस्यां मूर्तौ योगिनः आङ्गिकविन्यासः, वस्त्रादीनां परिधानं च याथार्थ्येन प्रतिभासेते। मूर्तौ धातुना प्रतिबन्धनं कृतम्। मूर्तेर्वस्त्रभागेषु त्रिपत्रिकायास्तक्षणं रक्तवर्णेन पूरितम्।

कलादृष्ट्या सर्वोत्तमैव वर्तते शोणप्रस्तरेण निर्मिता पुरुषस्य मूर्तिः, यस्याः कबन्धभाग

एवावशिष्टः । अस्या मूर्तौ स्वाभाविकी रूपमुद्रा विभाविता । तत्रान्त्रिकसौष्ठवानि सुस्पष्टविधिना प्रदर्शितानि । नर्तक्या कांस्यनिर्मितमूर्तौ नृत्यमुद्रा विन्यस्ता । तथा हि तत्र नृत्यस्य हावभावा वर्तन्ते । नर्तकीनां मृण्मयमूर्तयः प्रस्तरमूर्तयश्च प्राप्यन्ते ।

सिन्धुसभ्यतायां मूर्तिकलाशैली 'यथार्था' इति विख्याता । मूर्तिनिर्माणाभिव्यञ्जनं तस्मिन्युगे नोद्दिष्टमिति प्रतिभाति । कलानां भावप्रवणता वैदिककलाया प्रमुखमुद्देश्यं प्रतिभाति । वैदिकवाङ्मयेषु प्राप्तो याथार्थ्यं परित्यज्य कवयो व्यञ्जना समाश्रयन्ते ।

## वैदिकमूर्तय

भारतीयकलाया व्यञ्जनाया आदिस्रोतो वैदिकसंस्कृतौ प्रवाहितम् । अत्र कल्पनायाः यत् प्राधान्यं विभाव्यते तत्प्रभावितोऽत्र ऋषीणामलौकिकप्रतिभया सञ्जातं । तथा हि—अग्नि सहस्राक्ष, पुरुष सहस्रशीर्षः, उषस रमणीरूपा वा । उपनिषत्सु याथार्थ्यस्य परिधिमुपेक्ष्यैव व्यञ्जनामवलम्ब्य दार्शनिका विश्वमखिलं ब्रह्मैव निरूपितवन्तः । अनेन प्रकारेण विश्वोऽननुभुजात, शिवस्य स्वरूपस्य सिध्यति ।

वैदिकमूर्तयोऽधुना न प्राप्यन्ते । तथा साहित्यिकवर्णनमात्रमेव तदानीन्तनकलाप्रगतिं प्रकटयति । तस्मिन् युगे स्वर्णस्य मृत्तिकायाश्च मानवमूर्तयो निर्मिता ।[1] तैत्तिरीयब्राह्मणानुसारं भारती, इडा, सरस्वती च पूज्या देव्यो मता । पूजार्थं तासां स्वर्णमयी, मनोहारिणी च प्रतिकृतिः कारिता ।[2]

स्वर्णनिर्मितरम्य कल्याणतरस्य रूपस्य विधानं पेशस्कारोऽपि कृतम् ।[3]

परवर्तियुगे महाभारते बहुविधमूर्तीनामुल्लेखो विद्यते । विद्यार्थिनां परीक्षार्थं द्रोणाचार्येण शूकरमूर्तिः निर्मापिता । द्रौपदीस्वयंवरे कृत्रिममत्स्यसन्धानं कृतम् । एकलव्य द्रोणाचार्यस्य मृण्मूर्तिं कृतवान् । युद्धस्य पश्चात् भीमस्य लौहमूर्तिं धृतराष्ट्रः पिष्टवान् । भरतस्य मृण्मूर्तिः कारिता ।[4] अन्यच्च—

स सप्तपक्षो निचितस्त्रिगुणो गरुडाकृतिः । आश्व० ९० ३१

## ऐतिहासिकमूर्तयः

ऐतिहासिकमूर्तीनां विस्पष्ट समारम्भो मौर्यकालादेव भवति ।[5] मौर्ययुगस्य सर्वोच्चा-

१ शतपथब्राह्मणे ७ ५ १ १५
२. History of Dharmasastra Part II p. 707
३ बृहदारण्यकोपनिषद् ४.४.४
४. आरण्यकपर्वणि २७८.१३
५. मौर्यकालात् प्राङ् निर्मिता देवमूर्तिः लौरियानन्दनगढे प्राप्ता । कनिङ्घमानुसारमेतस्या निर्माणं ७००–८०० ई० पू० युगे बभूव । रानगिरस्थाने ताम्रपत्रेषु तादृशी मातृमूर्तिः प्राप्ता ।
शैशुनागनन्दयुगस्य ( ६००–४०० ई० पू० ) मूर्तिकला श्रीचक्रेषु निर्मितासिर्नारीमूर्तिभिः प्रमाण्यते । एतासु पत्र-पुष्प-पशूनामलङ्करणं विद्यते । तासां विकासः सिन्धु कला-परम्परायां बभूव ।

दर्शा अशोकस्तम्भाना शिरोभागे स्थापितासु पशुमूर्तिषु विभाव्यन्ते । तासु सारनाथस्य पशुमूर्तय सर्वोत्तमा । अस्य स्तम्भस्य शिखरे धर्मचक्र निर्मितमासीत् । इद धर्मचक्र चतुर्दिग्भागावलोकनपरायणाना चतुर्णा सिंहानामुपरि धृतमासीत् । 'धर्मस्तु लौकिकशक्तिमैश्वर्य च नियमयति' इति धर्मचक्रस्य सर्वोच्चप्रतिष्ठा ध्वनयति । सिंहानामध पार्श्वभागेषु चतुर्षु दिक्षु क्रमश सिंहस्य हस्तिनो वृषभस्याश्वस्य च पराक्रमव्यञ्जका मूर्तयो वर्तन्ते। प्रत्येकमूर्त्या सहैवैक धर्मचक्र निर्मितम् ।

अशोकयुगस्योपर्युक्तमूर्तिकलाया सर्वोत्कृष्टत्व प्रत्यक्षमेव वर्तते । मूर्तिषु स्वाभाविकतया ओजस्वितया सहापूर्व एव योगो दर्शनीय । ईदृशा स्तम्भा दिल्ली-प्रयाग-रामपुरवा लौरियानन्दनगढ साँचीषु विराजन्ते । स्तम्भेषु अशोकस्य मानवोद्बोधका सन्देशा उत्कीर्णा ।

मौर्यकालिकमानवमूर्तीना परिचयो यक्षाणा प्रतिमाभिरेवावगम्यते । अस्य युगस्य यक्षाणा प्रतानमूर्तयो मथुराजनपदस्य परखमग्रामे, पाटलिपुत्रे च प्राप्यन्ते । कस्याश्चिद् यक्षिण्या मूर्ति दीदारगजे प्राप्यते । सर्वा यक्षमूर्तयोऽतिशयविशाला सन्ति । भावाभिव्यञ्जनस्य प्रायोऽभाव एव तासु मूर्तिषु प्रकटति । बुद्धस्य बोधिसत्त्वाना च परवर्तिमूर्तयो यक्षशैलीमेवानुसृत्य कृता ।

परवर्तियुगे ख्रीष्टाब्दतो द्विशतक प्रागेव भरहुत-साँची-स्तूपाना प्राकार-वेदिकादिषु तोरणेषु चासख्यलघुमूर्तयो निर्मिता । एतासु तदानीन्तनसामाजिकजीवनस्य दृश्यमुत्कीर्णम् । तथा हि—मनोरञ्जन-समाजोत्सव-युद्ध हास्यादीना निदर्शन कृतम्, जातककथा उत्कीर्णाश्च । अलङ्करणार्थ पशुपक्षिवृक्षलतादीना मूर्तीना देवप्रतिमाना च दृश्य वर्तते। भरहुतस्य तक्षणे वटवृक्षस्य शरणे कस्यचिद्वैरिध्यापनस्य दृश्यमुत्कीर्णम् । क्वपिरय वेदपाठ सस्वर कारयतीति स्वराणामङ्गुलिनिर्देशेन ज्ञायते । ब्रह्मचारिणा जटा मुखमुद्रा वेशविन्यासश्च याथार्थ्येनोत्कीर्णा । अस्य दृश्यस्याधोभागे—दीघतपसि सिसे अनुसासति—इति लिखितम । मानवमूर्तिषु विशेषमेवाङ्गिकसौष्ठव साँचीमूर्तिषु दृश्यते । क्वचित् श्रीलक्ष्मीगजलक्ष्मीमातृदेवीना च मूर्तय कारिता ।

साँची-भरहुत-बोधगयादीना प्राचीनमूर्तिपटलेषु बुद्धचरितप्रकरणेऽपि बुद्धस्य मूर्तिर्न कारिता । तद्यथा बुद्धजन्मदृश्ये बुद्धस्य माता वर्तते, किन्तु बुद्धस्तत्र नास्ति । गृहत्यागदृश्ये अश्वस्तु वृक्षस्याधस्तिष्ठति । देवा अश्वस्य चरणानवलम्बन्ते, तत्रापि बुद्धो न वर्तते । धर्मचक्रप्रवर्तनदृश्ये गौतमस्याभिव्यक्ती रिक्तासनेन धर्मचक्रेण च भवति । एषु दृश्येषु गौतमाभावेऽपि तत्रत्यसन्निवेशस्तस्य व्यक्तित्वेन परिव्याप्त निष्पादितम् ।

## सातवाहन मूर्तिकला

कृष्णानद्या उपत्यकाप्रदेशे अमरावतीजगय्यपेननागार्जुनिकोण्डादिषु स्थानेषु स्तूपाना रचना खीष्टाब्दात् प्राक् प्राय प्रथमशतके कृता । तेषु स्थानेषु प्रस्तरपट्टेषु या मूर्तयो

वर्तन्ते ता गताः अमरावतीकलाकेन्द्रे परिगणिताः । अमरावत्यां साँचीभरहुतादिस्थानेभ्य-मुखामनन्तरा भावाभिव्यक्तिमयी सौष्ठवपूर्णा च मूर्तिकला विरचिता । लतावृक्षाणां विशे-षतः कमलदण्डानां तक्षणमतिशयमनोरमं प्रतिभासते । क्वचिद् बुद्धस्यापि साक्षात् मूर्ति वर्तते, किन्तु स प्रायः प्रतीकैरेवाभिव्यक्तः । नागार्जुनिकोण्डे गोलमस्य गृहरश्म्यागस्य तक्षणे तस्य युगस्यानुपमा रचना प्रतिभाति । सातवाहनकलायाः प्रभावो गुप्तकलाया उपरि प्रकटति ।

ख्रीष्टाब्दात् प्राक् प्रथमशतकस्य मुद्रा अहिच्छत्रायां प्राप्ता । तासु मुद्रासु विष्णोः, सूर्यस्य, इन्द्रस्य, पृथिव्याः, फल्गुन्याः, प्रजापतेश्चाकृतयः सन्ति । अस्मिन् युगे विष्णोर्मूर्तीनां विशेषमाहात्म्यमासीत् । विदिशायां गरुडध्वजस्य स्तम्भोऽस्य युगस्य कलामकरवृत्तानां स्मारक एवाधुनाऽपि मूकः राजते ।

आन्ध्रवंशिनो राजानो मूर्तिकलायाः अभ्युदयाय प्रयत्नशीला बभूवुः । कार्ले-कन्हेरी-भाजादिषु स्थानेषु येषां शासनकाले गुहा निर्मिताः । तासु गुहासु बहुविधानां मूर्तीनामलङ्करणार्थं प्रतिष्ठा कृता । तद्यथा—चैत्यगृहाणां द्वारेषु स्त्रीपुरुषाणां विशाला मूर्तयो वर्तन्ते । कार्लेचैत्यस्यान्तरभित्तिषु हस्तिनां पूर्णाकारा मूर्तयो रचिताः । हस्तिनामुपरि नृत्यपरायणानां दम्पतीनां कलात्मकं तक्षणं विद्यते । चैत्यानां स्तम्भेषु जानुभ्यां प्रणतानां हस्त्यश्वयात्रिचित्रकादीनां मूर्तयो रचिताः । क्वचित्तपस्विनां मूर्तयः कारिताः ।

पाण्डुलेनगुहासु अष्टभुजस्तम्भानामुपरि हस्तिवृषभाश्वादीनां मूर्तयः, कन्हेरीगुहासु सिंहस्तम्भौ, भाजागुहासु देवयात्रादृश्यतक्षणं बेडसागुहासु स्तम्भानामुपरि हस्त्यश्वादीनां मूर्तयः सुप्रसिद्धाः ।

## कुषाणमूर्तिकला

ख्रीष्टाब्दस्यारम्भिकयुगादेव ब्राह्मणजैनबौद्धादिसम्प्रदायानामुपास्यरूपानां देवानां मनुष्याणां च मूर्तयो बहुशः प्राप्यन्ते । तासु मूर्तिषु बहुविधशोभनदृश्यानां तक्षणमलङ्करणार्थं दृश्यते । अस्याः कलायाः प्रथमो विकासः पश्चिमोत्तरभारते गान्धारकेन्द्रात् तक्षशिलाकेन्द्रात् तथा उत्तरभारते मथुराकेन्द्रादभवत् ।

## गान्धारकलाकेन्द्रम्

अस्मिन्युगे गान्धारप्रदेशे राजकीयसंस्कृतिर्वैदेशिकी ग्रीका वाऽभवत् । तस्मात्कालादारभ्य पद्मतटपर्यन्तं अफगानिस्ताने भारतस्य पश्चिमोत्तरप्रान्ते च गान्धारकलायाः प्रसारो बभूव ।

गान्धारकलाया वैशिष्ट्यं मूर्तिषु शारीरिकसौष्ठवमासीत् । तत्राध्यात्मिकभावानां व्यञ्जना भावता न्यूनैव । गान्धारे वस्तूनां यथार्थं नयनाभिरामं च स्वरूपं मूर्तिकाराणां लक्ष्यमासीत् । भारतीयमूर्तयस्तु कलाकाराणां प्रतिभाया अभिनवोन्मेषस्य प्रदर्शनाय

भवन्ति। मूर्तौ याथार्थ्याद् अधिकतर महिमशालिनी भावाना रसाना चाभिव्यक्तिर्भवति। भारतीया मूर्तिशैली व्यङ्ग्यमुखी वर्तते।

गान्धारकलाकेन्द्रे प्रथम ग्रीकमूर्तिकारैर्गौतमबुद्धस्य मूर्तयो रचिता। प्रस्तरफलकेषु गौतमबुद्धस्य बोधिसत्त्वानां च चरितानि उत्कीर्णानि। तत्र बुद्धस्य श्मश्रु वैदेशिकवेशविन्यासश्च प्रदर्शिते।

## मथुराकलाकेन्द्रम्

भारतीयमूर्तिशैल्या विकास उत्तरभारते मथुराकेन्द्रादभवत्। मथुरायामपि गौतमस्य बोधिसत्त्वाना मूर्तयो निर्मिता। ता मूर्तयो गौतमबुद्धस्य व्यक्तित्वानुरूपा भव्या ध्यानावस्थितमुद्राभिव्यञ्जकाश्च वर्तन्ते। प्रायशो मूर्तय पूजार्थं रचिता अतस्ताभिर्मूर्तिभिस्तदानीन्तनसमाजस्य भक्तिभावनाया अभिव्यक्तिर्भवति, अनेन प्रकारेण मूर्तिकलाया भक्तिस्रोतसि परिशोधन निष्पन्नम्।

बुद्धस्य मूर्तिषु महापुरुषलक्षणानि—उष्णीषोर्णालम्बकर्णपाशजालाङ्गुलिहस्तचक्रादीनि विभावितानि।

मथुराकेन्द्रस्य प्रभाव समग्रोत्तरभारते परिव्याप्नोत्। मथुराया विनिर्मिता मूर्तयो बहुधा आदर्शरूपेण गृहीता सुदूरस्थानेषु नीत्वा ता मूर्तयस्तत्र स्थापिता। अधुनापि मथुरानिर्मितमूर्तय सारनाथ कौशाम्बी-श्रावस्ती-साँचीषु वर्तन्ते। तासा मूर्तीनामादर्शमनुकृत्य तेषु स्थानेषु बहवो मूर्तयो रचिता। सारनाथस्य मथुरा-मूर्तिस्तु रक्तप्रस्तरेण निर्मिता। अस्या मूर्तौ बुद्धस्य वेशविन्यासस्य रेखाङ्कन कृतम्। बुद्धस्य शिरस पश्चभागे प्रभामण्डलद्योतक प्रस्तरफलक वर्तते।

## सारनाथकलाकेन्द्रम्

मथुराकलाकेन्द्रस्य मूर्तिषु आङ्गिकविन्यासे सपाटतावर्तत। सारनाथकेन्द्रस्य तदानीन्तनमूर्तिषु अङ्गाना गोलत्व कोमलता कमनीयता च प्रदर्शितानि। मूर्तिषु हस्तपादयोर्मान यथार्थं कृतम्। मूर्तिषु वस्त्रवत्त्वं पिनद्धविधिना कृतम्। अनेन प्रकारेणाङ्गिकसौष्ठवं प्रत्यक्षमेव भवति। गौतमस्य मूर्तिस्त्रिचीवरै परिवृता वर्तते।

बोधिसत्त्वाना वेशविन्यासो गृहस्थानामिव विभाव्यते। क्वचित् जातक-कथानामपि तक्षणं कृतम्। क्षान्तिवादिजातकस्य तक्षणं सुमनोहरमेव। गौतमबुद्धस्य जीवनचर्याया अष्ट प्रमुखवृत्तान्ता सारनाथकलाया वैशिष्ट्यमेव।[1]

---

१ अष्टवृत्तान्ता —जन्म मारप्रलोभनं धर्मचक्रप्रवर्तनं, महापरिनिर्वाणं स्वर्गावतरणं पारिलेय्यके वानरेण गौतमस्य पारणाविधान नालागिरिहस्तिनो विनयनमेकस्मिन्क्षणे विभिन्नस्थानेषु धर्मोपदेशाश्च।

सारनाथकलाकेन्द्रस्य विकासोन्मुखप्रवृत्तिः सप्तमशताब्दीपर्यन्तं प्राचरत्। पश्चात् तत्रापि कलाशैली स्थिराभवत्।

## गुप्तयुगस्य मूर्तिकला

कुषाणयुगस्य मूर्तिषु विशालता स्थूलता च प्रभावोत्पत्तये बभूवतुः। गुप्तयुगे सौन्दर्य-सर्जनाय तनुता, सूक्ष्मता, मधुरता च मूर्तिषु सविशेषं विभाव्यन्ते। मूर्तयस्तु रमणीयाः सरसाश्च प्रतिभान्ति। अस्य युगस्याराध्यदेवा —तीर्थङ्कराः, बुद्धः, बोधिसत्त्वाः, शिवः, विष्णुश्च बभूवुः। तेषामुपवस्थानुरूपा मूर्तिकला प्रावर्तत।

पञ्चमशतके उत्तरभारते मथुराकलाकेन्द्रानुरूपा मूर्तयः कसिया-बोधगया-सारनाथा-दिषु स्थानेषु निर्मिताः। अस्य युगस्य सर्वप्रथममूर्तिर्बोधगयायां बोधिसत्त्वस्य प्रतिमा वर्तते। अपरं च जिनेश्वरशिवस्य कतिपयमूर्तयस्तस्मात्स्थानादुपलभ्यन्ते। एतासु मूर्तिषु आङ्गिकविन्यास-सुषमैव सौष्ठवरूपांश्च निष्पादिताः।

## सारनाथकलाकेन्द्रम्

सारनाथकलाकेन्द्रस्य मूर्तयो बुद्धस्य बोधिसत्त्वानां कार्त्तिकेयादिपौराणिकदेवानां च वर्तन्ते। एतासु सर्वासु मूर्तिषु मनोभावानामाध्यात्मिकवृत्तीनां चाभिव्यक्त्यै नेत्रहस्तपाद-शिरसां मुद्रा विभाविताः। एवमन्तरबाह्ययोरैकरूप्यतायाः प्रदर्शनं प्रभावमुत्पादयति।

सारनाथस्य धर्मचक्रप्रवर्तकस्य गौतमस्य मूर्तिरस्य वैशिष्ट्यस्य प्रतिनिधिभूतैव वर्तते। अस्यां मूर्तौ गौतमो ध्यानावस्थितः आसने उपविष्टः। तस्य हस्तौ अभयस्य शान्तेश्च व्यञ्जनां कुर्वन्तौ एव नाभिप्रदेशादुपरि स्थितौ। तस्य पादौ पद्मासनमुद्रायां वर्तेते। पार्श्वभागे गौतमस्य प्रथमपञ्चशिष्याः सन्ति। तेषां समक्षं धर्मचक्रप्रवर्तनं क्रियते। सारनाथकलाकेन्द्रस्य प्रभावः सारनाथसंग्रहालयस्य लोकेश्वरशिवस्य मूर्तौ, नागोदजनपदस्य खोहस्थानस्यैकमुख-लिङ्गमूर्तौ, बेसनगरस्य मकरवाहिन्या गङ्गाया मूर्तौ, भूमराया महिषमर्दिन्या दुर्गाया-शिवस्य च मूर्तौ, देवगढस्थानन्तशायिनो विष्णोर्मूर्तौ च समागतः।

वैत्रवतीनद्यास्तटे झांसीजनपदे गुप्तयुगस्य दशावतारदेवालयस्य द्वारतोरणे लतापत्रा-दीनामलङ्करणस्य, पार्श्वस्तम्भयोः प्रतिहारिणोः प्रमथदम्पतीनां मङ्गलकलशादीनां च तक्षणं मनोरममेव। स्तम्भेषु गङ्गा-यमुनयोस्तक्षणं तस्मात्कालादेव विशेषरूपेण प्रचलितम्। मंदिर-भित्तीनां बाह्यतलानामुपरि नरनारायणयोस्तपसः, शेषनागस्योपरि विष्णोः शयनस्य, गजे-न्द्रोद्धारस्य च मनोरमदृश्यानि तष्टानि। देवगढस्य देवक्या वसुदेवाय शिशुसमर्पणम-द्वितीयमेव कृष्णजन्मनः तक्षणं प्रस्तौति। तत्रत्यासु सर्वासु मूर्तिषु आध्यात्मिकता, आङ्गि-कचारुता, भावाभिव्यक्तिश्च लोकोत्तरा एव।

ख्रीष्टाब्दस्य पञ्चमे शतके विदिशापार्श्वे उदयगिरेः पञ्चमगुहायां वराहेण पृथिव्या उद्धरणमुत्कीर्णम्। अनुपमेया तस्य युगस्येयं कलाकृतिरिति निःसंशयमेवोद्घोषितम्।

अस्मिन् दृश्ये वराहस्य शरीरं मानवसमानं शिरस्तु शूकरवद्विद्यते । वराहस्य वामपादः शेषनागस्य मण्डलेषु स्थितः । वराहस्याङ्गिकविन्यासैस्तस्य स्फूर्तिः कर्मण्यता बलशालिताश्च प्रकटिता । वराहः स्वदक्षिणदंष्ट्रया नारीरूपिणीं पृथिवीम् उन्नयति । समुद्रस्याभिव्यक्तिर्गुहायाः भित्तितले ऊर्मिमयतरंगितरेखाभिः कृता । वराहस्य वामपार्श्वेऽप्सरसो दक्षिणे चतस्रो देवश्रेणयः—ब्रह्मशिवादयो वर्तन्ते । असुरा ऋषयश्च दर्शका एव तत्र । अन्यतो गंगाया यमुनायाश्चावतरणदृश्यमुत्कीर्णम् । नद्यौ वराहस्याभिषेकार्थं कलशहस्ते वर्तेते । वरुणदेवोऽपि कलशहस्तो आनुदघ्ने जले तिष्ठति । अनेन मूर्तिदर्शनेन लोककल्याणस्य भावना सञ्जायते । सर्वत्र समरसतायाः सहानुभूतेश्चाभिव्यक्तिर्भवति ।

## प्राच्यमूर्तिकला

प्राच्यप्रदेशानां वङ्गादीनां मूर्तिभिराध्यात्मिकभावानामभिव्यक्तिः सम्यक् कृता । तत्र मूर्तीनां स्वरूपं सरसं प्रदर्शितम् । मूर्तीनां विशालत्वं सुविशिष्टमेव प्रतिभाति ।[1] नालन्दाया सुल्तानगंजस्य च मूर्तयो मथुरा-कलाकेन्द्रस्य परिधाने भूषिता प्रदर्शिता । दहपर्वतिकायां प्राप्तानां गङ्गा-यमुनयोर्मूर्तीनां परिधानं सारनाथस्य कलाकेन्द्रमनुकरोति ।

## दाक्षिणात्यमूर्तिकला

गुप्तयुगस्य षष्ठशतके एहोलस्थानस्य शिलाफलकेषु अनन्तविष्णुप्रमुखाणां देवानां मूर्तिषु आङ्गिकसौष्ठवं सन्तुलनं पद्मासनत्वं च व्यक्तान्येव, किन्तु तत्राध्यात्मिकताया अभिव्यक्तिः प्रायो नैव विद्यते । अङ्गेषु सुकुमारता विनिविष्टा वर्तते । तदानीन्तनीषु कन्हेरी-अजन्तादीनां मूर्तिषु रसभावादीनामभिव्यक्तिर्न भवति । मूर्तिषु बलशालिता प्रधानत्वेन प्रतिभाति, किन्तु तस्या कोऽपि प्रासङ्गिकगुणो न लक्ष्यते ।

दक्षिणभारते षष्ठशतके बादामी-पारेलादिषु स्थानेषु पूर्ववर्तिनां कार्लीभाजादीनां मूर्तीनां कलाया विकासः परिलक्ष्यते । पारेले शिलापट्टेषु विशालमूर्तीनां तक्षणं कृतम् । मूर्तयो ध्यानमुद्रासु सन्निविष्टा । ताभ्यो मूर्तिभ्य ओजस्वितायाः समाधेश्च व्यञ्जनं स्पष्टमेव भवति । बादामीगुहासु पारेलवत् मूर्तिभिः शारीरिकसंस्थानं शक्तिर्गरिमा च व्यज्यन्ते । तस्य युगस्य कार्यपरायणता मूर्तिषु विभाव्यते ।

गुप्तयुगस्य मूर्तिकलाया विकासः ख्रीष्टाब्दस्य सप्तमशतकपर्यन्तमेवाभवत् । तस्मात् कालादारभ्य गुप्तकालोचितप्रतिभायाः ह्रासः समारब्धः । उत्तरे भारते सारनाथे नालन्दायां च मूर्तीनां निर्माणं पूर्ववत् प्रावर्तत । एताभिर्नवीनमूर्तिभिर्जीवनस्य क्रियात्मकतायाः अभिव्यक्तिर्न भवति । तासु मूर्तिषु कलात्मकस्पन्दनस्याभावो वर्तते । गुप्तकलाया ह्रासोन्मुखप्रवृत्तीनामाभासः साधारणतः सर्वासु मूर्तिषु प्रत्यक्ष एव । किन्तु तथापि क्वचित् कतिपय-

---

१. ईदृश्यो मूर्तयो नालन्दायां सुल्तानगंजे च प्राप्यन्ते । हेनसाङ्गानुसारं नालन्दायां बुद्धस्य ७५३ हस्तोच्छ्रायोपेतासीत् । सुल्तानगंजे प्राप्ता मूर्तिः ५ हस्तोच्छ्रायोपेतास्ति ।

विशिष्टमूर्तयो निर्मिता सन्ति, यासु मूर्तिकलाया उत्कृष्टत्वं प्रतिभासते। तद्यथा पहाड़पुरस्य कृष्णलीलाया मूर्तयः सन्ति। अस्यां मूर्तौ राधाकृष्णयोः प्रेमालापः, धेनुकवधश्च रमणीयौ। मालवप्रदेशस्य सांचीस्थानस्यावलोकितेश्वरमूर्तिः सौन्दर्यविशिष्टा वर्तते। दक्षिणभारते ह्यस्य युगस्य मूर्तिकलाकेन्द्राणि—एलोरा (वेरूल)—पट्टदकल-औरङ्गाबाद धारापुरी (एलिफैण्टा) स्थानेषु बभूवुः।

एलोरास्थानस्य पूर्णाकारमूर्तयोऽतिशयमनोहारिण्य एव। तद्यथा—पार्वतीपरमेश्वराभ्यामध्यासितं कैलासं रावणः दोलायमानं करोतीति दृश्यस्य तक्षणमनुत्तममेवोद्दीपितं कलासमीक्षकैः।

पल्लवकलाकेन्द्रस्यास्य युगस्य मूर्तयः पट्टदकल-महाबलिपुर-काञ्चीपुरादिषु स्थानेषु वर्तन्ते। अस्य केन्द्रस्य वैशिष्ट्यमाङ्गिकतनुता सुकुमारता चास्ति। भावाभिव्यक्तिश्च मूर्तिषु दृश्यते। पट्टदकलस्य विरूपाक्षमन्दिरस्य दार्शनिकाभिव्यक्तिरनुपमैव वर्तते। विरूपाक्षमूर्त्यां मानवतायै विश्वात्मकदिव्यताया सन्देशः प्रसर्रति। शिवमन्दिरस्य समक्षं ब्रह्मणो मूर्तिः वर्तते। तस्याः समीपं शिववाहनस्य नन्दिनो मूर्तिरस्ति।

भारतीयमूर्तिषु ओजस्वितायाः विशालतायाः अध्यवसायितायाश्चाभिव्यक्तेः सर्वोच्चविकास एलिफैण्टा-मूर्तिषु विभाव्यते। तत्रत्यकतिपयमूर्तिषु तपःसमुद्भूतानां शक्तीनां प्रत्यक्षीकरणं भवति। शिवस्य त्रिमूर्तिः, ताण्डवनृत्यमूर्तिः, पार्वतीपरिणयमूर्तिश्च परममनोहारिण्यः प्रभावशालिन्यश्च प्रतिभासन्ते। तत्र मूर्तिकलायाः सोत्कर्षविन्यासः प्रकटति।

खीष्टाब्दस्य सप्तमशतके पल्लवकलाकेन्द्रान्तर्गतमहाबलिपुरस्य मूर्तिकला समग्रभारतस्य मूर्तिकलायाः प्रतिनिधिभूता विलसति। कलायाः पूर्ववर्तिनीनां सर्वासामनुभूतीनां प्रेरणानां च समाहारस्तत्रैव विभाव्यते। गङ्गावतरणस्य दृश्यं प्राकृतिकरमणीयतायाः मध्ये तत्रातिशयप्रभावोत्पादकमेव। स्वर्गस्य मर्त्यलोकस्य चासङ्ख्यानां लौकिकानां च मनोरमवस्तूनां सङ्ग्रहणं मूर्तिरूपेण तत्र कृतम्। गङ्गायास्तटदृश्यानि विशेषरमणीयानि तथा नैसर्गिकच्छटासम्पन्नानि प्रतिभान्ति। पशूनां मूर्तयः सजीवा एव। गङ्गावतरणस्य दृश्यमिदं ९५ x २८ वर्गहस्तविस्तृतशिलापट्टके तष्टम्। तपस्विनो भगीरथस्य शरीरं तपसा कार्श्यप्रपन्नमेव। भगीरथेन सह सहानुभूतौ देवाः पशवोऽपि तपसि संलग्नाः दर्शिताः। इदं दृश्यं मानवहृदयं तपोमयसाधनायै सहसा प्रोत्साहितं करोति। समन्तत औदार्यमेव प्रवर्तते।

महाबलिपुरे उपसमुद्रं पर्वतं तष्ट्वा सप्तमन्दिराणि निर्मितानि। तत्र महिषमण्डपे शेषशायिनो विष्णोर्मूर्तिर्वर्तते। पार्श्वे एव महिषासुरेण सह युध्यमानाया दुर्गाया मूर्तिर्वर्तते। कृष्णगुहायां कृष्णस्य गोवर्धनधारणं गोदोहनं च प्रदर्शितम्। अष्टमशतकस्य काञ्चीपुरस्य कैलासनाममन्दिरस्य मूर्तयो महाबलिपुरानुरूपा एव।

परवर्तियुगे खीष्टाब्दस्य नवमशतकादारभ्य भारतीयमूर्तिकलाया कोऽपि विशिष्ट-

विकासो न गोचरीभवति, यद्यपि प्राय सदैव सर्वत्र च मूर्तीना निर्माणमभवत । मूर्ति-निर्माणस्य षट् प्रधानकेन्द्राणि बभूवु —उत्कलप्रदेशे (पुरी, भुवनेश्वर, कोणार्कश्च), बङ्ग विहारे, बुन्देलखण्डे (खजुराहो), मालवप्रदेशे, गुर्जर-राजस्थानयो, तामिलप्रदेशे च ।

उत्कलकेन्द्रम्

भुवनेश्वरस्य लिंगराजमन्दिरस्य निर्माणं खीष्टाब्दतो दशमे शतकेऽभवत् । मन्दिर-भित्तीना बाह्यतलेषु पशुपक्षिणा मानवाना च भव्या मूर्तयो निर्मिता । तत्र हस्त्यश्वहरिण-सिंहादय पूर्णाकारा क्वचित् सजीवा एव निर्मिता । मूर्तीना पार्श्वभूमिर्लतापत्रादीना-मलङ्करणै शोभते । गौरीविमाने पार्वत्या मूर्ति विविधाभरणैरलङ्कृता वर्तते । अन्यत्र रामायण-महाभारतादीना कथादृश्यानि तक्षानि । पाण्डवाना स्वर्गारोहणदृश्य मनोरम भाति । जगन्नाथमन्दिरे जगन्नाथस्य कृष्णस्य सुभद्राया बलरामस्य च मूर्तय प्रतिष्ठिता । तत्रैव रामकृष्णयोश्चरितावली—कालियदमन गोवर्धनधारण गोपालन राम-रावणयुद्ध च मूर्तिभि प्रदर्शिता । भित्तीनामालयेषु वामन-वराह-नृसिंहादीनामवताराणा मूर्तय प्रतिष्ठिता । कोणार्कमन्दिरस्य गर्भगृहस्य निम्नभागे हस्तिना लघुमूर्तयो निर्मिता । अस्मिन् मन्दिरे प्रधानतोऽर्कस्य (सूर्यस्य) मूर्ति स्थापिता । मन्दिरस्य निर्माण चतुर्वि-शतिचक्रवत् रथस्योपरि कृता । चक्रेषु सर्वत्र मूर्तीना लतापत्रादीना चालङ्करण विद्यते ।

उपर्युक्तेषु सर्वेषु मन्दिरेषु शृङ्गाराभिनिविष्टाना मूर्तीनामाधिक्य वर्तते । तत् सर्व-मश्लीलमेव ।

बुन्देलखण्डकेन्द्रम्

'खजुराहो'—नामके ग्रामे हिन्दूना जैनाना च बहूनि मन्दिराणि वर्तन्ते । तत्र कण्डरि-यामहादेवस्य मन्दिरे निर्मिताना मूर्तीना कलासौन्दर्यं श्रेष्ठमेव । मन्दिरस्य गर्भगृहे, अन्त-राले, महामण्डपे, मण्डपे, अर्धमण्डपे च प्राय सर्वत्र बाह्यभागे अन्तरभागे वा मूर्तितक्षण-कर्म सुशोभन प्रतिभासते । नात्र किमपि स्थान तत्रैदृशममूर्तं विद्यते यत्र मूर्तिरचना सम्भवेत् । प्रवेशस्थाने कामशास्त्रसम्बद्धाना मूर्तीना करण सर्वत्र कामस्य प्रभाव व्यञ्ज-यति । अस्मात् कामस्थानादुपरि गत्वैव देवदर्शनं दिव्यजीवन वा प्रत्यक्ष भवति । प्रवेश-द्वारस्य तोरणे देवताना गन्धर्वकिन्नराणा तक्षण विद्यते । गर्भगृहस्य प्रवेशद्वारे ध्यानाव-स्थिताना मुनीना योगिना च मूर्तय निवेशिता । पार्श्वस्तम्भेषु गङ्गायमुनयोर्दर्शन भवति । स्तम्भानामालयेषु त्रिदेवाना तेषामवताराणा च मूर्तयो वर्तन्ते । क्वचिदप्सरसा किन्नरादीना नृत्य प्रदर्शितम् । लक्ष्मणमन्दिरस्यैकस्मिन् तक्षणे आचार्यकुलस्य स्वरूप दृष्टम् । तत्राचार्यं परित ब्रह्मचारिणो जिज्ञासुमुद्रायामुपविष्टा, विष्णोस्त्रिमुखचतुर्भुज-मूर्ति निहिता च । अस्य मन्दिरस्य द्वारस्थले समुद्रमन्थनमुत्कीर्णम् । मतङ्गेश्वरमन्दिरस्य समक्ष वराहस्य दंष्ट्रया पृथ्वी समुत्तोलिता ।

खजुराहोकलायां मूर्तिकलावैचित्र्यमेकया मूर्त्या द्विभावानां प्रदर्शनेन प्रकटति। क्वचित् मल्लयुद्धस्या यत्र मिथुनानामालिङ्गनस्य दृश्यमपूर्वमेव शालातरस्य द्विभावानां प्रदर्शनेन सम्भवत ।

## राजस्थानकेन्द्रम्

आबूपर्वते खीष्टाब्दस्य क्रमशः एकादशे त्रयोदशे च शतके विमलशाहेन तेजपालेन च निर्मापिते मन्दिरे तदानीन्तनमूर्तिकलाया मध्य आदर्श सम्पुटित । मन्दिरयो प्रधानत आदिनाथस्य मूर्ति स्थापिता। प्रवेशद्वारस्य समीप दशगजेन्द्राणां मर्मरोत्पलमूर्तयो निर्मिता। अन्त पटलेऽपि मनोरमा मानवमूर्तयो निर्मिता। स्तम्भानामलङ्करण नरनारीणां मूर्तिभि कृतम्। मण्डप परित द्विपञ्चाशत्कोष्ठेषु जैनदेवाना मूर्तय निवेशिता। तीर्थङ्कराणां मूर्तिभि शान्तिरसो विरागश्च व्यज्येते।

गुर्जरप्रदेशे सोमनाथमन्दिरे शिवादीनां देवानां मूर्तय सन्ति। एतेषां मूर्तीनां प्राय ध्वस एव विधर्मिभि कृत । प्राचीनयुगस्य कतिपयावशेषा अधुनापि अवशिष्टा । तेषु रामायणकथाया दृश्यानि मनोरमाणि वर्तन्ते।

## तामिलकेन्द्रम्

दक्षिणभारते राजवीयाश्रयस्याभ्यासा मन्दिराणां निर्माणमभवत्। तत्र मैसूरराज्ये हलवीदस्य ( दोरसमुद्रस्य ) मन्दिर द्वादशे शतके रचितम्। अस्य मन्दिरस्य क्रमश उपर्युपरि शिलापट्टेषु २००० हस्तिना सिंहानामश्ववाराणां पत्रपुष्पलतादीनां च तक्षण दर्शनीयमेव। उपरिभागे ४६० हस्तायामपट्टे रामस्य लङ्काविजयस्य दृश्य तष्टम्। सर्वोच्चे भागे स्वर्गस्य पशुपक्षिणा मानवजीवनसम्बन्धिना दृश्यानि रचितानि। इमानि सर्वाणि दृश्यानि प्रस्तरफलकेषु महाकाव्यवत् प्रतिभासन्ते।

दक्षिणभारते चिदम्बरस्य नटराजमन्दिर मूर्तिकलाया प्रथमादर्श एव। तत्र नृत्यमयीनां मूर्तीनां प्राचुर्यं वर्तते। तासा दर्शने निमग्ना रसिक स्वयमेव शिवनर्तनलीलाया विलीनो भवति। नटराजमन्दिरस्य चतुर्षु गोपुरेषु तत गर्भगृहपर्यन्तभित्तिषु च नाट्यशास्त्रानुरूपाणां नृत्यभावाना तक्षण विधाने। तथा नाट्यशास्त्रस्य ताण्डवलक्षणप्रकरणस्य १०८ करणानां प्रदर्शन गोपुरे कृतम्। नाट्यशास्त्रस्यानुपङ्क्तिकश्लोका अपि तत्र उत्कीर्णा । गोपुराणां निर्माण चोलवंशीयै पल्लववंशीयै राजभि कृतम्।

# मृण्मयमूर्तयः

सिन्धुसभ्यताया मृण्मयमूर्तयोऽन्योपादानकृतमूर्तिभ्योऽधिकतरा एव। तत्र मृत्तिकाया सुलभत्व रूपनिर्माणसुगमत्व च कारण प्रतिभाति। मूर्तिकलाया अभ्यासाय प्रारम्भे मृण्मयमूर्तीनां रचना कृतेति निश्चितमेव।

सिन्धुसभ्यतायां मृण्मयमूर्तिषु क्रीडनकानां बाहुल्यं वर्तते। तत्र मनुष्याणां देवतानां पशुपक्षिणां फलानां च मूर्तयो वर्तन्ते। नर्तकीनामपि कतिपयमूर्तयः सन्ति। मूर्तिषु वस्त्रविन्यासोऽलङ्करणं च कृते। साधारणतः क्रीडनकानां रञ्जनमग्नौ पाकात् प्रागेव कृतम्। पाकात् पश्चादपि रञ्जनं कृतम्।

सिन्धुसभ्यतायाः पश्चात् २००० वर्षपर्यन्तं मूर्तिकलायाः विकासः कथमभवदिति भाग्यनापि सुविनिश्चितम्। अतः परं प्रथमं मौर्ययुगस्य मूर्तयः प्राप्यन्ते। तत्र कतिपयनारीमूर्तयः सिन्धुपरम्परायाः अनुकरणमेव द्योतयन्ति। खीष्टाब्दतः प्राक् द्वितीयशतकादारभ्य मृण्मयमूर्तीनां निर्माणस्य परम्परा सदैव प्रचलिता। ततो मथुराहिच्छत्राकौशम्भ-पटनादिषु स्थानेषु सांचीपरम्परायां बह्व्यो मूर्तयो विद्यन्ते। एषु स्थानेषु प्रधानतो लोकव्यवहारेषु मनोरञ्जन-प्रसाधनादिकर्मसु व्यापृतानां नरनारीणां मूर्तयः प्रायो रचिताः। प्रयागस्य समीपे कौशमस्थानस्य शृङ्गारमयदम्पत्योर्मूर्तिर्भावाभिव्यञ्जिका मनोरमा चास्ति। श्रीदेव्या मूर्तौ सौष्ठवमलङ्करणं च प्रभावोत्पादकमेव। अस्य युगस्य पटनास्थानस्य हास्यप्रवणानां बालकानां मूर्तयो बहुसंख्यका एव।

कुषाणयुगस्य मूर्तयोऽहिच्छत्रायां विद्यन्ते। न ता मूर्तयः कलाप्रमाणेन श्रेष्ठाः।

गुप्तकालस्य मृण्मयमूर्तीनां कला समुन्नता प्रतिभासते। मृण्मयेष्टकासु तत्र मूर्तीनामभिनिवेशो वर्तते। भवनानां निर्माणं ताभिरिष्टकाभिः कृतम्। ईदृशानि मन्दिराणि कानपुरप्रदेशे भीतरग्रामे रायपुरप्रदेशे सिरपुरग्रामे च वर्तन्ते। इष्टकानां परिधिषु संलग्नानां पत्रपुष्पादीनामलङ्करणं मनोरमं विभाव्यते।

## मूर्तीनां लोकोपयोगिता

मूर्तीनां प्रथमोपयोगः सिन्धुसभ्यतायां धार्मिकविधानेषु परिलोक्यते। सर्वोच्चमूर्तिकला तत्र धर्मप्रवणासु मूर्तिषु विकसितेति निश्चितमेव। अपरं च मूर्तीनामुपयोगः प्रदर्शनार्थं मनोरञ्जनार्थं बालकानां क्रीडनार्थं चाभवत्। कलाभिव्यक्तिर्नर्तकीनां सुन्दरीणां च मूर्तिषु सविशेषमभवत्।

वैदिकयुगेऽभिचारार्थं कृत्यादीनां नायकनायिकादीनां च मूर्तयः प्रायुज्यन्त। प्रवासे मृतानामग्निहोत्रिणामग्निहोत्रविधाने मानवाकृतिः रचिता।[1] अग्निवेदिकानिर्माणे प्रजापतेः पुरुषरूपा स्वर्णमूर्तिर्न्यस्ता।[2]

महाभारतानुसारं स्वर्णहस्तिनो दाने प्रदत्ताः।[3] अश्वमेधयज्ञेऽग्निचयनाय गरुडाकृतौ

---

१. ऐतरेयब्राह्मणे ७.२.२।
२. शतपथब्राह्मणे ७.४.१.१५।
३. शान्तिपर्वणि २९.७२।

रचिता ।[1] कात्यायनश्रौतसूत्रानुसारं स्वर्णस्य मूर्तिकाया वा मानवाश्वयूपमेषाजादीनां मूर्तयोऽग्निचयनस्य वेदिकायां न्यस्ता ।[2] आपस्तम्बश्रौतसूत्रानुसारं याज्ञिकप्रक्रियासु यवेन मेषाणां मूर्तय कृता ।[3]

उपर्युक्तमूर्तीनां धार्मिकाभिनिवेशो स्पष्टं भवति यत् प्राचीनयुगे मूर्तिकला मानवानामुच्चतमजीवनादर्शो सम्बद्धा बभूव ।

पौराणिकयुगेऽपि पुण्यार्थं देवानां पशुपक्षिणां च मूर्तयो दाने विश्राणिता । तद्यथा मार्गशीर्षमासस्य तृतीयायां शिवस्य धर्मराजस्य च मूर्तय, फलानां स्वर्णका राजता वा मूर्तयो ब्राह्मणेभ्य पुण्यार्थमर्पिता ।[4] शातातपानुसारं शर्करा तिलघृतादिभि निर्मिता गावो ब्राह्मणेभ्यो निसृष्टा ।[5] मरणकाले राजानो मानवानां स्वर्णमूर्ती प्रददु ।[6]

महाभारतानुसारं मूर्तीनामुपयोगोऽस्त्राभ्यासार्थमपि कृत । धनुर्विद्याया सार्वजनिकप्रदर्शनार्थं वृक्षस्योपरि गृध्रस्य मूर्तिर्यन्त्रा तस्य शिरो लक्ष्यीकृतं तत्र । लौहशूकरा अपि बाणैर्वेधनार्थं समारोपिता । वीराणां धनुर्विद्यापरीक्षणार्थं मत्स्यादीनां मूर्तेर्नेत्र लक्ष्यीकृतम् ।

महाभारतकाले युद्धकाले वीराणां ध्वजेषु विविधपशुपक्षिणां वृक्षाणां वा मूर्तयो न्यस्ता ।[7] धनुष्पीठे सिंहहस्तिसूर्यशलभादीनां प्रतिमा उत्कीर्णा ।[8] ग्रीकविदुषां लेखै प्रमाणित भवति यत् दिव्यवीराणां मूर्तयो युद्धस्थले सेनाया पुरत प्रोत्साहनार्थं समारोपिता । युद्धेषु वीराणां पराक्रमगाथास्ताम्रपत्रेषूत्कीर्णा ।[9]

विवाहयोग्यं वरं वधूं वा प्राप्तुं मूर्तिकलाया उपयोग समृद्धिशालिन कुर्वन्ति स्मेति जातकग्रन्थेषु प्रतिपादितम् । आदर्शवध्वा मूर्तिं रचयित्वा जनास्तस्या प्रदर्शनं देशे विदेशे च कारयन्ति स्म ।[10]

मूर्तिकला राष्ट्रस्य चारित्रिक-विकासाय महाराजेनाशोकेनोपयुक्ता । स स्तम्भानां

---

१. आश्वमेधिकपर्वणि ८८.१२ ।
२. का १६ ' १२ ।
३. आ ८.५ १७ ।
४. मत्स्यपुराणे ९६ अध्याय ।
५. शातातपस्मृतौ २ १८ २९ ।
६. तत्रैव १ ३३ ।
७. द्रोणपर्वणि १०५ अध्याये, भीष्मपर्वणि ४० ५०,४७ ८,५४ ९८ ।
८. विराटपर्वणि ४२.२ ८
९. Mc Crindle Ancient India P 112
१०. उदयजातके ४५८, कुशजातके ५३१

शिरोभागे सिंहाना प्रतिष्ठा कारयित्वा तेषामुपरि धर्मचक्रस्य विन्यासेन धर्मस्य सर्वोच्चता प्रमाणितवान् । परवर्तियुगस्य बहुभी राजभिरशोकस्यादर्श स्वीकृत ।

राजप्रासादाना स्तम्भेषु स्त्रीणा मूर्तयोऽलङ्करणार्थं निधापिता । तासा स्त्रीणा कृते स्तनोत्तरीयस्य परिधानं कृतम् ।[1] राजानः पूर्वजाना मूर्ती तेषा मन्दिरेषु प्रतिष्ठापितवन्त.।[2] राजप्रासादेषु मूर्तिगृहं तस्मै प्रयोजनाय बभूव ।

बाणानुसार राजकीयजलाशयेषु स्वर्णेन निर्मिता कमलिनीमयूरहस्तिमूर्तय. समारोपिता । कृत्रिमवृक्षा निर्मिता । राजकुमारीणा विवाहकाले माङ्गलिकालङ्करणार्थं कच्छप-मकर-नारिकेल-कदली-तमालादीना मूर्तयो रचिता ।[3] कृत्रिमकमलिनीमध्ये यन्त्रचक्रवाकमिथुनानि सञ्चरन्ति स्म ।[4]

प्राय सदैव मूर्तिद्वारा देवाना वीराणा महर्षीणा च चरितगाथा समाजस्य समक्ष प्रस्तुता: । तद्यथा मन्दिराणा विशालशिलासु रामायणमहाभारतपुराणेतिहासादीना कथा उत्कीर्णा । इमा उत्कीर्णा कथा प्रत्यक्षदर्शनेन सविशेष प्रभावोत्पादिका बभूवु । नृत्यकलादीना शिक्षणस्यायोजन चिदम्बरमन्दिरभित्तिमूर्तिभि कृतमिति प्रागेव निगदितम् ।

मुद्रानिर्माणार्थं मूर्तिकलाया प्रचलन सिन्धुसभ्यतायुगात् प्रभृति बभूव ।

कतिपयमूर्तयो लोकरञ्जनार्थमाकाशे निराधार लम्बिता । तथा हि राजतरङ्गिण्याम्—

एकमूर्ध्वं नयद्रत्नमधः कर्षत् तथापरम् ।
बुद्ध्वा व्यधान्निरालम्ब स्त्रीराज्ये नृहरिं च स ॥ ४ १८५

## मूर्तिकलाया विदेशेषु प्रसार

भारतीयधर्मै सह मूर्तिकलाया प्रसारो विदेशेषु बभूव । तिब्बत-चीन-जापान-इण्डोनेशिया-पूर्वीद्वीपसमूह-कम्बोडिया-ब्रह्मा-लङ्कादिषु देशेषु प्रायशो वैदिकधर्मस्य बौद्धधर्मस्य चानुयायिन प्राचीनयुगे भारते निर्मिता मूर्ती प्रतिष्ठापयामासु, अथवा भारतीयमूर्तिशैलीमनुसृत्य स्वदेशे मूर्तिकेन्द्राणि सचालितवन्त । खीष्टस्य प्रथमशतके निर्मिताया लक्ष्म्या हस्तिदन्तमूर्ति पाम्पियाईनगरे प्राप्तेति सुदूरप्राचीनयुगे भारतीयमूर्तीना विदेशेषु प्रेषण प्रमाणयति । गौतमबुद्धस्यैका खीष्टस्य पञ्चशतके निर्मिता कास्यमूर्ति योरोपमहाद्वीपस्य स्टाकहोल्मनगरस्थ समीपे कस्मिश्चिद्द्वीपे सम्प्राप्ता ।[5] विदेशयात्रिणो भारतीयमूर्तीना सग्रहमपि कर्तव्यममन्यन्त । ते स्वदेशगमनकाले भारतीमूर्तीर्नयन्ति स्म ।

---

१ रघुवंशे १६.१७
२. H.C Ray Chaudhary · Political History of India p 517
३. कादम्बरी पृ० २१६,१८४
४. तत्रैव पृ० १८४
५. एतस्या मूर्ति स्वीडनदेशस्य पुरातत्त्व-सस्थाना विदुषा विल्हेमहोल्मक्विस्टमहोदयेन कृता ॥

## वास्तुकला

आत्मरक्षार्थं गृहनिर्माणं मानवसंस्कृतेः प्रारम्भात् समभवत् इति सुनिश्चितम्। यथा—पशुपक्षिणोऽपि स्वाभाविकप्रवृत्त्यैव मनोरमं गृहं रचयन्ति। मानव सुदूरप्राचीनकालेऽपि मनोरमं गृहं प्राकृतिकैरुपादानैः सहजविधिना रचितवान्। स्वभावतो मानवाना गृहा देशकालोपादानादीनां वैविध्यात् विविधप्रकारा बभूवुः। कतिपयपर्वतप्रदेशवासिनः सिंहानुसरणं कृत्वा गुहामेव गृहशैलीं शोभनामामन्यन्त। वनवासिनस्तु सरलतया काष्ठपर्णादीनां संयोजनेन पर्णकुटीं कृतवन्तः। समतलप्रदेशे मृत्तिकागृहाणां निर्माणं सरलमेवाभवत्। ईदृशानां बहुविधगृहाणां निर्माणशैली शनैः शनैः कलापूर्णाऽभवत्। तदधुनापि वनवासिना पर्वतगृहासु प्रस्तरयुगस्य चित्राणि प्राप्यन्ते। काष्ठगृहा, मृत्तिकागृहाश्च कालक्रममक्षममाणानि प्राचीनयुगे एव ध्वस्तानि।

## सिन्धुसभ्यताया वास्तूनि

पञ्चसहस्रवर्षाणि प्राङ्मानवाना गृहाणां सुव्यवस्थितविन्यास. सिन्धुप्रदेशेऽभवदिति तत्रत्यनगरावशेषैः स्पष्टमेव। अस्य नगरस्य निर्माणं पूर्वाकल्पितमविदनुसारं कृतम्। विस्तृतराजमार्गाणां सख्या, तेषां दिश, प्रत्येकायतभागे भवनाना सख्या, तेषां परिधीनां क्षेत्रफलानि—इत्यादीनि नगरस्य स्वास्थ्यरक्षणार्थं कृतानि। नदीजलौघादेषां नगराणां रक्षणार्थं मृत्तिकाभिरिष्टकाभिश्च सेतुबन्धनं कृतम्। नगरयो. पश्चिमपूर्वभागयो दुर्गरचना कृता। नगरस्यादर्शविधान परवर्तियुगस्य मौर्यकाले विरचितस्यार्थशास्त्रस्य दुर्गविधाने प्रतिफलितमेव। तत्र परिखा-प्राकार-वप्रद्वाराट्टालक महापथ-प्रासादकोष्ठागार-सभा-चत्वर-वीथी-जलाशयादयोऽर्थशास्त्रादर्श निष्पादयन्ति।

सिन्धुसभ्यतायुगे नगराणां सुरक्षार्थं सुदृढप्राकारा विरचिता। हड़प्पा-नगरे प्राकारस्य विस्तार पादभागे २६ हस्तमुपरिभागे २३ हस्त वर्तते। प्राकारस्यायाम ८०० हस्त वर्तते।

सिन्धुसभ्यताया गृहेषु प्राङ्गणानि बभूवु। प्राङ्गण परित प्रकोष्ठा स्थिता। गृहाणां नगरस्य चानेकविधजलस्य बहि प्रवाहणार्थं प्रणाला प्रणालिकाश्च कृता. उपसरक सकरनिचया स्थापिता। प्रत्येकगृहे कूप, शौचालय, स्नानागार, हस्तपादप्रक्षालनकक्ष, भाण्डारम्, पूजास्थान च बभूवु।

सिन्धुसभ्यताया गृहा प्राया द्विभूमा बभूवु। सोपानैरुपरिभूमगमन सम्भवमासीत्। गृहाणां भित्तय ११"×५½"×२½" परिमाणानामिष्टकाभि पक्वाभि निर्मिता। न खलु एशियामहाद्वीपे कुत्रापि परिपक्वेष्टकानां प्रयोगोऽभवत्तदा।

कतिपयविशिष्टगृहरचना अपि वर्तते । तद्यथा—वर्णाकारस्य कस्यचित्कदास्य ५२ हस्तायामस्यावलम्बनमायताकारविंशतिस्तम्भैः कृतम् ।

## वैदिकगृहा

सिन्धु-सभ्यताया वास्तुकलाया परम्परा प्रत्यक्षतोऽज्ञातैव वर्तते । साहित्यिकप्रमाणैर्वैदिकयुगे शतद्वारगृहस्य, त्रिभूमगृहस्य, सहस्रस्तम्भसभामण्डपस्य, लौहप्रस्तरादीना प्रासादस्य च प्रकल्पना प्रसिद्धा । इमानि वास्तूनि प्रायशः समृद्धिशालिना राज्ञा वा बभूवु । साधारणजनाना गृहा काष्ठस्तम्भैः पर्णाच्छादनैश्च निर्मिता । गृहभित्तय क्वचित् मृत्तिकया रचिता ।[1]

वैदिकगृहा साधारणत सुविस्तृता सुखदाश्च बभूवु । तद्यथा गृहेषु बहव कक्षा —अग्निशाला हविर्धानि पत्नीना सदन सद आवसथ च बभूवु । पशूना कृते भवनानि निर्मितानि ।

रामायणमहाभारतपुराणेतिहासादिभिर्बौद्धजैनसाहित्यैश्च प्राचीनयुगे गृहनिर्माणकलाया प्रगति प्रमाण्यते । तद्यथा रामायणानुसारमयोध्या लङ्का वा सर्वोच्चवास्तुभि समलङ्कृता बभूव । महाभारतानुसार मय पुररचित सभाभवन वास्तुकलाया परा काष्ठा द्योतयति । तस्मिन् युगे देव-मानुषासुर-शिल्पो वर्तन्ते स्म ।

मौर्ययुगीनवास्तुकलाया परिचय. मेगस्थनीजादीना ग्रीकलेखकाना प्रत्यक्षवर्णनैर्भवति । तदनुसार मौर्याणा राजधानी पाटलिपुत्रमायामे योजनपर्यन्ता बभूव । मौर्ययुगस्याशोकस्य भवन वास्तुकलाया सर्वोच्चादर्शरूपेण गणितम् । भवनमिद गुप्तयुगपर्यन्तमवश्यमेव विराजमानमासीत् । फाह्यानस्तस्य दर्शन कृत्वालिखत्—नेद भवन मानवरचितम्, अपितु देवै कृत प्रतिभाति । अस्य भवनस्यावशेषा आधुनिकयुगे खनिता । तानधिकृत्य डा० स्पूनरो लिखति—सर्वथा सुरक्षितमिद दृश्यते । अस्मिन् भवने प्रयुक्ता काष्ठस्तम्भा अधुनापि तथा श्लक्ष्णा पूर्णाश्च सन्ति यथा तेऽशोकयुगे बभूवु । अस्मिन्युगेऽपि वयमस्माद्भवनात् सुष्ठुतरस्य वास्तोर्निर्माण कर्तुमसमर्था । तदिद स्वयुगस्यादर्श एव ।

प्राचीनयुगस्य नागरिकाणा भवनाना वर्णन बहुषु काव्येषु प्राप्यते । मानसारादिषु वास्तुशास्त्रग्रन्थेषु गृहरचना विज्ञानस्य प्रमाण विद्यते । अनेन प्रमाणेन वास्तुकलाप्रगति

1. The chief importance of the Vedic period lies in the development of architecture as a science and the invention of types that survive in later Hindu and Buddhist architecture Rowland Art and Architecture p 24

परिचीयते । तथा हि—प्रथमं ग्रामयोग्या भूमिः चयनीया । यस्यां भूमौ कूपजलं धरातलात् नातिदूरं वर्तते, यत्र छायाप्रदाः पुष्पफलादिसम्पन्ना वृक्षाः सुवर्धिता भवितुमर्हन्ति, या भूमिः प्रत्यक्षतो मनोहारिणी वर्तते सा ग्रामावस्थानयोग्या मता । तस्यां भूमौ कर्षणं कृत्वा दिशाबिन्दूनां निर्धारणं कृतम् । तत्र प्रधानराजमार्गौ अङ्कितौ । राजमार्गौ ग्रामे वायोः सञ्चरणाय समीकृतौ । ग्रामस्य प्रदक्षिणार्थं मङ्गलवीथी कृता । विस्तारे प्रधानराजमार्गौ पञ्चत्रिंशद्धस्तपर्यन्तौ निर्मितौ । ग्रामाणां च रचना चत्वारिंशद्विधा प्रकल्पिता । तद्यथा-दण्डकवर्गस्य ग्रामः सन्धानदण्डानुरूपोऽभवत् । तत्र पञ्चपर्यन्ता समानान्तरराजमार्गाः पूर्वतः पश्चिमे रचिताः, उत्तरतो दक्षिणे लघुविस्तारवन्तस्त्रयः मार्गाः निर्मिताः । उत्तरार्धभागे, दक्षिणपश्चिमभागे च द्वौ जलाशयौ खनितौ । पद्माकरवर्गस्य ग्रामः कमलवत् सन्निवेशितः । स्वस्तिकवर्गस्य ग्रामः स्वस्तिकवत् प्रसारितो बभूव । पाठशाला धर्मस्थानानि च ग्रामाणां कोणमार्गेषु स्थापिता ।

बहूनां ग्रामाणां समाहारेण नगररचना प्रकल्पिता । नगरे पण्यवीथिका मन्दिराणि, पथिकगृहाः, पाठशालाश्च यथास्थानं विहितानि । मानसारे नवविधा नाट्यगृहा मञ्चाश्च वर्णिताः ।

वास्तुकलाया सर्वोच्चविकासः पुरा मानववसतिषु नाधिकमभवत्, अपि तु पितॄणां देवानां च कृते रचितेषु मन्दिरेषु गुहासु वा स्तूप-चैत्य-विहारादिषु बभूवेति निःसन्दिग्धमेव ।

## स्तूप.

पूर्वजानां स्मारकरूपेण स्तूपस्य रचना वैदिकयुगे बभूव ।[1] बौद्धधर्मानुसारं स्तूपाः कस्यचिन्महात्मनो निर्वाणस्य सम्यग्ज्ञानस्य वा स्मारकाः सन्ति । स्तूपदर्शनेन बुद्धपथानुगमनाय प्रवृत्तिर्जायते । साधारणतः स्तूपाः गौतमबुद्धस्य वास्तविकं कृत्रिमं वा अस्थ्यादिशेषं भूमौ सन्निधायाधातस्योपरि निर्मिताः बुद्धस्य महत्त्वपूर्णजीवनवृत्तस्थाने रचिताश्च दृश्यन्ते । परवर्तियुगीनानां बौद्धमतानुयायिनां स्मारकरूपेणापि स्तूपाः रचिताः । प्राचीनतमः स्तूपः बस्तीजनपदे कपिलवस्तोः समीपे पिपरावाग्रामे ख्रीष्टात् ५४० वर्षं प्रागेव निर्मितोऽद्युनापि वर्तते । एतस्य स्तूपस्य गर्भे प्रस्तरपेटिकायां रक्षितानि मूर्ति-रत्नपुष्प-रत्नपत्र-स्वर्णपत्र-स्वर्णनक्षत्र-त्रिरत्नादीनि स्वर्णपत्रेषु स्वस्तिक-हस्तिसिंह-मातृदेवीमूर्तयश्च शिल्पादर्शं निष्पादयन्ति ।

अशोकेन ८४०० स्तूपाः निर्मिता इति कथा श्रूयते । अशोकेन निर्मितस्य साँचीस्तूपस्य तोरणवेदिकादीनां रचना ख्रीष्टात् प्राक् प्रथमशतके बभूव । स्तूपस्य व्यासः ८१

१. शतपथब्राह्मणे १३. ८. १. ५ तथा १३. ८. २. १२

हस्तपर्यन्त आरोह ५१ हस्तपर्यन्तश्च वर्तते। चवसृषु दिक्षु महाद्वारस्यालङ्करणं मनोहारि प्रतिभाति। द्वाराणा परस्परसम्बन्धन प्रस्तरवेदिकाभि कृतम्। वेदिकात स्तूपस्य मूलपर्यन्त प्रदक्षिणपथो वर्तते। स्तूपस्य किंचिदुपरि अपर प्रदक्षिणपथो वर्तते। सोपानमार्गेणाधस्तात् अपरप्रदक्षिणपथो गन्तव्यो भवति। स्तूपस्याण्डस्य शिखरभागे आयताकारा हर्मिका भवति। तोरणेषु वेदिकासु च प्राय सर्वत्र पशु-पक्षि देव यक्ष गन्धर्व-मानवादीना मूर्तयस्तदा बुद्धपूजा द्योतयन्ति।

सांचीस्थितस्य तृतीये स्तूपे महामोग्गलानस्य सारिपुत्रस्य च भस्मावशेषचयपात्राणा पिधानानामवरतले मस्या म तथा सा ब्राह्मीलिपी लिखिते। इम लिपि ई० पू० पञ्चम शतके विरचिता सती जगति प्राचीनतमेति सम्भाव्यते।

ख्रीष्टतः प्राक् द्वितीयशतके भरहुतनगरे शुगाना शासनकाले स्तूपरचना कृता। अधुना तस्य स्तूपस्य कतिपयवेदिका एक महाद्वार च कलकत्तानगरस्य पुरातत्त्वसंग्रहालये वर्तन्ते। तत्रापि जातककथाना तक्षण प्रभावोत्पादकविधिना कृतम्।

गन्तूरजनपदेऽमरावत्या ख्रीष्ट प्राक् द्वितीयशताब्दे प्राक् स्तूपस्य रचना कृता। तस्य स्तूपस्य वेदिकादीना रचना ख्रीष्ट पश्चात् तृतीयशताब्दे आन्ध्रराजै कृता। अस्मिन् युगेऽन्ये स्तूपा जगय्यपेटे नागार्जुनिकोण्डे च रचिता।

ख्रीष्टस्य पश्चात सप्तमशताब्दे सारनाथस्य स्तूपो रचित।

## चैत्यः

चैत्या बौद्धमतानुयायिना पूजास्थान बभूवु।[१] चैत्या प्राय पर्वताना कृत्रिमगुहासु स्तूपमनु निर्मिता। चैत्यानामाभ्यन्तरभाग आयताकारो भवति। तत्र मध्यभागोऽधिकायामवम्पनो भवति। मध्यभागस्य पार्श्वभागौ स्तम्भयुक्तौ भवत। स्तम्भानामन्तर्भागात स्तूपस्य प्रदक्षिणपथ प्रारभ्यते।

बहुशश्चैत्या नासिक-भाजा-बेडसा-पीतलखोरा कोण्डाणा-कार्लेप्रदेशे प्राप्य ते। कार्लेचैत्योऽनुत्तम तत्र। अस्य रचना ख्रीष्टस्य पश्चात प्रथमे शतके कृता। तत्र गुहाया विस्तार ८२ × ३० × ३० हस्तपरमन्तो वर्तते। मध्यभागमभित पंचदश स्तम्भा वर्तन्ते। स्तम्भाना शिरोभागे जानुना निधाय हस्तिनो निर्मिता। हस्तिनामुपरि द्वौ स्त्रीपुरुषौ वर्तेते। अजन्तागुहासु चत्वारश्चैत्या निर्मिता सन्ति।

---

१ वेदिकमहर्ष्यनुसारं ॥
एकवृक्षा हि या ग्रामे भवेत् पर्णसमन्विता ।
चैत्या भवति निर्वाहिर न्याय सुपूजित ॥ महाभारते आदि० १३८ २५।

## विहारः

विहारार्थं पर्वतस्य समीपे बौद्धभिक्षूणामावासाय निर्मिताः। प्राचीनतमो विहारः ख्रीष्टाब्दात् प्राक् नानागुहासु विराजते। तत्र विहारस्य मध्ये समतलभूमिर्वर्तते। अलिन्दस्य पश्चिमदिग्भागे अष्ट कक्षाः सन्ति। कक्षाणां विभागः स्तम्भैः कृतः। स्तम्भानां शिरोभागः कमलपुष्पवद् दृष्टः। अलिन्दस्य पश्चभागे समानान्तर इति स्थाने महाकक्षो वर्तते।

उत्कलप्रदेशे जैनानां बौद्धानां च बहवो विहाराः सन्ति। तत्र खण्डगिरौ अनन्तगुम्फा, उदयगिरौ रानीगुम्फा, गणेशगुम्फा, जयविजयविहारः सुप्रसिद्धाः। उदयगिरौ हाथीगुम्फायां महाराजखारवेलस्य ख्रीष्टात् प्राक् द्वितीयशताब्दस्य शिलालेखो वर्तते। तत्र कतिपयगुहा द्विभूमा सन्ति।

अजन्तायाः गुहासु षोडश-सप्तदश-गुहे विहारस्य सर्वोत्कृष्टे स्तः। तत्र स्तम्भानां रचना मनोरमविधिना कृता। तत्र विहारेषु चित्रकल्पना नाटकेऽनुरूपैव वर्तते।

गुहा-विहाराणां रचना अतीव सौन्दर्यपूर्णा प्रतिभाति। गुहासु विविधानां प्राकृतिक-कृत्रिमवस्तूनां दृश्यं प्रकाशव्यवस्था वायुविधानं च यथास्थानं सन्निविष्टम्। तत्र न किंचिदपि बाधको बोधितम्। तथापि सर्वत्र सर्वाङ्गपूर्णता आनुरूप्यं सनुरूपता च प्रतिभासन्ते।

गुहाविहारेभ्य उत्तरे युगे इष्टकविहाराणां प्रचलनं गौतमबुद्धस्य जीवनकालादभवत्। ह्वेनसांगानुसारं सप्तमशताब्दे भारते ५००० विहारा बभूवुः। तेषु नालन्दाविहारः सर्वश्रेष्ठोऽभवत्। नालन्दाविहारस्य विस्तारः १०५० × ५३५ हस्तपरिमितक्षेत्रेऽभवत्। अस्मिन् विहारे पुस्तकालयो नवभूमिकोऽभवत्। कस्यचिद्विहारस्य भित्तिः १३५ × ४ वर्गहस्ता वर्तते। शिलानां निर्माणमिष्टकाभिः कृतम्। इष्टकानां संयोजनं सूक्ष्मविधिना कृतमासीत्। क्वचित् द्वयोरिष्टकयोः मध्यान्तरमणुरूपमेव वर्तते।

## मन्दिरम्

सिन्धु-सभ्यता-युगे हड़प्पादिनगरेषु बहूनि मन्दिराणि बभूवुः। तत प्रभृति भारतस्य विविधभागेषु प्रायः सर्वत्र मन्दिराणां रचना कृता, किन्तु तेषां मन्दिराणां ध्वंसावशेषा अपि नाधुना प्राप्यन्ते। साहित्यिकप्रमाणैः स्पष्टं प्रतिभाति यत् रामायण-महाभारतयुगे मन्दिराणां निर्माणस्य प्रचलनमासीत्। मन्दिरस्य प्रथमावशेषः चित्तौड़गढस्य समीपे प्राप्यते। तस्य मन्दिरस्य निर्माणं ख्रीष्टात् प्राक् चतुर्थे शताब्देऽभवत्। अस्मिन् मन्दिरे सङ्कर्षण-वासुदेवयोः प्रतिष्ठा कृता आसीत्। बरेलीनगरस्य समीपे रामनगरे शिवमन्दिरस्यावशेषः प्राप्तः। तस्य रचना ख्रीष्टाब्दस्य प्रारम्भिकयुगेऽभवत्। ख्रीष्टस्य पश्चात् द्वितीयशताब्दे भारशिववंशीयानां राज्ञां नागरशैलीमधिकृत्य रचितानां मन्दिराणामवशेषाः प्राप्यन्ते। अस्मात् कालादारभ्य मन्दिरद्वारेषु गङ्गायमुनयोस्तक्षणं प्रारभ्यत।

# विज्ञानम्

विज्ञानस्य शिल्पकलादीनां च साहाय्येन मनुष्य संसारस्य महत्तममुपयोगमुपभोगञ्च कर्त्तुं समर्थो भवति। मानवसंस्कृतेरादिकालादेव नियमेतेषां प्रगत्या सह मानवस्य भोगविलासादीनां परिधिः सुविस्तृतोऽभूत्।

उपभोगपरिधौ वस्तूनां भोज्यत्वमभोज्यत्वं वा ज्ञातुमेव प्रथममायुर्वेदविज्ञानस्य समारम्भः सम्भावनीयः। उपयोगिवस्तूनां वैपुल्यं विधातुमेव कृषिविज्ञानस्य विकासः कृतः। गृहरचनाप्रमापनकर्मादिकमधिकृत्य साधारणतो गणितस्य सविशेषं ज्यामितेः प्रयोगः समुद्भावितः। प्राकृतिकसृष्टिषु प्रायः यथाप्रमाणतावयवसङ्गतिर्वा वर्तते। मानवकृतिषु सरलतया तस्या नियोजनं कर्त्तुमपि गणितस्यापेक्षासीत्। आयुर्वेदस्य कृषिविज्ञानस्य च सम्यक् प्रगतये वनस्पतिशास्त्रस्य, भौतिकविज्ञानस्य, रसायनशास्त्रस्य भूतत्त्वविद्यायाश्च विकासोऽपेक्षित एव। पुरा दिनस्य, मासस्य, ऋतो, ग्रहनक्षत्रादीनां च प्रवृत्तिं ज्ञातुमेव ज्योतिषस्याध्ययनं प्रारभ्यत।

## गणितम्

गणितविज्ञानस्य प्राचीनतमा प्रगतिः सिन्धुसभ्यतायाः अवशेषे प्रथमं परिचीयते। तस्या सभ्यतायां वास्तुनिर्माणे, राजमार्गाणां विन्यासे, वाणिज्यप्रवर्तनाय मानोन्मानादीनामुपकल्पने च गणितविज्ञानस्य प्रयोगोऽभवत्। अपरं च तत्र चित्रकलानिवेशने ज्यामितिकर्म प्रायुज्यत।

वैदिकयुगे यज्ञार्थं वेदिकानां रचनायां ज्यामितेः प्रयोगोऽक्रियत। ख्रीष्टतः प्रागष्टमे शताब्दे बौधायनः शुल्वसूत्रेत्रिभुजायतवर्गादीनां रेखागणितस्य सिद्धान्तान् व्याख्यायत। शुल्वसूत्रानुसारं पक्षि-कच्छप-रथचक्र-वृत्त-समद्विबाहु-त्रिभुजादीनां सदृशाकारा वेदिका निर्मिता। तस्मिन् युगेऽनेकवर्गसमानस्यैकवर्गस्य, द्वयोर्वर्गयोरन्तरसमानस्यैकवर्गस्य, चतुर्भुजसमानस्य वर्गस्य त्रिभुजसमानस्य वर्गस्य च निर्मितौ रेखागणितेन कृता।

गुप्तयुगे दशमिकमंकैर्नविधिना सख्यानां व्यञ्जनमाविष्कृतम्। सेयं पद्धतिर्जगति सर्वत्र प्रचरति। अस्यां पद्धतौ शून्यस्य प्रयोगेण दशगुणत्वम्, एकतो नवपर्यन्तमङ्कानां स्थानमूल्यं च निर्दिशितं। गणितप्रक्रियासु दशमिकसङ्केतविधेर्लाघवं सुविदितचरमेव। कदाचिदिदं विना गणितविज्ञानस्यैषा प्रगतिः न सम्भविष्यत्। प्रथममरबदेशवासिनः खीष्टतः पश्चात् नवमे शतके दशमिकसङ्केतविधिं भारतेभ्यो ज्ञातवन्तः। द्वादशशतकेऽस्य प्रचारो योरपमहाद्वीपे बभूव। आर्यभटः प्रथममस्योल्लेखं करोति—

एक दश च शत च सहस्रमयुते तथा प्रयुतम् ।
कोट्यर्बुदं च वृन्द स्थानात्स्थान दशगुण स्यात् ॥

आर्यभटस्य प्रादुर्भावः ४९९-ख्रीष्टाब्दे परिलक्षितः । अतएव दशमिकसङ्केतविधेरा-विर्भावः ख्रीष्टस्य पश्चात् तृतीये चतुर्थे वा शतके बभूव । आर्यभटेन सङ्ख्यानां वर्गमूल-घनमूलादिज्ञानाय दशमिकसङ्केतविधिः प्रयुक्तः ।

गुप्तयुगस्य गणितविद्यायाः प्रगतिर्यवनदेशे केनचित् कृषकेन भूमिखननक्रियायां प्राप्तेन हस्तलिखितग्रन्थप्रमाणेन परिशोध्यते । अस्मिन् ग्रन्थे भागहारान्तरे मिश्रस्य, वर्ग-मूलस्य, समान्तरश्रेढ्याः, गुणोत्तरश्रेढ्यादेश्च विवरणं विद्यते तथा उत्तरान्तरे मिश्रश्रेढीनां योगस्य, युगपदेकघातसमीकरणस्य च व्याख्या वर्तते ।

आर्यभट ४९९ ख्रीष्टाब्दे पाटलिपुत्रे 'आर्यभटीयम्' लिखितवान् । अस्मिन् ग्रन्थे ज्यामितिप्रकरणे बहुविधवृत्तविशेषाः, 'π' मिति (३.१४१६) प्रतिस्थापनयामिति च व्याख्याताः । त्रिकोणमितिरपि तदानुम्भाविता आसीत् । बीजगणिते चतुरस्रसमीकरणस्य विधिः आर्यभटीयस्य गणितपादे प्रवर्तते ।

अङ्कगणिते बीजगणिते च भारते बहुविधा अभिनवप्रवृत्तयः समुद्भाविताः । तासु बहवः यौरपीयदेशेषु प्राचीनकाले एव स्वीकृताः, किन्तु कतिपयाः प्रवृत्तयः तेषु देशेषु स्वतन्त्ररूपेण प्रायः सहस्रवर्षं पश्चादाविष्कृता इति यौरपीयविदुषां वचनेनावगन्तव्यम्—

There is no question of the superiority of the Hindus over their rivals in the perfection to which they brought science Not only is Aryabhata superior to Diaphantus ( as is shown by his knowledge of the resolution of equations involving several unknown quantities and in a general method of resolving all indeterminate problems of at least the first degree ) but he and his successors press hard upon the discoveries of algebraist who lived almost in our own time

Elphinstone History of India p 131

In the Suryasiddhanta is contained a system of Trigonometry which not only goes far beyond any thing known to the Greeks, but involves theorems, which were not discovered in Europe till two centuries ago.

Elphinstone History of India p. 123

Suryasiddhanta contains a rational system of Trigonometry, which differs entirely from the first known in Greece or Arabia,

In fact, it is founded on a geometrical theorem which was not known to the geometricians of Europe before the time of Vieta, about 200 years ago. And it employes the sines of arcs, a thing unknown to the Greeks, who used the chords of double arcs The invention of sines has been attributed to the Arabs but it is possible that they may have received this improvement in Trigonometry as well as the numerical characters from India

Prof Wallace Edinburgh Encyclopaedia—Geometry p 191.

क्रीष्टस्य पश्चात् सप्तमे शतके ब्रह्मगुप्तोऽङ्कगणित-बीजगणित-रेखागणितादीना विषयाणां सूक्ष्मतरविवेचन ब्राह्मस्फुटसिद्धान्ते, खण्डखाद्यके च कृतवान्। ब्राह्मस्फुटस्य गणिताध्याये विविधविषयाणाम्—योग-वियोग-गुणन-भाग-वर्ग-वर्गमूल घन-घनमूल-भिन्नप्रयोग-त्रैराशिक-श्रेढीव्यवहार-क्षेत्रव्यवहार-चितिव्यवहार-क्राकचिकव्यवहार-राशिव्यवहार-छायाव्यवहारादीना विवेचनं वर्तते।

नवमे शतके महावीराचार्यो गणितसारसंग्रहं रचितवान्। तत्र गणितस्य व्यावहारिकोपयोगिता प्राय सर्वेषु कार्यक्षेत्रेषु—पाकक्रियाया न्यायपद्धतौ वा निदर्शिता। अत्र ज्यामितिश्रेढीव्यवहार सुस्पष्ट प्रवर्तते। एकादशे शतके श्रीपतिग्रन्थे चतुरस्रसमीकरणस्य विवेचन प्रस्तुतवान्।

द्वादशशतके भास्कराचार्यो गणितशास्त्रस्य महत्त्वपूर्णग्रन्थ सिद्धान्तशिरोमणि रचितवान्। अस्य ग्रन्थस्यारम्भिकभागयोर्द्वयोर्नामनी लीलावती, बीजगणितं च स्त। अनयोर्भागयोर्गणितप्रकरण सविशेष वर्तते। लीलावत्या विविधप्रकाराणामङ्कगणितसम्बन्धिप्रश्नाना सूक्ष्मसमाधान क्षेत्रफलघनफलादीना शुद्धविवेचन च सरलतमविधिना कृतम्। दशमलवविधे प्रयोग सरलसमाधानाय विहित।

बीजगणितस्य प्रयोगेण भास्कराचार्य पुरःसरः प्रतिभाति। एल्फिन्स्टनमहोदयो भास्कराचार्यस्य तादृश वैशिष्ट्य समर्थयन्नाह—'In the Edinburgh Review ( Vol XXI p 372 ) is a striking history of a problem ( to find x so that $ax^2 + b$ shall be a square number ). The first step towards a solution is made by Diaphantus It was extended by Fermat, and sent as a defiance to the English Algebraists in the seventeenth century, but was only carried to its full extent by the celebrated *mathematician Euler, who arrives exactly at the* point before attained by Bhaskaracarya

History of India p 131

'A particular solution given by Bhaskaracarya is exactly the same as that hit on by Lord Brounker in 1957, and that the general solution of the same problem was unsuccessfully attempted by Euler and was only accomplished by De La Grange in 1767 A. D, *although it had been as completely given* by Brahmagupta

Colelerook's Hindu Algebra quoted in the Edinburgh Review Vol XIX p. 153.

भास्कराचार्यस्य पुरःसरत्वं प्रतिपादयन् स्पॉटिस्वुडमहोदयो लिखति—Bhaskaracarya is said to have discovered a mathematical process very nearly resembling the differential calculus of Modern European mathematicians

J. R. A S Vol XVII

भास्कराचार्यस्येदृशीं प्रतिभां समर्थयन् डा० प्रफुल्लचन्द्ररायमहोदय लिखति—समयसम्बन्धिज्योतिषत्रुटि तत्कालिक क्षणमिति भास्कराचार्यस्य निरूपणं तस्य 'डिफरेंशियल कैलकुलस' रीतेः प्रयोगमेव व्यञ्जयति ।[1]

## ज्योतिषम्

वैदिकयुगे प्रारम्भत एव वर्षस्य, वर्षे द्वादशचान्द्रमासस्य प्रतित्रिवर्षमधिकमासस्य प्रकल्पनमासीत् ।[2] तत्र द्विमासात्मकानामृतूनां परिगणनं बभूव । तथा हि मधुश्च माधवश्च वासन्तिकौ ऋतू, शुक्रश्च शुचिश्च ग्रैष्मौ ऋतू, नभश्च नभस्यश्च वार्षिकौ ऋतू, इषश्चोर्जश्च शारदौ ऋतू, सहश्च सहस्यश्च हैमन्तिकौ ऋतू, तपश्च तपस्यश्च शैशिरौ ऋतू ।[3]

सूर्यस्योत्तरायणा दक्षिणायना च गतिः समाम्नातासीत् ।[4] सप्तविंशतिनक्षत्राणां विवेचनं वैदिक-सूक्तेषु दृश्यते ।[5] शतपथब्राह्मणानुसारम्—अहोरात्रयोः त्रिंशत् मुहूर्ता भवन्ति । तत्र

---

1 Ray History of Hindu Chemistry Vol II pp 152 160

२ ऋग्वेद १ १६४ तथा तैत्तिरीयसंहितायां १ ४ १४

३ तैत्तिरीयसंहितायां ४ ४ ११ । द्वादशमासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन । ऐतरेयब्राह्मणे १ १ इति काण्वमीमांसा भाष्यकृता सायणेन व्याख्यातम् ।

४ शतपथब्राह्मण २ १ ३

५ ऋग्वेदे ७ ७८, अथर्ववेदे १९ ७

१ मुहूर्त = १५ क्षिप्राणि
१ क्षिप्रम् = १५ एतर्हीणि
१ एतर्हि = १५ इदानीनि
१ इदानीम् = १५ प्राणा

तस्मिन् युगे कालस्यातिसूक्ष्मगणना विभाव्यते स्म ।

'सूर्यो नोदयति नास्तमेति च' इति विज्ञानं वैदिकयुगे सुप्रमाणितमभवत् ।[1]

वैदिकयुगस्य पश्चात् वेदाङ्गज्योतिषस्य सङ्कलनं कृतम् । तत्र ऋग्वेदज्योतिषम्, यजुर्वेदज्योतिषम्, अथर्ववेदज्योतिष च वर्तन्ते । लगधमहर्षिणा सगृहीते ऋग्वेदज्योतिषे ३६ कारिका, यजुर्वेदज्योतिषे ४९ कारिका, अथर्ववेदज्योतिषे १६२ कारिकाश्च सन्ति । अथर्ववेदज्योतिषात् फलितज्योतिषस्य परम्परा प्रारभ्यते । ऋग्वेदज्योतिषे यथार्थमुपयुक्तकालज्ञानाय नक्षत्र पर्यायनादीना विधान प्रवर्तितम् । तत्र गणितज्योतिषस्याभाव एव वर्तते । यजुर्वेदज्योतिष प्राय ऋग्वेदसममेव प्रवर्तते । अथर्ववेदज्योतिषे तिथि नक्षत्र-करण-योग-तारा-चन्द्रादीना बलाबलस्य विवेचन सम्यक् कृतम् ।

वैदिकज्योतिषमनुसृत्य परवर्तियुगे पञ्चसिद्धान्तानाम्—पितामहवसिष्ठरोमकपौलिशसूर्याणा रचना बभूव । एतेषु सिद्धान्तेषु पितामहसिद्धान्ते वेदाङ्गज्योतिषस्य परम्परामनुसृत्य विरचित । सूर्यचन्द्रमसोर्गणित वर्तते । अन्येषा ग्रहाणा गणना तत्र नास्ति ।

वसिष्ठसिद्धान्त ( ३०० खीष्टाब्दम् ) राशीना लग्नाना च विवेचन निदर्शयति । तदनुसार वर्षे ३६५ २५९१ दिवसा भवन्ति । अस्मिन् ग्रन्थे सूर्यग्रहण चन्द्रग्रहण वा न व्याख्यातम् ।

पौलिशसिद्धान्ते ( ३८० खीष्टाब्दम् ) ग्रहणाना विवेचनं विद्यते ।

रोमकसिद्धान्त ( ४०० खीष्टाब्दम् ) वैदेशिकप्रभावात् ज्योतिषस्य प्रगति निदर्शयति । तत्र मेप्टन-हिप्पार्कसादीना ग्रीकविदुषा परिगणनरीत्या युगमानस्य दिनमानस्य च स्पष्टीकरण विद्यते ।

सूर्यसिद्धान्त सविशेष लोकप्रियोऽभवत् । तत्र ग्रहणविवेचनस्य गोलीयज्योतिषस्य च विशेषनियमा विभाविता दृश्यन्ते । परवर्तियुगे सूर्यसिद्धान्तस्य समादरोऽभवत् ।

ज्योतिषविज्ञानस्य प्रथम ऐतिहासिकाचार्य आर्यभट आसीत् । स त्रयोविंशतिवार्षिक एव ४९९ खीष्टाब्दे 'आर्यभटीयम्' रचितवान् । स सर्वेषा पौरस्त्यपाश्चात्यविदुषा ज्योति-

---

१. ऐतरेयब्राह्मणानुसारम्—एष ( सूर्य ) न कदाचनास्तमेति नोदेति । तं यदस्तमेतीति मन्यन्तेऽह्न एव तदन्तमित्वाथात्मानं विपर्यस्यते । अहरेवावस्तात्कुरुते रात्रिं परस्तात् । अथ यदेनं प्रातरुदेतीति मन्यन्ते रात्रेरेव तदन्तमित्वाथात्मानं विपर्यस्यते । अहरेवावस्तात्कुरुते रात्रिं परस्तात् । ३ ४४ एतदेव व्याख्यातं विष्णुपुराणे २ ८ १५-१६

समो यत स्यात्परिधे शतांश पृथ्वी च पृथिवी नितरां तनीयान् ।
नरस्य ततपृष्ठगतस्य कृत्स्ना समेव तस्य प्रतिभात्यत सा ॥
आकृष्टशक्तिश्च मही तया यत् स्वस्थ गुरु स्वाभिमुखं स्वशक्त्या ।
आकृष्यते तत् पततीव भाति समे समन्तात् क्व पतत्विय खे ॥

तदेव पृथिव्या आकर्षण न्यूटनमहोदयेन षट्शताब्द पश्चात् विज्ञातम् ।

साप्ताहिकवाराणा कल्पना सर्वप्रथम भारतेऽभवदिति आङ्गलदेशस्य वैज्ञानिकेन जोलिवरसाजमहोदयेन प्रमाणितम्। तेषा नामानि तु ग्रहानुसारीणि सन्ति । पृथ्वीतोऽन्तर-क्रमेण ग्रहास्तु चन्द्र, बुध, शुक्र, रवि, मङ्गल, गुरु, शनिश्च सन्ति । ग्रहाणामुपरिक्रमेण चतुर्थग्रहानुसारी वार अपरेद्युर्भवति । तद्यथा शने पश्चात् रविरागच्छतीति अन्तत परिगणय्य सख्येयम् । एतदपि गणितसाध्यमिति निदर्शितमग्रे ।

दिन च रात्रिश्चाहोरात्रो भवति ।[1] अहोरात्रपदे द्वितीयतृतीययो समाहारेण होराभवति आंगलभाषाया आवरस्य पर्याय । अहोरात्रे २४ होरा भवन्ति । एतासु प्रत्येकस्या होराया ग्रहस्वामी भवति । सप्तग्रहा सप्तहोरासु पर्यन्ति । एकविंशतिहोरासु तेषा त्रि पर्ययो भवति । द्वाविंशतितमहोराया प्रथमो ग्रह, त्रयोविंशतिहोराया द्वितीयो ग्रह चतुर्विंशतिहोराया तृतीयो ग्रहश्चायान्ति । अपरस्मिन् दिवसे चतुर्थो ग्रह समुपयातीति चतुर्थग्रहानुसारी वारो जायते। स एव ग्रहस्वामी । इय गणना सूर्यसिद्धान्तानुसारिणी वर्तते।

भारतीयज्योतिषविज्ञानस्य प्राक्तनोत्कर्षो बहुभिर्योरपीयविद्वद्भिरपि प्रमाणित । तथा हि—

During the eighth and ninth centuries, the Arabs were in astronomy the disciples of Hindus, from whom they borrowed the lunar mansions in their new order, and whose Siddhantas, they frequently worked up and translated in part under the supervision of Indian astronomers themselves whom Khalifas of Baghdad invited to their courts

Weber History of Indian Literature p 625

The originality of Hindu astronomy is at once established, but it is also produced by intrinsic evidence and although there are some remarkable coincidence between the Hindu and other systems, their methods are their own.

Wilson quoted in Mill s History of India Vol I P 107

---

१ होरेत्यहोरात्रविकल्पमेके भवन्ति पूर्वापरवर्णलोपात् ।

He ( Aryabhata ) was the man according to Europeans, who first brought to light diurnal revolution of the earth on its axis, and to have known the true theory of the causes of the lunar and solar eclipses and notice the motion of solistial and equinoctial points.

Chamber's Encyclopaedia

## आयुर्वेदः

प्रागैतिहासिककाले सिन्धुसभ्यतायुगे शङ्खचूर्णशिलाजतुरसाञ्जनादीनां प्रयोगेण चिकित्सा कृता । वैदिकसाहित्यस्यानुशीलनेनेदानीन्तनायुर्वेदविज्ञानस्य प्रगतिः परिघोष्यते । प्रथमं तावत् सर्वेषां महर्षीणां चिरजीवनस्याकाङ्क्षायुक्ता प्रतिभाति ।[1] आयुर्वेदस्य महिमा प्राचीयत । अश्विद्वयवरुणरुद्रादयो बहवो देवा वैद्या आसन् ।[2] अश्विद्वयस्य नेत्रचिकित्सा अस्थिसंयोजनकर्म च प्रसिद्धे । वरुणस्योषधालयो विशाल आसीत् । तत्र सहस्रभिषजोऽविद्यन्त ।[3] ऋग्वेदयुगे जलचिकित्साया सूर्यरश्मिचिकित्सायाश्च प्रचार आसीत् । तथा हि ऋग्वेदे

अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तये ।
अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं च विश्वशम्भुवमापश्च विश्वभेषजीः ॥
आपः पृणीत भेषजं वरूथं तन्वे मम ॥ १ २३ १९-२१
उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् ।
हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥ १.५०.११

बहुविधा ओषधयस्तदा उपज्ञाता बभूवुः । यथा—

या फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ ऋ० १०.९७ १५

अथर्ववेदानुसारं विविधरोगाणां लक्षण-निदान-चिकित्सादीनां विवेचनं सूक्ष्मरूपेण कृतम् ।[4] विभिन्नरोगाणां निवारणाय विविधद्रव्याणामुपयोगोऽक्रियत । तथा हि—कुष्ठेन तक्मज्वरनाशनं कृतम् ।[5] नितत्नीप्रयोगेण केशवर्धनं कृतम् ।[6] रजनीप्रयोगेण कुष्ठस्य

---

१. यजुर्वेदे ३६ २४, ईशोपनिषद् २ ।
२ ऋग्वेदे १.११६ १६ १ २४ ९, २ ३३ ४,७ ।
३ ऋग्वेदे १ २४ ९ ।
४ अथर्ववेदे ९ ८ ६—१ २०,२१
५ अथर्ववेदे ५.४.१
६ तत्रैव ६ १३७

निदानं कृतम् ।[१] सूर्यस्य रश्मिभि: क्रिमीणां विनाशो भवतीति विज्ञातमासीत् ।[२] क्रमीणामाश्रयस्थानानि शरीरस्य विविधाङ्गेषु, वनौषधिषु, च भवन्ति, कृमय बहुविधा भवन्ति, ते विषमया भवन्ति—इत्येते विषया अथर्ववेदे वर्णिता ।[३] रोहिण्या प्रयोगेण छिन्नस्यास्थ्न पुन संयोजनमक्रियत ।[४] मशकाना विनाशाय कस्यचित् वनस्पते प्रयोग कृत । अपामार्गं पिप्पल्यश्वत्थानामोषधीनामुपयोगो विविधरोगाणा निदानाय कष्टनिवारणार्थं च कृतम् ।[५] तस्मिन् युगे शल्यचिकित्सा समाज्ञातासीत् ।[६]

चरकसंहितानुसार भरद्वाज इति ख्यात विद्वानायुर्वेदविज्ञानस्य प्रथमाचार्यो बभूव । भरद्वाजस्य शिष्यपरम्परायामायुर्वेदस्य विकास सञ्जात । चरकयुगे आयुर्वेदज्ञानमपरा परम्परा पुनर्वसुत आरभ्यते । पुनर्वसो षट् शिष्या –अग्निवेश , भेल , जतूकर्ण , पराशर , हारीत , क्षारपाणिश्चासन् । सर्वे शिष्या स्वतन्त्ररूपेणायुर्वेदशास्त्रस्यानुसन्धानात्मकं विवेचन कृतवन्त । चरक तेषां ज्ञाननिबन्धन प्रतिसंस्कृत्य संहितारूपेण प्रणीतवान् । चरकसंहितायामग्निवेशस्य कर्तृत्व विशिष्टमेव प्रथितम् ।

चरकसंहिता

चरकसंहिताया विभाजनमष्टस्थानेषु ( अध्यायेषु ) कृतम् । तत्र सूत्रस्थाने—औषधपथ्य-वैद्यकर्तव्यादीना वर्णनम्, निदानस्थाने—ज्वररक्तस्राव-कुष्ठ क्षयादीना विवेचनम्, विमानस्थाने—रोगाणा परीक्षण तेषा कृते औषधिविधानम्, शरीरस्थाने—शरीररचनाविज्ञानम् इन्द्रियस्थाने—इन्द्रियाणा विकृते विवेचन, वाणीविकारसन्निपातादीनामुल्लेखश्च, चिकित्सास्थाने—रोगाणा निदानम्, स्वास्थ्य सवर्धनम्, दीर्घजीवनोपाया , वातरोगज्वरादीना विश्लेषण च, कल्पस्थाने—शरीरशोधनेन रोगनिवारणम्, सिद्धिस्थाने—विषमरोगस्य चिकित्सार्थं भेषज्यस्यान्त क्षेपण च व्याख्यातानि ।

चरकस्य प्रादुर्भाव सम्भवत खीष्टाब्दत प्रागेवासीत् । श्रीप्रफुल्लचन्द्ररायमतानुसार स बौद्धयुगादपि पूर्वं प्रादुरभवत् ।

उपर्युक्तयुगे आयुर्वेदविज्ञानस्य प्रकामप्रगतिरासीदिति तदानीन्तनसाहित्योल्लेखैः प्रमाणितम् । तथा हि—पशूनामपि शरीराङ्गानां कृतने सति चर्म चर्मणा सह, मास मासेन सह, स्नायु स्नायुना सहायोज्यत ।[७] पशुचिकित्सापि प्रचलितासीत् ।[८] सुपर्द-

१ अथर्ववेदे १ २३ ।
२ तत्रैव २ ३२ १
३ तत्रैव २ ३१ ४–६ ।
४ तत्रैव ४ १२ १ ।
५. तत्रैव ७ ५६ ।
६ तत्रैव १ ११ ५ ।
७ रोहन्तिमिगजातके ५०१ ।
८ हंसजातके ५०२ ।

शल्य चिकित्सा सफलविधिना सम्पादिता । मानसिकचिकित्साया प्रचलनमासीत् । मानसिकचिकित्सा ज्ञानौषधिना कृता ।[1] अन्धेभ्यो नेत्रप्रदानस्य विधानेऽन्यथा नेत्रोद्घाटनस्य प्रयोग औषधिसाहाय्येन कृत ।[2] कृत्रिमनासिकाया उपयोगो नासिकाविहीना जना कुर्वन्ति स्म ।[3] विषस्य प्रभाव वमनैः, घृतगुडमधुमद्यैश्चापाक्रियत ।[4] शर्करामिश्रिताम्ररसैरुदरवायुप्रकोप शमित ।[5]

औषधानां मधुरीकरणाय पुष्पैः तेषां भावना कृता । ईदृशानां भावितपुष्पाणां प्रयोगेण रोगा शमिता ।[6]

औषधानां निर्माणाय वृक्षेभ्यो मूल-पत्र-पुष्प-रस-शाखा-फलानि, पशुभ्यो गोमय-वसा-नाभि घृत-दुग्ध-मांस शृङ्गास्थि रक्तानि, पृथिव्या मृत्तिका-सुधा-गैरिकाञ्जन धातव, समुद्रेभ्य शङ्खमौक्तिकादीनि, तैलानि च सगृहीतानि ।[7]

हरितपयरोगा औषधानां शल्यकर्मप्रयोगेन दूरीकृता ।[8] वातरोग प्रस्वेदप्रवाहेण शमित । चिकित्सापद्धति स्वल्पव्ययसाध्यासीत् ।

बौद्धयुगस्य सर्वोच्चवैद्य जीवक इति ख्यातो बभूव । तक्षशिलाविश्वविद्यालये स सप्तवर्षाणि चिकित्साशास्त्रमधीतवान् । तस्य चिकित्साचमत्कारोऽद्भुतकथाप्रत्यानि बौद्धसाहित्ये उल्लिखितानि । तथा हि—स शिरोबाधानिवारणाय रोगिण शिरसि शल्यकर्मप्रयोगेण [illegible] क्रिमी बहिष्कृतवान् । कस्यचित् श्रेष्ठिन उदरविकारं दूरीकर्तुं तेन शल्यकर्मणा नाणां यथास्थानमवस्थिति कारिता । स वैशाली-काशी-साकेतोज्जयिनीप्रदेशेषु गत्वा महाजनानां निदान कृतवान् ।

जीवकमधिकृत्य कम्स्टनमहोदयेन प्रचारितम्—Jivaka went to the royal palace when, before the door, he met a small boy who was carrying two faggots of wood to his house Now, as soon as Jivaka saw him he at once detected the stomach and the intes tines through the body of the child, and he then said, "In the book of the plants the tree king ( भैषज्यराज ) is referred to, which

---

१ कामनीतजातके २२८ ।
२ सिविजातके ४६६
३ असिलक्खणजातके १२६ ।
४ लित्तजातके ९१ ।
५ अब्भन्तरजातके २८१ ।
६ महावग्गे ८ ' ३१ ।
७ महावग्गे ६ अध्यायत ।
८ महावग्गे ६ १२ १ ।
९ महावग्गे ८ १ ।

from outside will illuminate the interior ( of the body ) so that the Viscera within the abdomen may be seen Are there not bits of this tree in the dead wood carried by this child ?" Jivaka then attempted to find among the bits of wood those which possessed the marvellous powers taking one after the other, and placing each over the abdomen of the child, he obtained no illumination, but at last the two last bits of wood lighted up the interior of the child's body

Cumston An Introduction to the History of medicine

महाभारतानुसारं पुरा चतुर्विधा वैद्या —विष-शल्य-रोग-कृत्याहराश्च बभूवु ।[१] उन्मादग्रस्तानां चिकित्सा—धूपैः, अञ्जनयोगैः, नस्यकर्मभिः, भेषजैश्च कृता ।[२]

महाभारतयुगे पशुचिकित्साया विकासोऽभवत् । महाराजाशोको मानवचिकित्सया सह पशुचिकित्साया सुव्यवस्थां कारितवान । स प्रदेशेषु विदेशेषु च ओषधीनामारोपणाय साहाय्यमकरोत् । ग्रीकलेखकैर्भारतीयप्राचीनचिकित्सापद्धतिर्बहुमता ।

अर्थशास्त्रे आशुमृतकपरीक्षाया, वैज्ञानिकविधिश्चर्चित । तद्यथा निर्देशमात्रम्—विषहतस्य भोजनशेषं पयोभिः परीक्षेत । हृदयादुद्धृत्याग्नौ प्रक्षिप्तं चिटचिटायदिन्द्रधनुर्वर्णं वा विषयुक्तं विद्यात् ।[3] अर्थशास्त्रे बहुविधद्रव्याणां समुपयोगेनाद्भुतकार्यप्रसाधकानि वस्तूनि निर्मातुमुपाया विद्यन्ते । तथा हि—विद्युत्प्रदग्धोऽङ्गारोऽग्निर्वा विद्युत्प्रदग्धे काष्ठे गृहीतश्चानुवासितः कृत्तिकासु भरणीषु वा रौद्रेण कर्मणाभिहुतोऽग्निः प्रणीतश्च निष्प्रतीकारो दहति ।[४] पशुचिकित्सायै बहुविधप्रयोगा अर्थशास्त्रे चर्चिता सन्ति. । तद्यथा—अश्वानां चिकित्सकाः शरीरह्रासवृद्धिप्रतीकारमृतुविभक्तं चाहारम् ।[५] सर्वेषां पशूनां भोजनव्यवस्था आयुर्वेदानुसारं नियता वर्तते ।

भारते यथा कायचिकित्साया प्रवर्तकः परवर्तियुगे चरको बभूव, तथैव शल्यचिकित्साया प्रवर्तकः सुश्रुत आसीत । वैद्यानामाचारपद्धतिश्चरकसुश्रुताभ्यां निर्दिष्टा । उपनयनकाले विद्यार्थी गुरुणादिष्टः—सर्वेषां प्राणिनां कुशलं तवाभीष्टं भवतु, प्रतिदिनं रोगिणां निरामयत्वाय सर्वविधप्रयत्नं कुरु । परेषां धनस्य कामनां मा कुरु । वेशादीनामाडम्बरं मा कुरु । मद्यं मा पिब । सर्वथा पापं वर्जनीयम् । आरोग्यसिद्धान्तानां चिन्तनं

---

१. महाभारते शान्तिपर्वणि ६६ ५७ ।

२ तत्रैव १४ ३४ ।

३ आशुमृतकपरीक्षाप्रकरणात् ।

४ परघातप्रयोगात् ।

५ अश्वाध्यक्षप्रकरणात् ।

नित्यमेव वर्णनीयम् । आत्मप्रशंसको मा भव । शत्रोरपि प्राप्यं ज्ञानं ग्रहणीयम् । गुरुभिः सह शास्त्रविधिना व्यवहारं कुरु । अथ नित्यमवदन्—तथा करोमीति ।[1]

सुश्रुतः वैद्यस्य शास्त्रज्ञत्व कर्मकुशलत्व च समानरूपेण महत्त्वपूर्णं मनुते । तद्यथा सुश्रुतसंहितायाम्—

यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ।
स मुह्यत्यातुरं प्राप्य भीरुरिवाहवम् ॥
यस्तु कर्मसु निष्णातो धार्ष्ट्याच्छास्त्रबहिष्कृतः ।
स सत्सु पूजां नाप्नोति वधं चर्च्छति राजतः ॥
उभावेतावनिपुणावसमर्थौ स्वकर्मणि ।
अर्धवेदधरावेतावेकपक्षाविव द्विजौ ॥ ३.४८-५०

शिष्यस्य कर्मकुशलत्व विधातुं समीचीनाभ्यासविधिरपि प्रदत्ता । तथा हि—तत्र पुष्पफलालाबुकालिन्दकत्रपुसं ( सो ) र्वारुककर्कारुकप्रभृतिषु छेद्यविशेषान् दर्शयेत्, उत्कर्तनापकर्तनानि चोपदिशेत्, दृतिबस्तिप्रसेवकप्रभृतिषूदकपङ्कपूर्णेषु भेद्ययोग्याम्, सरोम्णि चर्मण्याततने लेख्यस्य, मृतपशुसिरासूत्पलनालेषु च वेध्यस्य, घुणोपहतकाष्ठवेणुनलनाडीशुष्कालाबुमुखेष्वेष्यस्य, पनसबिम्बीबिल्वफलमज्जामृतपशुदन्तेष्वाहार्यस्य, मधूच्छिष्टोपलिप्ते शाल्मलीफलके विस्राव्यस्य, सूक्ष्मघनवस्त्रान्तयोर्मृदुचर्मान्तयोश्च सीव्यस्य, पुस्तमयपुरुषाङ्गप्रत्यङ्गविशेषेषु बन्धनयोग्याम्, मृदुषु मांसखण्डेष्वग्निक्षारयोग्याम्, मृदुचर्ममांसपेशीषूत्पलनालेषु च कर्णसन्धिबन्धयोग्याम्, उदकपूर्णघटपार्श्वस्रोतस्यलाबुमुखादिषु च नेत्रप्रणिधानबस्तिव्रणबस्तिपीडनयोग्यामिति ।[2] अपर च—

सिरासु शिक्षितो नास्ति चला हि एता स्वभावत ।
मत्स्यवत् परिवर्तन्ते तस्माद्यत्नेन ताडयेत् ॥ ८.२०

शल्यचिकित्साया उपयोगो युद्धभूमिषु बभूव । तत्र वैद्यानामुपस्थानं निर्दिशन् सुश्रुत आह—

स्कन्धावारे च महति राजगेहादनन्तरम् ।
भवेत्सन्निहितो वैद्य सर्वोपकरणान्वित ॥
तत्रस्थमेनं ध्वजवद्यश ख्याति समुच्छ्रितम् ।
उपसर्पन्त्यमोहेन विषशल्यामयार्दिता ॥ ३४.१२-१३
पान्थानमुदकच्छाया भक्तं यवसमिन्धनम् ।
दूषयन्त्यरयस्तच्च जानीयाच्छोधयेत्तथा ॥

1 चरकसंहितायां विमानस्थाने ८.११—१३ ।
2. सुश्रुतसंहितायाम् ९.३—६ ।

दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ ।
रक्षेतां नृपतिं नित्यं यत्तौ वैद्यपुरोहितौ ॥ ३४.५, ७

ईदृशं राजाश्रयेणायुर्वेदशास्त्रसमुन्नतं बभूव ।

व्रणितस्य चिकित्सार्थं विशिष्टागारा बभूवु[1]। तेषु शल्यागारेषु यन्त्रशस्त्रक्षाराग्नि-शलाका-शृङ्ग-जलौकालाबू-जाम्बवौष्ठ-पिचु-प्रोत-सूत्र-पत्र-पट्ट-मधु-घृत-वसा-पय-तैल-तर्पण-कषायालेपन-कल्क-व्यजन-शीतोष्णोदक-कटाहादीनि परिकर्मिणश्च स्निग्धाः स्थिरा बलवन्तश्च ।[1]

शल्यकर्मणेऽसंख्यातानि यन्त्राणि बभूवु । तथा हि—अस्थिनिष्कर्षणार्थं सिंहमुख-व्याघ्रमुख-वृकमुखादीनि चतुर्विंशति-यन्त्राणि, त्वग्मांस-सिरास्नायुनिर्हरणार्थं सनिग्रहानिग्रहौ सदंशयन्त्रे, अष्टाविंशतिविधानि शलाकायन्त्राणि च । अपराणि शस्त्राणि—मण्डलाग्र-करपत्र-वृद्धिपत्र-नखशस्त्र-मुद्रिका-उत्पलपत्र-अर्धधार-सूची-कुशपत्र-त्रिकूर्चक-कुठारिका-बडिश-दन्तशङ्कु-आरापत्रादयः शल्यचिकित्सायां प्रयुक्ताः । बहूनि तत्रोपयन्त्राणि बभूवु ।[2] तद्यथा—रज्जु-वल्कल-लता-क्षाराग्निभेषजयन्त्रादीनि । व्रणानां सीवनं वेल्लित-गोफणिका-तुन्नसेवनी-ऋजुग्रन्थिविधिभिः कृतम् ।[3] व्रणबन्धनं वैज्ञानिकविधिना कृतम् । तन्निदर्शयन् सुश्रुत आह—अबध्यमानो दंशमशकतृणकाष्ठोपलपांशु-शीतवातातपप्रभृतिभिर्विशेषैरभिहन्यते व्रणः, विविधैश्चैनोपद्रुतश्च दुष्टतामुपैति, आलेपनादीनि चास्य विशोषमुपयान्ति ।[4] व्रणबन्धनानि चतुर्दशविधानि बभूवु ।

उपकल्पनीय-सम्भार-प्रकरणे सुश्रुतः शल्यागारस्य विन्यासं निरूपितवान् । तत्र मनोरञ्जनकारिणा गाथा-आख्यायिकेतिहासपुराण-कुशलानां गीतवादित्रोल्लापकानां चोपस्थितिः प्रकल्पिता । लावकपिञ्जलशशहरिणगोमृगमातृकादीनामवस्थानमासीत् । ईदृशेषु स्थितिषु रोगिणां परिचर्या सानन्दमभवत् । रोगिणां दृष्टिविलोभनं जनयितुं शोभा समारोपिता ।[5]

गुप्तयुगस्यायुर्वेदस्य प्रगतिर्वाग्भटस्याष्टाङ्गसङ्ग्रहेण परिचीयते ।[6] अस्मिन् ग्रन्थे कायचिकित्सा शल्यकर्म चाधिकृत्य बहवोऽभिनवप्रयोगा वर्तन्ते । तत्र चरकस्य सुश्रुतस्य च संहितयोर्ज्ञानं विशदभाषायां सङ्कलितम् ।

---

१. सुश्रुतसंहितायाम् १४.२४ ।
२ तत्रैव ८.३-६ ।
३ सुश्रुतसंहितायाम् २५.२० ।
४. सुश्रुतसंहितायाम् १८.२९ ।
५. सूत्रस्थाने १९.३ ।
६ अपराऽपि वाग्भटाष्टाङ्गहृदयसंहिताया रचयिता बभूव । सोऽस्य पश्चात् शताब्दीके तस्य प्रादुर्भावसम्भावनीय ।

गुप्तयुगस्यायुर्वेदमधिकृत्य रचितः कश्चित् गुप्तलिपौ विरचितो महत्त्वपूर्णग्रन्थः कस्मिंश्चित् स्तूपे तुर्किस्तानप्रदेशे प्राप्तः। ग्रन्थोऽयं खीष्टाब्दे १८९० संवत्सरे कर्नलबावर-महोदयेन क्रीतः। अस्मिन् ग्रन्थे सप्ताध्यायाः सन्ति। ग्रन्थस्य नवनीतकप्रकरणे सर्वेषां प्राचीनायुर्वेदसंहितानां सारः संगृहीतः। तत्र चूर्ण-रस-क्वाथ-तैल-अन्त प्रलेपन-अमृतपेय-लशुनादीनां प्रयोगा व्याख्याताः।

खीष्टस्य पश्चादष्टमे शतके माधवकरः 'रुग्विनिश्चयः' इति ख्यातं ग्रन्थं लिखितवान्। ग्रन्थोऽयं रोगनिदानशास्त्रस्य तदानीन्तनीं विशिष्टप्रगतिं निदर्शयति। खीष्टस्य पश्चात् १०६० संवत्सरे चक्रपाणिदत्तः चिकित्सासारसङ्ग्रहं रचितवान्। तत परं मिल्हणः १२२४ संवत्सरे २५०० श्लोकप्रमाणं चिकित्सामृतं लिखितवान्। शार्ङ्गधरसंहितायां पारद-गन्धकादीनां चिकित्सोपयोगा निर्दिष्टाः। नाडीज्ञानस्य महत्त्वं तत्र व्याख्यातम्।

गुप्तयुगे वृक्षायुर्वेदस्य पशुचिकित्सायाश्च उन्नतिर्बभूव। वराहमिहिरस्य बृहत्संहितायां वृक्षचिकित्साप्रकरणं विद्यते।[1] पालकाप्यो हस्त्यायुर्वेदं रचितवान्। अस्मिन् ग्रन्थे १६० अध्याया हस्तिरोगाणां परीक्षणं निदानं चाधिकृत्य वर्तन्ते। तत्र शल्यचिकित्सायाः प्रकरणं विद्यते। पौराणिकसाहित्ये यत्र तत्र पशुचिकित्साया विवरणं समुदाहृतम्।[2]

भारतीयचिकित्सापद्धतेः सर्वोत्कृष्टता वैदेशिकविद्वद्भिरपि प्रमाणिता। तथा हि—

In modern days European surgery has borrowed the operation of rhinoplasty or the formation of artificial noses from India, where English men became acquainted with the art in the last century

Macdonell . History of Sanskrit Literature p 427.

Indian medicine dealt with the whole area of the science. It described the structure of the body, its organs, ligaments, muscles, vessels and tissues The materia medica of the Hindus embraces a vast collection of drugs belonging to the mineral, vegetable and animal kingdoms, many of which have been adopted by European physicians Their pharmacy contained ingenious processes of preparation, with elaborate directions for the

---

१ वृक्षायुर्वेदस्य प्रकरणमग्निपुराणे २८१ अध्याये वर्तते।

२. गरुडपुराणे १९७ अध्याये। अग्निपुराणे २८६ अध्याये गजचिकित्सावर्णनं वर्तते। तत्रैव २८७ २८९ अध्याये अश्वचिकित्साया विवेचनं कृतम्।

administration and classification of medicines Much attention was devoted to hygiene, regimen of the body and diet [1]

From the evidences we have adduced all along there can now be scarcely any question as regards the priority of the Hindus in making mercurial remedies a speciality, and they are entitled to claim originality in respect of the internal administration of metal generally, seeing that Charaka and Susruta, not to speak of the later Tantras eloquent over their virtues [2]

## प्रकीर्णकानि विज्ञानानि

उपर्युक्तविज्ञानविषयाणामध्ययन बहुविधविज्ञानभेदान् समन्वयतीति नि सन्दिग्धमेव । प्रथम तावदायुर्वेद एव वनस्पतिविज्ञान रसायनशास्त्र भौतिकविज्ञान मनोविज्ञान धातुविज्ञान प्राणिशास्त्र च समन्वयति । ज्योतिषे भौतिकविज्ञानस्यावश्यकता वर्तते । संस्कृते समारम्भादेव भाज्यपदार्थाना विश्लेषण कृषिकर्म, शस्त्राणा यन्त्राणा प्रयोगश्च धातूना शोधन प्रयोगश्च, रत्नाना निर्माण चित्रण च प्रसाधनद्रव्यनिर्माण विज्ञानबलेन निष्पादितानि । अपर च दार्शनिका प्राकृतिकतत्त्वाना गुणपरिमाणादीना व्याख्यान कृतवन्त ।

## रसायनविज्ञानम्

रसायनविज्ञानस्य व्यावहारिकस्वरूप सर्वप्रथम कौटिल्यस्यार्थशास्त्रे व्याख्यातम् । अर्थशास्त्रस्यौपनिषदिकप्रकरणे विषस्योपकल्पन बहुविषसामग्रीणा संयोजनेन प्रदर्शितम् । तद्यथा—धामार्गवयातुधानमूल भल्लातकपुष्पचूर्णयुक्तमार्धमासिक । अर्थशास्त्रस्य प्रलम्भनप्रकरणे बुभुक्षानिवारणस्य द्रव्यस्योपकल्पन निर्दिशितम्—शिरीषोदुम्बरशमीचूर्णसर्पिषा संहृत्यार्धमासिक क्षुद्योग । रसायनदृष्ट्या महत्त्वपूर्णमुपकल्पनमङ्गारस्योपरि गमनाय निर्दिशितम् । तथा हि—पारिभद्रकप्रतिबलावञ्जुलवज्रकदलीमूलकल्केन मण्डूकवसादिग्धेन तैलेनाभ्यक्तपादोऽङ्गारेषु गच्छति ।

अर्थशास्त्रे धातुशोधनस्य विविधप्रयोगा वर्तन्ते । तद्यथा—तुत्थाद्गतं गौडिकं काम्बुकं चाक्रवालिकं च रूप्यम् । श्वेतं स्निग्धं मृदु च श्रेष्ठम् । विपर्यये स्फोटनं च

1 Sir William Hunter : Imperial Indian Gazetteer 'India' p 120
2. P. C Ray History of Hindu Chemistry, Introduction p L XII

दुष्टम् । तत्सीसचतुर्भागेन शोधयेत् । उद्गतचूलिकमच्छं भ्राजिष्णु दधिवर्णं च शुद्धम् ।[१] विविधधातूनां रञ्जनविधिः प्रयुक्तो बभूव । तथा हि—तपनीयमुज्ज्वाल्य रागत्रिभागं दद्यात्, पीतरागं भवति । श्वेततारभागो द्वावेकस्तपनीयस्य मुद्गवर्णं करोति । कालायसस्यार्धभागाभ्यक्तं कृष्णं भवति । प्रतिलेपिना—रसेन द्विगुणाभ्यक्तं तपनीयं शुकपत्रवर्णं भवति । तस्यारम्भे रागविशेषेषु प्रतिवर्णिकां गृह्णीयात् । तीक्ष्णताम्रसंस्कारं च बुध्येत । तस्माद्वज्रमणिमुक्ताप्रवालरूपाणामपनेयिमानं च रूप्यसुवर्णभाण्डबन्धप्रमाणानि चेति ।[२]

अर्थशास्त्रानुसारं कृषिकर्मणि रसायनविद्योपयुक्तासीत् । तथा हि—प्ररूढांश्चाशुष्ककटुमत्स्यांश्च स्नुहीक्षीरेण वापयेत् ।[३]

सुराया निष्पादनमपि रसायनमपेक्षते । विविधद्रव्याणां मिश्रणेन सुरोपकल्पिता ।[४]

भारतीयरसायनस्य कश्चिद् विशिष्टाध्यायो नागार्जुनस्यानुसन्धानमधिकृत्य प्रवर्तितः । नागार्जुनस्य प्रादुर्भावः सम्भवतः ख्रीष्टस्य पश्चात् द्वितीये शतकेऽभवत् । नागार्जुनस्य रसरत्नाकरे रासायनिकद्रव्याणां शोधनमारण-रूपपरिवर्तन-द्रव्यपरिवर्तनादीन् विषयानधिकृत्य सामग्री वर्तते । तथा हि रसरत्नाकरे—

किमत्र चित्रं यदि पीतगन्धकः पलाशनिर्यासरसेन शोधितः ।
आरण्यकैरुत्पलकैस्तु पाचितः करोति तारं त्रिपुटेन काञ्चनम् ॥
क्षारस्नेहैश्च धान्याम्लैः रसकं भावितं बहु ।
ऊर्णा लाक्षा तथा पथ्या भूलता धूमसंयुतम् ॥ १ २,३१

परवर्तियुगे नागार्जुनेन प्रवर्तितस्य विज्ञानस्य परम्परा रसार्णवे रसेन्द्रचूडामणौ रसहृदये रसराजलक्ष्म्यां रसरत्नसमुच्चये च विकसिता ।

क्षारोपकल्पनस्य रीतिः प्रथममर्थशास्त्रेण परिचीयते । परवर्तियुगे सुश्रुतसंहितायामौषधप्रयोगे विविधक्षाराणां निर्माणविधिः प्रभावश्च निर्दिष्टौ । तथा हि—पानीयस्तु गरगुल्मोदराग्निसङ्गाजीर्णारोचकानाह । शर्कराश्मर्याभ्यन्तरविद्रधिकृमिविषार्शःसूपयुज्यते ।[५]

अग्निचूर्णस्य प्रथमोल्लेखः स्पष्टरूपेण वाल्मीके रामायणे वर्तते । तद्यथा—

अग्निचूर्णमिवाविद्धं भास्वराम्बुमहोरगम् ।
सुरारिविषयं घोरं पातालविषयं सदा ॥ युद्धकाण्डे ४ ११९

---

१, २ सुवर्णाध्यक्षप्रकरणात् ।
३ सीताध्यक्षप्रकरणात् ।
४ सुराध्यक्षप्रकरणात् ।
५ सुश्रुतसंहितायाम् ११ ८ ।

महाभारतेऽपि 'सामि समुद्गशृङ्गिका' उल्लिखिता ।[1] अग्निचूर्णस्य विशिष्टोपयोग निर्माणविधिश्च शुक्रनीतौ वर्णितौ ।[2]

## भौतिकविज्ञानम्

उपनिषद्युगे देवविद्याया नक्षत्रविद्यायाश्चाध्ययनं कृतम् ।[3] तैः भौतिकविज्ञानस्य परिधौ समन्विते । दर्शनशास्त्रे पञ्चतत्त्वानां वैज्ञानिकानुशीलनं कृतम् । तेषां प्राथमिकस्वरूपमणुपरमाणुतः सिद्धमिति पर्यालोचितम् । आकाशादीनां गुणा विभाव्यन्ते स्म । तदधिकृत्य विल्सनमहोदयेन लिखितम्—The Hindus early adopted the doctrine that there is no vacuum in nature but observing that air was excluded under various circumstances from space, they devised, in order to account for the separation of particles, a subtle element or ether by which all interstices, the most minute and inaccessible, were pervaded which modern philosophy intimates some tendency to adopt, as regards the planetary movements and it was to this subtle element that they ascribed the property of conveying sound, in which they were so far right that in vacuo there can be no sound Air again is said to be possessed of the faculty of touch, that it is the medium through which the contact of the body is effected—ether keeps them apart—air impels them together Fire or rather light has the property of figure—Mr. Colebrooke renders it of colour. In either case the theory is true, for neither colour nor form is discernible except through the medium of light Water has the property of taste an affirmation which is perfectly true, for nothing is sensible to the palate until it is dissolved by the natural fluids[4]

गुप्तयुगे वराहमिहिरः वर्षादामिनो मेघानां वायूनां च लक्षणानि निर्धारितवान् ।[5]

---

१ वनपर्वणि १५ ८ ।

२. शु० नी० १०२८—१०४२ ।

३. छान्दोग्योपनिषदि ७ १ २ ।

४. Mill : India vol II p 95

५. बृहत्संहितायाम् २१–२८ अध्यायाः

## वनस्पतिविज्ञानम्

ऋग्वेदानुसारमोषधीनां वैदिकयुगे पर्यालोचनाय वैद्या अवसरं प्राप्तवन्त । यतः

> यत्रोषधी. समग्मत राजान समिताविव ।
> विप्र स उच्यते भिषग् रक्षोहामीवचातन ॥ ऋग्वेदे १०.९७.६

परवर्तियुगे सदैव वनस्पतीनां बहुविधोपयोगितानुसन्धीयते स्म । ग्रन्थेषु च तेषां मूलपत्रपुष्पफलकाष्ठत्वक्सारसादीनां वैज्ञानिकविवेचनेन तेषामुपयोगित्वं हानिकरत्वं वा निर्धारितम् । मिल्समहोदय प्राचीनभारतीयवनस्पतिविज्ञानमधिकृत्य प्रमाणयति— They ( the Hindus ) were very careful observers both of the internal and external properties of plants and furnished copious lists of the vegetable world, with sensible notices of their uses, and names significant of their peculiarities.[1]

कौटिल्यस्यार्थशास्त्रे सीताध्यक्षप्रकरणे वनस्पतिशास्त्रस्य महत्त्वपूर्णशोधा विविक्ता सन्ति । गुप्तयुगे वराहमिहिरो बृहत्संहितायामुपवनविद्यामधिकृत्य वैज्ञानिकप्रयोगान् समुदाहृतवान् । यत्तु विहाय फलदानोपाया सम्यग्वर्णिताः सन्ति । बृहत्संहितायां वृक्षायुर्वेदप्रकरणे वनस्पतिशास्त्रस्य सम्यग्दर्शनमनवोन्मेष प्रादर्शि ।

## प्राणिशास्त्रम्[2]

संस्कृते समारम्भात्प्रभृति पशूनामुपयोगिता-विषयेऽनुसन्धानमकारि । भक्षणार्थं पशूना प्रथमोपयोग । तत कतिपयपशवो वाहनसमर्था भवन्ति कृषिकर्मणे चोपयोगिन. सन्ति । मनोरञ्जनार्थं बहव पशव पालिता शिक्षिताश्च । चिकित्सायं पशूना मांस-रक्त-स्नायु-वसास्थिपित्तादय प्रयुक्ता । पशुचिकित्साया समारम्भो वैदिककालत प्राय सदैव बभूव । तस्मै प्रयोजनाय पशूनामाहारविहारादय पर्यालोच्यन्ते स्म ।

जैनग्रन्थेषु एकेन्द्रिय-द्वीन्द्रियादय प्राणिन समाश्रयन्त । वृक्षा अपि सप्राणा. सन्तीति विशदीकृतम् ।

सूक्ष्मप्राणिनामस्तित्वं स्पष्टरूपेण महाभारते निर्धारितम् । तथा हि—

> सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित् ।
> पक्ष्मणोऽपि निपातेन तेषां स्यात् स्कन्धपर्यय ॥ शान्ति० १५ २६

अर्थशास्त्रे सूनाध्यक्षगवाध्यक्ष-गाऽध्यक्ष हस्त्यध्यक्षादि-प्रकरणेषु पशुसम्बन्धि-विज्ञ

---

१ Mill's History of India Vol II p, 97

२. पद्मपुराणानुसारं प्राणिशास्त्रं तु जीवविज्ञानमेव । २४ ६३

नस्य प्रगतिः परिचीयते । गुप्तयुगस्य वराहमिहिरस्य बृहत्संहितायां गजाश्वकुक्कुरादीनां शोभनाशोभनलक्षणानां विवेचनं वरीवर्ति ।

## धातुशास्त्रम्

नवीनप्रस्तरयुगादेव स्वर्णादिधातव उपायुज्यन्त । तत्र भूगर्भात् सिन्धुगर्भात् पर्वतशिखरात् च बहुमूल्यरत्नमौक्तिकमाणिक्यादीनि समाह्रियन्त । रत्नपरीक्षाप्रकरणमर्थशास्त्रे बृहत्संहितायां च महत्त्वपूर्णमेव । धातुविज्ञानस्य चरमोत्कर्षं दिल्लीनगरस्य गुप्तयुगस्य लौहस्तम्भे वर्तते । अधुनापि तस्मिन् स्तम्भे कश्चिद्विकारो न परिलक्ष्यते । तस्य स्तम्भस्य निर्माणमपि किमपि विस्मयकरं कौशलं प्रकटयति । योरपप्रदेशे विज्ञानबलेन गुप्तयुगस्य सहस्रवर्षं पश्चादपि तादृशो लौहसंस्कारो न जातः ।

## यन्त्रविज्ञानम्

ऋग्वेदानुसारं यन्त्रप्रयोगस्य प्रचलनमासीत् । तद्यथा—

सविता यन्त्रैः पृथिवीमरम्णात् १० १४९ १

वैदिकयुगेऽथर्ववेदानुसारं कृत्या यन्त्रप्रवर्तितासीदिति प्रतिभाति । मूर्तिमयी सा स्वयमेव चलितुं समर्था बभूव । परवर्तियुगे रामायणानुसारं रामसेतोः रचना यन्त्रोद्धृताभिः शिलाभिः कृता । महाभारतयुगे युद्धोपयोगि यन्त्रसूत्रं विरचितम् ।[1] दुर्गेषु यन्त्राणि युद्धार्थं न्यस्तानि । गीतायां अधोलिखितश्लोको यन्त्रस्य परिचालनमधिकृत्य निःसन्देहमेव प्रमाणीकरोति—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥

कौटिल्येनार्थशास्त्रे युद्धार्थं बहुविधयन्त्राणामुपयोगो विज्ञापितः । तथा हि चक्रयन्त्रं भ्रमणशीलम् आसीत् । स्थिरयन्त्रं कस्मिश्चिदधिष्ठाने स्थिरमभवत् । चलयन्त्राणि इतस्ततः प्रयोगार्थं नीतानि ।[2] मनुस्तु महायन्त्रप्रवर्तनमुपपातकमेव गणयति ।[3]

यन्त्रनिर्माणविधिः न क्वचिदपि स्पष्टं विज्ञापितः । तत्र भारतीयानामविश्वास एव कारणं यत् लिखनेन तस्य प्रभावो विनश्यति । इदमेव परिलक्ष्य समराङ्गणसूत्रधारे प्रोक्तम्—

---

१. सभापर्व ५.१२४
२. आयुधागाराध्यक्षप्रकरणात्
३. मनुस्मृतौ ११.६३

यन्त्राणां घटना नोक्ता गुप्त्यर्थं नाज्ञतावशात् ।
तत्र हेतुरयं ज्ञेयो व्यक्ता नैते फलप्रदाः ॥[1]

सिद्धान्तशिरोमणौ भास्कराचार्येण पारदद्वारा चालितस्य यन्त्रस्य वर्णनं कृतम् ।

## विमानविज्ञानम्

भारतीया विमानं रचितवन्तो न वेति सन्दिग्धोऽयं विषयः । साहित्यिकप्रमाणै-विमान-रचना प्रमाणितैव वर्तते । रामायणानुसारं रावणस्य राजधान्यां बहवो विमाना आसन् । पुष्पकविमानस्य कथा सुविदितैव । महाभारतानुसारं देवानां विमाना विश्वकर्मणा रचिताः ।[2] अपरं च—शिशुपालस्य भ्राता शाल्वः सौभविमानं युद्धार्थं प्रयुक्तवान् ।[3] कालिदासीये रघुवंशे, अभिज्ञानशाकुन्तले च विमानयात्रावर्णनं वास्तविकं प्रतिभासते ।

विमानरचना-विधिः समराङ्गणसूत्रे वर्तते । भरद्वाजेन रचिते वैमानिकशास्त्रे विमानरचना-रीतिर्वर्तते ।[4] तदनुसृत्य १८९० ख्रीष्टसंवत्सरे मुम्बय्यां विमानो निर्मितः । स विमान आकाशे उड्डीयत ।

---

१. समराङ्गणे ३१ अध्याये
२. आदिपर्वणि ६६.२९
३. वनपर्वणि १४ अध्याये
४. मैसूरनगरस्य पण्डितश्री आर [illegible] संस्थायाः संचालकेनास्य ग्रन्थस्य हस्तलिखितप्रतिलिपिः [illegible] ।

# काव्यसाधना

काव्यरचना क्वचित् स्वान्तःसुखाय भवति, क्वचित् श्रोतॄणामास्वादनाय भवति, क्वचिदपि च देशशोभा स्तवनार्थं भवति।[1] काव्यस्वरूपमुपर्युक्तं सर्वं प्रकरणेनिर्धार्यते।

## वर्ण्यविषयाः

नास्ति किंचिदपि जगति यदधिकृत्य कवयः काव्यं कर्तुं न समर्थाः। किन्तु श्रेष्ठकाव्यस्य सर्जनार्थमुदात्तविषयाणां समग्रतः तेषां स्वीकरणं चापेक्षितं भवति।

भारतस्य विशालप्राङ्गणे प्रकृत्या समुपस्थापितानां वस्तूनां—पर्वतनदी-समुद्र-कासार-वन-सूर्य-चन्द्र-नक्षत्र-साय-प्रातः-रजनी-ऋतूनां च शोभा सर्वातिशायिनी वर्तते। तत्रापि देवर्षिमहामानवानामुदारचारितानि श्रद्धास्पदं प्रभावोत्पादकानि च सन्ति।

## ऋग्वेदः

भारते काव्यस्याद्यतमं रूपं खीष्टत् त्रिसहस्रवर्षं प्रागेव रचिते वैदिकसाहित्ये प्रतिभासते। तत्र ऋग्वेदः प्रमुखः श्रेष्ठश्च विद्यते।[2] ऋग्वेदे प्राकृतिकविभूतीनामाध्यात्मिकस्वरूपमधिकृत्य देवभावेन तासां वर्णनं विद्यते। पृथ्वी-सरस्वती-रात्रि-सूर्याग्नि-पर्जन्योषो-मरुदादीनां वर्ण्यविषयाः सन्ति। अन्ये देवाः—इन्द्र-वरुण-विष्णु-रुद्रादयः सन्ति। तेषां पराक्रमाः मानवतायाः अभ्युत्थानाय वर्तन्ते। तद्यथा—इन्द्रस्य वृत्रविजयः, विष्णोः त्रिपदपराक्रमश्च। अश्विनोः परोपकारचरितानि प्रायो वर्णितानि।

महामानवानां चरितानि ऋग्वेदे आकलितानि। प्रायस्ते महाभागाः ऋषयो राजानश्च बभूवुः। राज्ञां युद्धानि परमैश्वर्यप्रदानि बभूवुः। ऋषीणां तपश्चर्या तेषां व्यक्तित्वविकासाय बभूव। क्वचित् ऋषीणां राज्ञां च यज्ञकर्माणि वर्णितानि।

---

1. मम्मटानुसारं तु

> काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
> सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥

2. ऋग्वेदविषये रवीन्द्रनाथेन सम्यगुक्तम्—A poetic testament of a people's collective reaction to the wonder and awe of existence A people of vigorous and unsophisticated imagination awakened at the very dawn of civilisation to a sense of in exhaustible mystery that is implicit in life.

## महाभारतं रामायणं च

महाभारते वर्ण्यविषयाणां विपुलत्वं प्रकटति । तथा हि—

धर्मशास्त्रमिदं पुण्यमर्थशास्त्रमिदं परम् ।
मोक्षशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ॥
धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥
अष्टादशपुराणानि धर्मशास्त्राणि सर्वशः ।
वेदाः साङ्गास्तथैकत्र भारतं चैकतः स्थितम् ॥[1]

सृष्टेरादिकालादेवं विविधविषयपूर्णं कथापरम्परया रमणीयं च सर्वं सरसं खलु महाभारते प्रारम्भेण सम्पूर्णमेव । ग्रन्थोऽयं वर्णाश्रमधर्मपरायणः । सर्वेषु वर्णेषु सर्वेषु आश्रमेषु च यस्या उदारजीवनपद्धतेर्दर्शनं विमर्शनं वा पुनः तस्या व्यावहारिकरूपं कथासूत्रेण महाभारते प्रथितम् । अस्य महाभारतस्य 'श्रीमद्भगवद्गीता' प्रकरणं विशिष्टमेव । समस्तस्य भारतस्य परवर्तिकविभ्यो ग्रन्थोऽयमुपजीव्यो वर्तते ।

रामायणे रामस्य चरितगाथामाश्रित्य महानोज्ज्वलराष्ट्रचित्रणं प्रदर्शितम् । तत्र कौटुम्बिकं सामाजिकं चोत्तरदायित्वं परिवोढुं समुत्सुका ये जनास्तेषां कृते कल्याणसर्वस्वमेव परिपूरितम् । रामचरिते मानवताया आदर्शः समारोपितः । रामस्य परिवारो जगतः सम्मिलनस्वरूपमेव । तस्मिन् परिवारे सर्वेषां व्यक्तित्वस्य विकासः सर्वथा जीवनधारया उदात्तीकरणं च रामचरितस्य वैशिष्ट्यम् । रामकृष्णौ वैदिकसाहित्येऽपि प्रागुल्लिखितौ ।[2]

## महाकाव्यानि

भारते महाकाव्यसाहित्यस्य प्रवर्तनं महाभारतरामायणादिभिः काव्यैर्भवति तत्र रामायणमादिकाव्यम् । अश्वघोषेण रचितं महाकाव्यमिति ख्यातं बुद्धचरितं प्रथममेव । अश्वघोषस्य द्वितीयं महाकाव्यं सौन्दरनन्दमस्ति । द्वयोर्महाकाव्ययोर्वर्ण्यविषयो गौतमबुद्धस्य व्यक्तित्वमधिकृत्य वर्तते । बुद्धचरिते गौतमस्य बाल्यतः प्रभृति चरितगाथा वर्तते । गौतमोऽयं भारतस्य सांस्कृतिकाभ्युत्थानकारिणामेक एव महर्षिरासीत् ।

सौन्दरनन्दे गौतमस्योपदेशानुकूलं नन्दस्य व्यक्तित्वविकासप्रक्रिया प्रकटीकृता । कामुको नन्द उपराजपदं परित्यज्य कथं निर्वाणपथमचरत्, मानवतायाः कल्याणाय किमकरोदिति सौन्दरनन्दे वर्णितम् ।

कालिदासो रघुवंशस्य कुमारसम्भवस्य च रचयितास्ति । रघुवंशे रघुवंशीयराजानो

१. आदिपर्वणि ६२.२३,५२ तथा स्वर्गारोहणपर्वणि ५.४६ ।
२. राम ऋग्वेदे १०.९३.१४ मन्त्रे कृष्णश्च ऋग्वेदे ८.८५-१३ मन्त्रे ।

मुख्यतो रामस्य चरितं वर्णितम्। आरम्भे काव्यप्रवृत्तिमालोचयन् कालिदास प्रोक्तवान्—

रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः॥

उपर्युक्तश्लोकेन वर्ण्यविषयस्योदात्तत्वं व्यज्यते। दिलीपस्य गोचारणप्रसङ्गेन रघोः कौत्ससाहाय्यप्रकरणेन चोपर्युक्तव्यवहारः प्रमाणीक्रियते।

कुमारसम्भवे देवानां मानवानां च साहाय्यं कुमारस्य कार्त्तिकेयस्य जन्मकथा वर्णिता।

किरातार्जुनीयम्, शिशुपालवधम्, नैषधचरितञ्चान्यानिप्रमुखमहाकाव्यानि सन्ति।

प्रमुखमहाकाव्यानां वर्ण्यविषयस्य दिङ्मात्रनिर्देशेन तस्य वैविध्यं प्रमाणितं भवति। तत्र कतिपयमहाकाव्यानामितिवृत्तानि महाभारतादुद्धृतानि सन्ति। इतिवृत्तानामियत्ता महाकविभिः कदापि न स्वीकृता। आवश्यकतानुसारं मनोरमवर्ण्यविषयाणामुपरिष्टात् संयोजनं सदैव समीचीनं मतम्।

महाकाव्यानां वर्ण्यविषयमधिकृत्य परिभाषितं साहित्यदर्पणे—

नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः। (?) खलानिन्दा सतां च गुणकीर्तनम्।
सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः।
प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः।
रणप्रयाणोपयममन्त्रपुत्रोदयादयः।
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह॥ ६ ३१९, ३२२-३२४

उपर्युक्तविवेचनेन स्पष्टं प्रतिभाति यत् वर्ण्यविषयद्वारा महाकाव्येषु मानवतायाः धर्मस्यादर्शरूपेण महापुरुषाणां देवानामृषीणां च चरितानि प्रस्तावितानि। अपरं च—प्रकृतौ मानवकृतिषु यानि परमौदार्यसम्पन्नानि मनोहराणि च वस्तूनि वर्तन्ते, तेषां काव्यमयस्वरूपाणि महाकाव्येषु समुपस्थापितानि।

## नाटकानि

नाट्यसाहित्यस्यारम्भोऽश्वघोषस्य रूपकत्रयेण भवति।[1] तेषु प्रथमं शारिपुत्रप्रकरणम्। अस्मिन् प्रकरणे बुद्धोपदेशं श्रुत्वा शारिपुत्रस्य मौद्गल्यायनस्य च भिक्षुव्रतधारणकथा वर्तते।

---

१. अश्वघोषस्य नाटकानां परिचयतो दृष्ट्वा स्पष्टमेव प्रतिभाति यत् नाट्यकला अस्मिन् युगे विकसिता ... । अत न तानि रूपकाणि नाट्यसाहित्ये प्रथमं स्थानमर्हन्ति। अपरं च पूर्वकालीनसाहित्ये पाणिनिसूत्रेषु महाभाष्ये च नाट्यसाहित्यस्योल्लेखाः प्राप्यन्ते।

भासस्य नवोदयनाटकेषु कतिपयरामायणमहाभारतकथा उपनिबद्धा। सर्वा कथा वीरभावपूर्णा औदार्यगुम्फिता वा प्रतिभाति। तद्यथा—कर्णभारानुसारं कर्णः इन्द्राय कवचकुण्डले प्रददाति। ऊरुभङ्गे दुर्योधनभीमयोर्युद्धं वर्णितम्। कतिपयनाटकेषु प्रणयकथा निगदिता। तद्यथा—चारुदत्ते वसन्तसेनाचारुदत्तयोः, स्वप्नवासवदत्तायामुदयन-पद्मावत्योश्च प्रेमकथा वर्तते। मध्यमव्यायोगे वात्सल्यगुम्फनार्थं भीमस्य घटोत्कचेन सह युद्धं वर्णितम्।

शूद्रकस्य मृच्छकटिके विशुद्धलौकिकी गाथा विद्यते। प्रेममार्गस्य बाधा अनल्पाः भवन्ति। अन्ततो राजकीयसङ्घर्षेण प्रणयकथाया नायकस्य चारुदत्तस्य मृत्युदण्डो बाधितः। तदनन्तरं गोपालस्य महाशय आर्यको राजानं हत्वा स्वयमेव शासको भवति। अस्मिन् नाटके तदानीन्तनसमाजस्य विविधवर्गाः—व्यापारी, वेश्या, चोर, द्यूतकार, धूर्त, कुट्टनी चोपवर्णिताः।

कालिदासस्य नाटकत्रयेषु—मालविकाग्निमित्रविक्रमोर्वशीयाभिज्ञानशाकुन्तलेषु इतिवृत्तं प्रणयाश्रयं सर्वत्र विद्यते। तेषां कथानामारम्भः संयोगशृङ्गारेण प्रणयिजनानां समागमेन भवति। अन्ततो विवाहस्य पश्चात् गार्हस्थ्यजीवनस्य सुखमयसंयोजनं सर्वत्र विद्यते।

प्राय सर्वेषु परवर्तिनाटकेषु प्रणयकथा इतिवृत्तिरूपेण स्वीकृता। तद्यथा—श्रीहर्षस्य रत्नावली-प्रियदर्शिका-नागानन्दानि, भवभूतेः मालतीमाधवमुत्तररामचरितं च। अपवादरूपेण भवभूतेर्महावीरचरितं भट्टनारायणस्य वेणीसंहारं विशाखदत्तस्य मुद्राराक्षसं च वर्तन्ते। महावीरचरिते रामायणस्य प्रायः सम्पूर्णा कथा नाटयरूपेण प्रस्तुता। वेणीसंहारे द्रौपद्या वेणीसंहारार्थं दुर्योधनस्याहङ्कारस्य शान्तिं प्राप्तुं तेन सह युद्धं वर्णितम्। मुद्राराक्षसे कौटिल्यस्य कुटिलत्वेन चन्द्रगुप्तस्य पक्षे राक्षसस्य पतनं वर्णितम्। राजनीतेः कठिनपूर्वं एव प्रकरणमस्य वर्ण्यविषयः। राजशेखरस्य द्वे नाटके बालरामायणं बालभारतं च क्रमशः रामायणमहाभारतयोः कथामुपनिबध्नीतः।

शृङ्गारप्रधानेषु नाटकेषु कतिपयेष्वादर्शाः कथामाध्यमेन प्रतिष्ठापिताः। तथा हि—नागानन्दे जीमूतवाहनः नागानां प्राणरक्षार्थमात्मबलिदानं करोति। उत्तररामचरिते तु रामः—

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥

इति प्रतिज्ञां सत्यापयति।

प्रणयप्रधाने नाटकसाहित्येऽपि भारतीयसंस्कृतेः सर्वोच्चादर्शाः सम्पटिता एव। निःसन्देहं कवयो नाटकेषु मानवानामुदात्तवृत्तिं प्रोत्तेजयितुं प्रयतन्ते। प्रकृतेरौदार्यस्य निदर्शनमपि तदुद्दिश्य कृतं प्रतिभाति।[1]

---

१. उदाहरणार्थमभिज्ञानशाकुन्तले चतुर्थोऽङ्को द्रष्टव्यः।

इह परिच्छेदे नाटकानामितिवृत्तमधिकृत्य साहित्यदर्पणे प्रोक्तम्—

नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम् ।
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।
आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ॥
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा ॥
दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरं च यत् ।
शयनाधरपानादि नगराद्यवरोधनम् ॥
स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।
देवीपरिजनादीनाममात्यवणिजामपि ॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः । ६.७,९,१४,१६ १९

उपर्युक्तवर्ज्यविषयाणां समाहारो भारतीयसंस्कृतिशिष्टाचारादिकमनुसृत्य कृत इति प्रत्येयम् ।

नायकान् परिच्छेदे सिद्धान्तितं मतम्—

नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥

तत्र धीरोदात्तो दर्श्यते—

महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ॥ २ १,२,४,५,

प्राय सर्वेषु नाटकेषु सत्यस्य धर्मस्य च जयोऽसत्यस्य पराजयोऽभिव्यक्त ।

## कथा

कथानां लोकप्रियता स्वाभाविकी प्रतिभाति । कथासूत्रेण विविधविषयाणाम्—इतिहास-भूगोल राजनीति-धर्मदर्शनशास्त्र विज्ञानादीनां सरलरीत्या प्रभावोत्पादकविधिना च व्याख्यानमभिमतं ।

भारतीयकथानां प्रथमः संग्रहः इतिहासपुराणेषु जातककथादिषु च प्राप्यते । आधु

गेयपदानि सन्ति । स्तोत्रेषु देवानां पराक्रमाः, तेषां कृपाप्रवृत्तयश्च भक्तिभावेन विभाविता विद्यन्ते ।

मेघकाव्येषु प्रथमपदं कालिदासस्य मेघदूतेनाहितमिति सुविदितमेव । मेघदूते कस्यचिद्यक्षस्य विरहिणः सवादस्तस्य प्रेयसीं प्रति निवेदयितुमेको मेघोऽभ्यर्थितः । प्रार्थितो यक्षः सौहार्दभावेन मेघे स्वसन्देशं सन्निधापयति, रामगिरेर्यक्षपुरीपर्यन्तमाकाशमार्गनिर्देशनं च करोति । मेघदूते भारतीयप्रकृतेः—पशु पक्षि पर्वत नदी-वायु-सरोवरादीनां सामञ्जस्यपूर्णमतिविशेषपूर्वं वर्णनं प्रथितम् । तत्र प्रकृतेस्तदेव वन्दनीयं स्वरूपं चित्रितं यदीदानीं सहानुभूत्या च परिव्याप्तं वर्तते । तथा हि प्रकृतेः समस्तावस्थानि मेघस्य समादराय स्वागताय च समुत्सुकानि सन्ति । मेघोऽपि नैसर्गिकाभिरामगुणैः प्रायशः प्रकृतेरलङ्करणमेव ।

ऋतुसंहारे कालिदासः षड्ऋतूनां प्राकृतिकसौरभं प्रभावं च नायकमुखेन नायिकासमक्षं प्रस्तौति । तत्र शृङ्गारमयी प्रवृत्तिः स्वभावतः प्रमुखा वर्तते । ऋतूनामाश्रयेण भारतीया प्रकृतिः कथं नित्यमेवाभिनवं स्वरूपं बिभ्राणा सहृदयानां प्रोल्लसनाय भवतीत्यत्रैव द्रष्टव्यम् ।

भर्तृहरेः शतकानि—नीतिशृङ्गारवैराग्यपराणि सन्ति । तेषु शतकेषु प्रथमतः नीतेः शृङ्गारस्य वैराग्यस्य च स्वरूपं विविच्य तथा परमार्थदृष्ट्या मूल्याङ्कनं कृतम् । तत्र वैराग्यस्य सर्वोत्कृष्टता प्रतिपादिता, यतः वैराग्येणैवापवर्गाणां श्रेष्ठो मोक्षो लभ्यो भवति । शृङ्गारशतकेऽपि मनोरमा रामा पुरुषस्याभ्युदयार्थं विषपूर्णा भोगिन्यो मताः ।

अमरुकस्य शृङ्गारशतकं तत्त्वामरस्य विद्यते । अस्मिन् शतके गार्हस्थ्ययौवनस्योद्दामशृङ्गारमयप्रवृत्तीनामनर्गलप्रवाहः सामस्त्येन दर्शनीयः ।

जयदेवस्य गीतगोविन्दे गीतकाव्यस्य मनोहारिस्वरूपमनुत्तरमेव । अस्मिन् काव्ये कृष्णस्य राधाप्रभृतिगोपिकाभिः सह वृन्दावनकुञ्जेषु यमुनापुलिनेषु च केलिविलसितानां साङ्गोपाङ्गवर्णनमाहृतम् । गेयपदेषु शब्दध्वनिना सह भावानामपूर्वसामञ्जस्यं दृश्यते । ईदृशी शृङ्गारमये काव्येऽपि कृष्णभक्तो जयदेवः स्वकीयाराध्यदेवस्य सर्वातिशायिदेवानुभावं समारोपयति ।

गीतिकाव्यस्य अत्र मुक्तकानां समवलोकनीयं समृद्धीकृतम् । श्लोकस्य प्रथमतः प्राकृतभाषायां गाथासप्तशती रचिता । आचार्यः गोवर्धनाचार्यः श्लोकस्य पश्चात् द्वादशे शतके आर्यासप्तशतीं रचितवान् । तत परं हि शतकं विहारीनामा 'सतसई' प्रणीतवान् । तासु सर्वासु सप्तशतीषु शृङ्गारमयभावानां नायिकानायकयोः रमणव्यापाराणां च चित्रणमेव वर्तते ।

## भाषा

संस्कृतभाषाया भावाभिव्यञ्जनसामर्थ्यं वैदिककालात् सुविदितम् । यथा हि—सरलस्याला

आदिकाव्ये रामायणे काव्यशैली भव्या वर्तते । तत्र छन्दसामलङ्काराणां च वैविध्यं भावाभिव्यक्तये सुप्रयुक्तमिति स्पष्टम् । वर्णनेषु प्रायः सर्वत्र कविदृष्टिर्वस्तूनामुदात्तस्वरूपं प्रस्तौति । वाक्यरीतिः सरला बोधगम्या च वर्तते सर्वत्र । अनेन विधिना रामायणे सरसता सम्पादिता ।

वाल्मीकेः काव्यशैली आदर्शभूता परवर्तियुगेऽश्वघोषकालिदासादिभिः स्वीकृता । तेषां कवीनां काव्येषु भावाभिव्यक्तिः काव्यस्य प्रधानतत्त्वं मतम् । अलङ्काराणां संयोजनं तत्र वस्तुस्वरूपस्य स्पष्टीकरणाय बभूवेति प्रतिभाति । अलङ्कारास्तु वस्तुतः स्वल्पप्रयत्नैः शब्दैर्वस्तुना विशदस्वरूपस्य चित्रणाय समीहिताः । गणच्छन्दसां स्वरूपं प्रथममश्वघोषस्य काव्येषु लालित्यपूर्णमजायत ।

वैदर्भी रीतिः कालिदासस्य रचनाभिः सुवासिता एव ।[1] कालिदासस्य भाषा सरला सती लावण्यमयी प्रतिभासते । तस्य भावाः परिष्कृताः सदाशयनिर्भराश्च सन्ति ।

अभिनवा अपि समालोचकाः कालिदासस्य सरलरचनारीतिं सूक्ष्मालङ्कारतां च प्रशंसन्ति । तद्यथा कीथमहोदयः —

His was the golden mean of Virgil between rustic simplicity and clumsiness and that over-refinement which is specially fatal Thus it results that his miniature-painting in its polished elegance often attains relative perfection,

A History of Sanskrit literature p 101.

कालिदासस्य युगे संस्कृतकाव्ये कृत्रिमालङ्काराणां शब्दगुम्फनवैचित्र्याणां च समारम्भोऽभवत् । परवर्तियुगे शब्दाडम्बरस्य रीतिः सविशेषं प्रचलिता दृश्यते । तथा हि— महाकवि भारविः माघश्च सरलरीतिं विहाय क्वचित् पाण्डित्यप्रदर्शनार्थमेव शब्दजालं प्रस्तुतवन्तौ । परिणामतः एकाक्षरश्लोकरचना, विचित्रबन्धयुक्ताः श्लोकाश्च चमत्कारार्थं पुरस्कृताः । तथापि भारवेर्माघस्य च काव्यशैली विशेषगुणानाश्रयन्ती समादृता वर्तते । प्राचीनालोचका भारवेरर्थगौरवं शैलीं च प्रशंसन्ति ।

रसालङ्काररीतिव्यञ्जनानां परमोत्कर्षः श्रीहर्षस्य नैषधीयचरिते प्राप्यते । कविः स्वयमेव स्वकाव्यस्य परिचयार्थं कथयति—

'पदरम्ये मधुवर्षि' 'शृङ्गारामृतशीतगु' चेति ।

शृङ्गारामृतमिव न सर्वरास्वादनीयमिति स्पष्टीकृतं श्रीहर्षेण—

ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञंमन्यमना हठेन पठिती मास्मिन्खलः खेलतु ।

---

१. माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥ साहित्यदर्पणे ९ . २

धद्धारादग्रदल्लपोहनदृढग्रन्थि समासादय-
स्वेन स्वाध्यरमोमिमज्जनमुपध्यासज्जन सज्जनः ॥

नाटककाराः प्रायः सदैव प्रगुणरसनाशेरनुयायिनो बभूवुः । नाटकानि सर्वजनबोधाय भवन्तीति विचारणात् तत्र वैदर्भीरीतिः प्रतिष्ठामरति । तथापि युगप्रभावस्य सर्वथापि-प्रवर्तनं सत्यमेव । भासस्य कालिदासस्य च नाटकानि सरलानि सन्ति, किन्तु परवर्ति-युगस्य 'उत्तररामचरितम्' 'वेणीसंहारम्' 'मुद्राराक्षसम्' वा न सर्वत्र सरलानि । तेषु नाटकेषु भारतीयकाव्यशैलीसमं शैलीदुरूहत्वं प्रायोऽनुसृतमेव ।

गेयकाव्यानि नाटकमङ्गानि सरलभाषया निबन्धनमर्हन्ति । तेषु समासाडम्बरस्या-वकाशो नास्त्येव । स्थानाभाव एव तत्र कारणं वर्तते । सरलभाषया निगदिताः श्लोकाः विशेषतो भर्तृहरेः शतकेषु, गीतगोविन्दे वा सविशेषं प्रभावोत्पादका भवन्ति ।

काव्यशैली कथासाहित्ये द्विविधा प्रवर्तते । लघुकथासु श्लोकनिबद्धकथासु च प्रायः सर्वत्र मनोरमा सरलभाषा वैदर्भीरीतिमनुसरति । किन्तु महाकथासु, आख्यायिकासु वा भाषा प्रायः समासबहुला, अलङ्कारभाराक्रान्ता च प्रवर्तते । पञ्चतन्त्रस्य, कथासरित्सा-गरस्य च भाषा सुबोधा एव । किन्तु बाणस्य कादम्बर्यां हर्षचरिते वा शब्दाडम्बरो भयङ्कर एव । तदपि हृद्यं बाणेन स्वयमेव प्रशंसितम्—

नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम् ॥

अपरेऽपि कथाकाराः सुबन्धुर्दण्डी धनपालादयः समासबहुलां सालङ्कारां शैलीमेव समादृतुः ।

संस्कृतकाव्यशैली वर्ण्यविषयाणामौदार्यानुकूला सदैव समुन्नता बभूव ।

## कवीनां व्यक्तित्वम्

वैदिककवयः ऋषयः इति ख्याताः । साधारणतस्ते ऋषयो भरद्वाजविश्वामित्रवसिष्ठवामदेव-प्रभृतयो आत्मज्ञानसम्पन्ना अपि परिपूताः बभूवुरिति तेषां रचनाभिरपि स्पष्टं प्रतिभाति । सर्वे प्रतिभा ब्रह्म इति प्रसिद्धा देवैः प्रदत्ता मता । तस्याः प्रसूतिः 'ऋतस्य सदनाद्' बभूवेति धारणासीत् ।[1] हृदयमेव काव्यस्याधिष्ठानं व्याख्यातम् ।[2] साधनया तेषामृषीणां काव्यरचनाशक्तिः समर्जिता बभूव ।[3]

१. ऋग्वेद ७.३६.१ ।
२. ऋग्वेद २.३५.२ ।
३. ऋग्वेद १०.११६

वैदिकयुगे राजानः, सैनिकाः, वैश्याः, आर्येतराः, स्त्रियो वा कवयो बभूवुः ।[1] तत्र राजानो युद्धभूमेः स्वकीयमनुभवं निवेदितवन्तः ।

आर्येतरकवयः ऊर्ध्वग्रावा, अरिष्टनेमिश्च सुप्रसिद्धौ । स्त्रीकविषु श्रद्धा, शची च प्रख्याता ।

रामायणमहाभारतयो रचयितारौ वाल्मीकिर्व्यासश्च श्रेष्ठमहर्षी बभूवतुः ।[2] तपोभिरेव तयोः कवित्वं प्रस्फुटितमिति प्रतिभाति । आचार्यस्य व्यासस्य दर्शन-राजनीति-युद्धशास्त्रादिज्ञानं प्रधानमेवासीत् । वाल्मीकेः काव्यरचना दिव्या भव्या च देवानुग्रहैर्बभूव । काव्यादर्शस्य वृत्तिमनुवर्तमानाः ऋषयोऽपि शृङ्गारवीरादिरससारभूतानि काव्याङ्गानि उपवर्णितवन्तः ।

परवर्तियुगे कवयः राजाश्रयं प्राप्तवन्तः । प्रथमं तावदश्वघोषः कनिष्कस्य राजसभामलङ्कृतवानिति श्रूयते । तथापि अश्वघोषस्य रचनायां क्वचिदपि राज्ञः रुचेरनुवर्तनं न दृश्यते । तस्य काव्यप्रणयनोत्साहः [illegible] एवासीत् । स बौद्धसंस्कृतेर्महानुन्नायकोऽभवदिति विदितमेव ।

परवर्तियुगीनाः राजानः कवयश्च परस्परं [illegible] स्म । तथा हि वासुदेवः, सातवाहनः, शूद्रकः, साहसाङ्कः, विक्रमादित्यः, भोजश्च तादृशाः प्रमुखाः राजानो बभूवुः । कालिदासः, मेण्ठः, अमरः, भारविश्च तत्तद्दिव्याः राजसभाश्रयं प्राप्तवन्तः । बाणो हर्षवर्धनस्य राजसभामलङ्कृतवान् । वाक्पतिराजः राजशेखरो श्रीहर्षश्च राजसभाश्रयं लेभिरे । तत्र राजसभायां काव्यस्य समुत्कर्षस्तरोऽविद्यत ।[3] परस्परस्पर्धया नित्यनवोन्मेषकाव्यस्य रचना समभवत् । कतिपये राजानः श्रेष्ठकवयो बभूवुः ।

राजाश्रयं प्राप्यापि स्वल्पा एव कवयो राजप्रशस्तिं कृतवन्तः । कविप्रतिभा राजधान्यामपि कुण्ठिता न बभूव । किन्तु शृङ्गाररसस्य वीररसस्य च प्राधान्यं राजकवीनां रचनासु स्वाभाविकमेवास्ति । ख्रीष्टात् प्राक् काव्यस्य प्रणयनं प्रायश्चतुर्वर्गाणाम्—विशेषतो धर्ममोक्षयोर्व्याख्यानाय बभूव । ख्रीष्टस्य पश्चात् काव्यरचना नागरिकाणां मनोरञ्जनेन सह तेषां चित्तवृत्तिसंस्काराय बभूव ।

'प्रतिभाशालिन एव विद्वांसः कविपद्धतिमनुसरन्तु' इति [illegible] । प्रति-

---

१ रा[illegible]नुसारं गु-स [illegible] कविरस्तदनुरूपं काव्यम् ।

२ तत्र बहवो व्यासा बभूवुः । व्यासेषु प्रथमो द्वैपायन एव । भागवते ११ १६ २८, अन्तिमव्यासानां नामानि विष्णुपुराणे ३ ३ ९–२१ श्लोकेषु आख्यातानि ।

३. [illegible] सभार्यमूर्ध्नि च काव्यानि पठन्ति ।
[illegible] जगदेवं [illegible] तत्र तत्र च ॥
काव्यमीमांसा दशमाध्यायः

सया सह व्युत्पत्तेरभ्यासस्य च सामञ्जस्यमपेक्षितम् ।[1] तत्र शास्त्रकवेः, काव्यकवेः, उभयकवेश्च क्रमशः । उभयकविः श्रेष्ठ इत्यादृतः । 'सततमभ्यासवशतः सुकवेः वाक्यं पाकमायाति' इति राजशेखरः ।

राजशेखरः 'कवित्वस्य अष्टौ मातरः' इति प्रतिपादयति—

स्वास्थ्यं प्रतिभाभ्यासो भक्तिर्विद्वत्कथा बहुश्रुतता ।
स्मृतिदार्ढ्यमनिर्वेदश्च मातरोऽष्टौ कवित्वस्य ॥

कविचर्यां निरूपयन् स उपवर्णयति—'स्मितपूर्वमभिभाषणम्, रहस्यान्वेषणं परकाव्य-दूषणवैमुख्यमनभिहितस्य' । तदनुसारं कविगृहं तु रमणीयमासीत् । तथा हि—तस्य भवनं सुसंमृष्टम्, ऋतुषट्कोचितविविधस्थानम्, अनेकतरुमूलकल्पितापाश्रयवृक्षवाटिकम्, सक्रीडापर्वतकम्, सदीर्घिकापुष्करिणीकम्, सबर्हिणहरिणहारीतम्, सचकोरचक्रवाकहंसम्, घर्माभि-धारागृहयन्त्रलतामण्डपकम्, सदोलाप्रेङ्खं च स्यात् । राजशेखरः श्रेष्ठकाव्यस्य विरलत्वं मन्यते ।

## काव्यशास्त्राणि

काव्यशास्त्रमधिकृत्य ग्रन्थानां प्रणयनं साहित्यपुरस्सरादिव एव सम्भावनीयम् । वेदा-ङ्गानामध्ययनं काव्याभ्यासस्य प्रथमं पदं प्रतिभाति । वेदाङ्गेषु व्याकरणच्छन्दोनिरुक्त-शिक्षादेः विशिष्टं महत्त्वं काव्यरचनार्थं भवति । तत्र व्याकरणच्छन्दसोः परम्परा सातत्येन विकसिता बभूव । पाणिनव्याकरणं पिङ्गलस्य च छन्दःशास्त्रममरत्वमावहतु ।

काव्यशास्त्रस्य सिद्धान्तानां प्राथमिकः संग्रहः भरतस्य नाट्यशास्त्रमेवोपलभ्यते । अस्मिन् ग्रन्थे काव्यसम्बन्धितत्त्वानां—रसालङ्कारच्छन्दोनृत्यवाद्यादीनां सम्यग् विवेचनं वर्तते । पश्चात् भामहदण्डिवामनानन्दवर्धनमम्मटविश्वनाथादिभिः कृतानि काव्य-शास्त्राणि निबद्धानि । तत्र मम्मटः काव्यप्रकाशे शब्दशक्तिगुणदोषविवेचनपुरस्सरमलङ्का-राणां वैशिष्ट्यानि प्रदर्शयति ।

काव्यशास्त्रमधिकृत्य प्रायः सर्वेषां प्रकरणानां सूक्ष्मदृष्ट्या भेदोपभेदनिदर्शनम्, शास्त्र-प्रमाणविवेचनं च तर्कसङ्गतप्रणालीमनुसृत्य कृतमिति ध्वनेरनन्ता भेदवैचित्र्योदाहरणेन स्पष्टं प्रतिभाति ।

## प्राकृतकाव्यानि

प्राचीनयुगे संस्कृतं भारतस्य सर्वाधिकमहत्त्वपूर्णा भाषा बभूव । वैदिककालादेव सर्वे श्रेष्ठकवयः संस्कृतभाषया काव्यं रचयामासुः । प्रारम्भिकयुगे बौद्धसङ्घेनानुमोदितं पालि-

१. बहुज्ञता व्युत्पत्तिः । उचितानुचितविवेको व्युत्पत्तिः ।

भाषायाम्, जैनसंस्कृतेरनुयायिनोऽपभ्रंशमागधीशौरसेनीमहाराष्ट्रीभाषासु च धर्मग्रन्थानां प्रणयनं कृतवन्तः। धर्मग्रन्थेषु क्वचित् काव्यस्य दर्शनं भवति। तथा हि बौद्धानां सुत्तपिटके सुत्तनिपातादिषु लोकप्रियकाव्यस्य स्वरूपं प्रभीयते। जातकेषु प्रायमिश्रकथासाहित्यं प्रवर्तते। थेरगाथाथेरीगाथादिषु पालिसाहित्यस्य गेयपदानां प्रायमिश्रसङ्ग्रहो विद्यते।

जैनानां प्राकृतकाव्यं चरितग्रन्थेषु, पुराणेषु, कथासु च प्रतिभासते। तेषां रचना साधारणतः समाजस्य प्राकृतजनेभ्यः कृता। अतएव तेषु ग्रन्थेषु भावालङ्कारादीनां प्रयोगो नाविरलः।

महाराष्ट्र्याश्रया प्राकृतभाषा द्वाभ्यां महाकाव्याभ्यां समलङ्कृता बभूव। तयोः प्रथमं महाराजप्रवरसेनेन निर्मितं सेतुबन्धमस्ति। अस्मिन् काव्ये रावणवधमधिकृत्य सेतुबन्धनोपकल्पनस्यातीव मनोरमं प्रभावोत्पादकं वर्णनं च विद्यते। मानवोपक्रमस्य तादृशं सम्भावनं भारतीयसाहित्येऽन्यत्र न समासाद्यते। सेतुबन्धस्य काव्यशैली सविशेषमुदात्ता वर्तते। अस्मिन् महाकाव्ये वीररसस्याद्भुतरसस्य च चरमप्रकर्षो दर्शनीयः।

द्वितीयं महाकाव्यं गौडवधमिति वाक्पतिराजेन कृतम्। तत्र दिग्विजयनिरूपणप्रसङ्गे भारतस्य विशालप्राङ्गणस्य नैसर्गिक-विभूतीनां वनपर्वतमरुभूमिपथादीनामपूर्ववर्णनं विद्यते। कवेः प्रतिभाबहुलता च सर्वथा विस्मयकारिणी प्रतिभाति।

प्राकृतभाषायां कतिपयनाटकानि रचितानि। तेषु कर्पूरमञ्जरी, चन्द्रलेखा च प्रमुखे। इमे द्वे सट्टके प्रणयकथोद्गूर्णे स्तः।

## आर्येतरभाषाकाव्यानि

दक्षिणभारतस्य आर्येतरभाषासु तामिल-कन्नड-तेलुगुषु प्राचीनकाले गुणभृत् काव्यसाहित्यं रचितम्। तत्र तामिलभाषायाः साहित्यमुच्चकोटिकं वर्तते।

## तामिलकाव्यानि

तामिलकाव्यस्य प्रादुर्भावो राजाश्रितेषु सङ्घेषु बभूव। सङ्घसंस्थायाः समारम्भः सम्भवतः ख्रीष्टात् पूर्वं पञ्चमे शतके बभूव। प्रथमसङ्घस्य रचना तोल्काप्पियमिति व्याकरण-शुद्धप्रेम-काव्यशास्त्राणि अधिकृत्य बभूव। अस्या द्वितीयेऽध्याये तदानीन्तनसामाजिकदशाया वर्णनं विद्यते।

तृतीयसङ्घस्य मुख्यरचनाः एट्टुतोगै (अष्टपरिसंकलनानि), पत्तुपाट्टु (दशकाव्यानि), पदिनेण्किल्कणक्कु (अष्टादश काव्यानि) च सन्ति।

एट्टुतोगैकाव्ये ५१० कवीनां २३०० कविता प्राकृतिकदृश्य-प्रेमवर्णने अधिकृत्य सङ्कलिता। तत्र राजकुमाराणां वीराणां च साहसपूर्णपराक्रमाणां गाम्भीर्यानुवर्णनं

विद्यते । पत्तुपाट्टुकाव्ये विविधविषयानधिकृत्य रचितानि काव्यानि वर्तन्ते । तद्यथा— कार्तिकेयस्तवरूपा, 'कावेरिपट्टनम्', नीतयश्च, काञ्चीगर्वं, नगराणि, प्रेमगाथा, ग्रामीणदृश्यानि कविपोषकस्य पराक्रमा, चोलराजस्याभ्युदयश्च ।

पदिनेण्कीऴ्कणक्कु अष्टादश काव्यानि प्रायो धर्मविषयकाणि सन्ति । तत्र काव्य- रत्नकोषरूपा मानवस्य सद्भावनाया संवर्धनाय सन्ति । कतिपयग्रन्थेषु युद्धनियमाः, औष- धिविज्ञानम्, महच्चरितानि च वर्णितानि ।

क्रीष्टस्य पश्चात् द्वितीयशतके शततमवर्षे वा 'इलङ्गो अडिगल' इति ख्यातनामा कवि. 'शिलप्पदिकारम्' रचितवान् । अस्मिन् काव्ये 'कोवलन्' इति ख्यातस्य नायकस्य वैश्यापात्रबद्धस्यैश्वर्यदारिद्र्यस्य मदुराप्रवास प्रथम वर्णित । तत्र राजकुलस्य नूपुर चोरितवानीति मिथ्याभियोगेन स राजाज्ञानुसारं मृषा वधं प्राप्तवान् । पश्चात् तस्य पत्नी कण्णकी साध्वी सती प्राणाग्न्यर्पणवती । अस्य पापकर्मण प्रभावात् पाण्ड्यो राजा मृत, मदुरा च प्रदाहेन दग्धा । सर्वं विनष्टम् । तत पर कण्णकी मदुराप्रदेशस्य पूजनीया देवीति सम्मानिता ।

मणिमेकलै काव्य 'कूलवाणिगन्' कवे रचना प्रसिद्धा । तत्र माधव्यास्तस्या कन्या- याश्चरितगाथा वर्णिता । अन्तिमभागे धर्मोपदेशा विद्यन्ते ।

षष्ठशतकस्य पश्चात् शैव-वैष्णव-धार्मिकाणां साहित्यं समवर्धत । तेषां रचनासु 'तेवारम्' विशिष्टमेव । नवमे शतके 'माणिक्कवाचक' इति ख्यातो महर्षि 'तिरुवाचकम्' रचितवान् । द्वादशशतके शेक्की नम्बि. 'पेरिय'-पुराण रचितवान् ।

वैष्णवसम्प्रदायस्य प्राथमिकद्वादशमहर्षय 'आल्वार' इति ख्याता । तेषां रचना 'नालायिरप्रबन्धम्' काव्ये सङ्कलिता । अस्मिन् ग्रन्थे तदानीन्तनधार्मिकानां कवीनां विचारधाराप्रगाढता ।

द्वादशशताब्दे 'कम्बर' कवी रामायण प्रणीतवान् । तत्र काव्यकला, कथानकसंवि- धान च सर्वं प्रतिभावैशिष्ट्य प्रमाणयत । कम्बरस्य समकालिक 'ओट्टकुत्तर' नरेन्द्रकाव्ये नलकथा वर्णितवान् । अस्मिन् युगे 'जय कोण्डान्' इति कलिङ्गत्तुपरणि- काव्ये कलिङ्गविजय वर्णितवान् ।

## कन्नडकाव्यानि

कन्नडभाषाया क्रीष्टाब्दस्य पश्चात् दशमशतकादारभ्य द्वादशशतकपर्यन्त रामायण महाभारत चाश्रित्य काव्यसाहित्य प्रवर्तितम् । जैनसत्कवैर्महापुरुषाणा चरितानि कति- पयकाव्यग्रन्थेषूपनिबद्धानि । पम्पकवि 'भारत' काव्ये अर्जुनस्य प्रतिरूपमिति कृत्वा स्वकीयस्याश्रयदातु अरिकेसरिणश्चरित वर्णितवान् । स आदिपुराणे प्रथमतीर्थङ्करस्य

चरितं निबद्धवान् । पम्पस्य समकालिकः पोन्नकवी रामकथां शान्तिपुराणं च रचितवान् । तस्य गदायुद्धकाव्ये भीमदुर्योधनयोर्गदायुद्धं वर्णितम् । ततः परं स रामचन्द्रचरितपुराणं मल्लिनाथपुराणं च रचितवान् ।

कन्नडभाषायां चावुण्डराजेन रचितं चावुण्डराजपुराणं सर्वोत्तमं गद्यकाव्यं प्रारम्भिकयुगे निबद्धम् । तस्य समकालिको नागवर्मा बाणस्य कादम्बरीमनूदितवान् ।

ख्रीष्टस्य पश्चाद् द्वादशशतकादारभ्य वचनमिति ख्यातस्य गेयकाव्यस्य रचना प्रारब्धा । वचनमुपासनापरं काव्यं ज्ञानमार्गस्य रहस्यमुद्घाटयति । वचनस्य प्रमुखरचयितारो बसव अल्लमप्रभु, अक्कमहादेवी च बभूवुः ।

द्वादशशतके राघवाङ्को हरिश्चन्द्रकाव्यमिति नाटक रचितवान् ।

## तेलगु-साहित्यम्

तेलगुभाषायाः प्रथमः कविः नन्नयः ख्रीष्टस्य पश्चादेकादशशतके प्रादुरभवत् । स नारायणभट्टे सहकर्मित्वेन महाभारतस्य त्रीणि पर्वाण्यनूदितवान् । द्वयोः कव्योः शब्दचयनं रसाभिव्यक्तिः शैली च श्रेष्ठत्वेन परवर्तिकविभिः समादृता । परवर्तियुगे तिक्कनः कविः निर्वचनोत्तररामायणं रचितवान् । स महाभारतमंशतोऽनूदितवान् ।

# सम्बन्ध-संवित्

वैदेशिकसम्बन्धा पुरा प्राय. पञ्चविधा बभूवु । तद्यथा—व्यापारिक [1], धार्मिक, राजनीतिक, कलात्मक, साहित्यिकश्च । व्यापारद्वारा राजनीतिधर्मकलादीनां विदेशे प्रसार स्वयमेव भवतीति विदितमेव । राजनीतिकसम्बन्धस्य स्थापना क्वचित् व्यापारसंवर्धनाय भवति । व्यापारिभि सह देशाभ्रमणोत्सुका धर्मप्रचारका वा विद्वांसो विदेशेषु गत्वा वसती कृतवन्तश्च । पुरा धर्मप्रचारका प्राय शिल्पकलादिषु निष्णाता बभूवु । एतेषां सम्बन्धानां परिणति साहित्यिकादानप्रदानं बहुलीकरोति । अनेन प्रकारेण वैदेशिकसम्बन्धस्य प्राय सर्वे प्रकारा अन्योन्याश्रिता प्रतिभान्ति ।

एतत्सर्वममेरिकीयेतिहासविदा विल डुरैण्टमहोदयेन सम्यक् समासितम्—

India was the mother-land of our race and Sanskrit the mother of Europe's languages, she was the mother of our philosophy, mother through the Arabs, of much of our mathematics, mother through the Buddha, of the ideals embodied in christianity, mother through the village community of self government and democracy Mother India is in many ways the mother of us all

## धार्मिकप्रसारः

पुरा समस्ते जगति धर्मं प्रति परमोत्साहो बभूव । स्वदेशीयाना विदेशीयानां च धर्मतत्त्वस्य ज्ञान प्राप्य तदनुकूल स्वजीवनविधि विकासयितु सर्वे समुत्सुका अभवन् । नासीत् तदा कोऽपि धार्मिकाभिनिवेशो यदवरोऽपि स्वधर्मोऽपरिवर्तनीय अथवा श्रेष्ठोऽपि परधर्मोऽग्राह्य एव । जगति सर्वत्र धर्मप्रसारकाणां स्वागत बभूव । यथाधुना विदेशीया ख्रीष्टधर्मोपासका विश्वस्य विविधभागेषु ख्रीष्टधर्मस्य प्रचारार्थं प्रयतन्ते तथैव प्राचीनयुगेऽपि ते भारतीया धर्मप्रचारका बभ्रमु ।

सार्वत्रिक प्रसार

भारतीया स्वधर्मस्य देश-विदेशेषु च प्रचारार्थं परमधर्मस्य ज्ञानार्थं च पर्यट्य स्वदेशे समागच्छन् तत्रैव विदेशेषु न्यवसन् वा। विदेशेषु प्राप्तैतिहासिकावशेषाणां पुरातनकथादीनां च परिशीलनेन भारतस्यास्मिन् क्षेत्रे महानुपक्रम परिचीयते। तदधिकृत्य विदेशीयविदुषा-

१ व्यापारिकसम्बन्धस्य परिचयोऽस्मिन् ग्रन्थे १८८-१९० पृष्ठे द्रष्टव्य ।

मेव मतमुल्लेखनीयम्। रामकथामधिकृत्य विलियमजोन्समहोदयो लिखति-Rama is Ramah of scriptures father of Cush ( Genesis, Chapter X verse 7 ).[1]

वैदिकधर्मस्य प्रसारमभिलक्ष्य मैक्समूलरमहोदयो लिखति—The religious aspirations of that ( Hindu ) civilisation are found grandly expressed in the Rgveda. That civilisation pervades in every corner of the civilised world, and is aroused and about us every day of our lives.[2]

अमेरिकामहाद्वीपे बौद्धधर्मः

प्रथमं तावत् काबुलप्रदेशतः पञ्चभिक्षव ४५८ ई० संवत्सरेऽमेरिकामहाद्वीपे गत्वा तत्र बौद्धधर्मस्य प्रचारमकुर्वन्। तेषां यात्रा जापानदेशात् स्थलमार्गेण कामटकास्का-एल्युशियाद्वीप-अलास्काप्रदेशान्तरेषु बभूव। कामटकास्का एशियामहाद्वीपस्य पूर्वोत्तरदिशि अलास्का चामेरिकायाः पश्चिमोत्तरदिशि वर्तते। एतयोरन्तरे बेहरिङ्ग इति सामुद्रधुनी एल्युशियाद्वीपो वर्तते।[3]

मेक्सिकोदेशस्य विदेशमन्त्रालये प्रकाशिते राजकीयेतिहासे स्पष्टमेव निर्दिष्टं यत् "प्रथम भारता एवामेरिकादेशे बाहुत समागताः। तैः भारतैरत्र विद्यालयमन्दिराणि निर्मितानि, आपणाः स्थापिताः, सुसस्कृते प्रसारश्च कृतः।" मेक्सिकोप्रदेशे शिवस्य, हनुमतः कूर्मावतारादीनां मूर्तयो मन्दिराणि च विविधभागेषु प्राक्तनभारतीयसंस्कृतिसम्बन्धं द्योतयन्ति।

बौद्धधर्ममधिकृत्य गाथा वर्तते—The foot-prints of Buddha were worshipped by his followers and were called Phrabat They were engraved on rocks and hills, where people flocked from all parts of the country to worship them .six such Phrabats are found in the East, one of them in Mecca, whither the Buddhist made pilgrimages long before the rise of Islam[4]

अपरं च—The so-called Hermes scriptures ( the name of the sacred writing of the Egyptians ) contain a metaphysical treatise in the forms of a dialogue between Hermes and Thodh,

---

1. Asiatic Researches Vol II p 40.
2. India What can It Teach us ? p 74
3. मिशनरीटीतपत्रिकायाः २ ३ अङ्के सिपुनेसनामको बौद्धानामेमेरिकाविष्कारो लेखः द्रष्टव्यः।
4. Count Bjornstjerna : Theogony of the Hindus p 92, 93.

Bodh, Budh, which throughout exhibits the doctrines of Buddhism [१]

वर्नेलटाडमहोदय कथयति—That a system of Hinduism pervaded the whole Babylonian and Assyrian empires, scripture furnishes abundant proofs in the medium of the various types of the Sun-god, Balnath, whose pillar adorned every mount and every grave [२]

मानियरविलियममहोदयो विज्ञापयति—Pythagoras and Plato both believed in this doctrine ( of the transmigration of souls ), and that they were indebted for it to Hindu writers [३]

मैक्डानलमहोदय समर्थयति—The hero of the story prince Josaphat, has an Indian origin, being in fact no other than Buddha. The name has been shown to be a corruption of Bodhisattva, a well known designation of the Indian reformer. Josaphat rose to the rank of a saint both in Greek and Roman churches. That the founder of an oriental religion should have developed into a Christian saint is one of the most astounding facts in religious history [४]

ख्रीष्टधर्मस्योपरि भारतीयधर्मणो प्रभाव. The unknown life of Jesus-Christ इति ग्रन्थेन सम्यगुद्घाटितम् ।[५]

विंसेण्टस्मिथमहोदय आकलयति—Before the year 256 B C when the rock edicts were published collectively, the royal missionaries had been despatched to all the protected states and tribes

---

१. Theogony of the Hindus p. 100.

२. Tod's Rajasthan Vol II p. 605.

३. Indian Wisdom p 68.

४. Sanskrit Literature p 420.

५. The Unknown Libe of Jesus Christ, translated from a manuscript discovered in a monastery of Tibet by the Russian explorer, Lutovitch. इत्येतस्मिन् ख्रीष्टस्य द्वादशवर्षादारभ्य भारतागमनं वेर्णितम्, बहुषु नगरेषु भ्रमणं दानं विद्वत्केन्द्रेषु विद्वद्भ्यो दानार्जनं च सम्यगुपवर्णितम् । परवर्तिग्रन्थेऽपि भारतीयदर्शनादीनां प्रभाव ख्रीष्टधर्मे समभवत् ।

on the frontiers of the empire, Ceylon and to the Hellenistic monarchies of Syria, Egypt, Cyrene, Macedonia and Epirus ... ... The missionary organisation thus embraced three continents— Asia, Africa, and Europe.[१]

पुरा मध्येशियाभूभागे काचित् समृद्धिशालिनी संस्कृतिर्विकसिता बभूव। भारतीय-संस्कृत्या सह तस्या आदान-प्रदानं विनिवेदयन् रूसदेशीयो विद्वान् स्मेरिगटको पुरस्करोति—The people of Soviet Central Asia now remember the age-old cultural ties that bound them with the people of great India, ties which live on in the numerous forms of people's architecture, music and in everyday life They remember that their ancient national culture not only drew upon the treasure house of Indian art, but in turn enriched it with the forms of their own monumental architecture, with the methods and technique of their brilliant miniature painting and poetry

पारसीकदेशमधिकृत्य ह्वेनसांगोऽलिखत्—अत्र हिन्दुधर्मावलम्बिनः प्राय सर्वेषु नगरेषु स्वधर्मानुसारं जीवनयापनं कुर्वन्ति।[२] तत्र ख्वाजापर्वतस्योपरि बौद्धचैत्यानामवशेषा वर्तन्ते। बौद्धधर्मस्य प्रचार इस्लामधर्मस्य प्रवर्तनात् प्राक् कास्पियनसमुद्रतटादारभ्य जापानपर्यन्तं सर्वत्रासीत्।

चीने बौद्धधर्मं

भारतीयसंस्कृतिविशेषतो बौद्धधर्मं ख्रीष्टाब्दसंवत्सरात् प्रागेव चीनदेशं प्राकाशयत्।[३] अगणितचीनदेशवासिनो विद्वांस उत्साहपूर्वकं बह्वादिबाधानुपेक्ष्य भारते समागताः। ते नेपाल-स्याम-चम्पादिप्रान्तेषु निवसन्तो भारतीया संस्कृतिं स्वीकृतवन्त। अधिकांशेन भारतीयबौद्धास्तत्र गताः।

चीनदेशाद् बौद्धधर्मानुयायिनो गणनातीता जना भारतमागत्य बौद्धविहारेष्वधीत्य बौद्धतीर्थयात्रां विधाय च प्रत्यागमनकाले बौद्धग्रन्थान् मूर्तीश्च नीत्वा कृतकृत्या अभूवन्। प्रथमं तावत् ख्रीष्टात् प्राक् तृतीये शतके अष्टादश चीनदेशीया भारतं समागताः। तत्पश्चात् कश्यप, मातङ्ग, धर्मरत्नश्च ख्रीष्टस्य पश्चात् ६८ संवत्सरे चीनं गत्वा तत्र पञ्च-ग्रन्थान् रचयामासुः। पश्चात् बौद्धधर्मस्य महापण्डितः कश्चित् पारसीको राजकुमारो भारतीयबौद्धपण्डितानां साहाय्येन कतिपयपालिग्रन्थान् संस्कृतेनानूदितवान्। स बहून् चैन-

१. Early History of India Vol I p 194
२. Beal : Buddhist Records Vol II.
३ भारतम् नवमे ? इति स्वस्तम्।

विदुषोऽनुवादकर्मं प्रारभ्यत। तत परं भारतीयानां चीनगमनं बहुशो बभूव। तेषु कुमारजीव प्रख्याततमो बभूव। स चतुर्थशतके बन्दिरूपेण चीनदेशं प्रापित.। तत्र स द्वादशवर्षं शतप्रायान् ग्रन्थान् चीनभाषयानूदितवान्।[1] स ४१३ खीष्टसंवत्सरे पञ्चत्व गत, किन्तु तस्य सहयोगिन पुण्यत्रात, बुद्धयश, धर्मयशाश्च ४१७ खीष्टसंवत्सर-पर्यन्तमनुवादकर्मणि प्रवृत्ता बभूवु।

खीष्टस्य पञ्चमशतके भारतीयाना बहवो यतयश्चीनदेशस्य नगरेषूद्रमयन्। तत्र काश्मीरस्य राजकुमारो राजपद परित्यज्य चीनदेशाधिपेनामन्त्रित ४३१ खीष्टसंवत्सरे नानकिङ्गनगरमुपेतवान्। एकस्मिन्नेव वर्षे स एकादशग्रन्थाननूदितवान्। सौराष्ट्र-निवासी धर्मगुप्त काबुलसमीपस्थे कपिशानगरे द्विवर्षमुषित्वा, पश्चात् पद्भ्यामेव कास-गरनगर गतवान्। स तत्रापि भूतिदीर्घमुषित्वा ५९० खीष्टसंवत्सरे चीनं गतवान्। धर्मगुप्त बहूना ग्रन्थानामनुवाद कृतवान्। तस्य कस्मिंश्चित् मौलिकग्रन्थे परिचितदेशाना विवरण तत्रत्यभूमि-प्राकृतिक-परिवेश-गृहसामाज-शासन-भोजन-वस्त्र-शिक्षादिप्रकरणान्य-धिकृत्य निबद्धम्। चरवनिपुणे खीष्टस्य पश्चात् सप्तमशतकपर्यन्त जिज्ञासुना धर्मप्रचार-काणा च चीनगमनागमन प्राचलत्। षष्ठशतके प्राय ३००० बौद्धभिक्षव, १०,००० भारतीयकुटुम्बानि च चीनदेशस्य लोयाङ्गप्रान्ते उषितवन्त। बहून् ग्रन्थानपि ते पण्डिता-श्चीन नीत्वा तत्र ताननूदितवन्त।[2] चीनभाषया मौलिकग्रन्थास्तैर्विरचिता.।

चीनदेशात् गुप्तयुगे बहवो धर्मजिज्ञासवो भारते समागता। तथा हि खीष्टस्य पश्चात् तृतीयशतके विंशतिर्बौद्धश्रमणाश्चीनाद् भारते आगच्छन्। गुप्तवंशस्य कश्चित् महाराजो बोधगयासमीपे चीनश्रमणेभ्यो विहार रचयामास। चीनदेशादागतेषु यात्रिषु फाह्यान-ह्वेनसाङ्ग-इत्सिङ्गादय मुख्यतमा आसन्।

खीष्टात् पश्चात् चतुर्थशतके फाह्यानो भारतमाजगाम। चीनदेशात् प्रस्थानकाले तस्याचार्य कुमारजीव उपदिदेश "त्वया भारतीया संस्कृति सम्यगध्येया। येन चीनदेशे भारतस्य सन्देश प्रसारयितु समर्थो भवे। त्वया न केवलं धर्म एवाध्येतव्य" इति। फाह्यान स्थलमार्गेण भारते समागत्य पाटलिपुत्रस्य विश्वविद्यालयेऽधीत्य पर्यटन कृत्वा ४१४ संवत्सरे जलमार्गेण चीन गतवान्। स भारतयात्रावर्णनं निबद्धवान्। चीनदेशे समग्रेऽपि बौद्धधर्मस्य प्रचार एव तस्य यात्राया प्रमुखमुद्देश्यमासीत्।

ह्वेनसाङ्गो हर्षवर्धनस्य शासनकाले सप्तमे शतके भारतवर्षमाययौ। काश्मीरत आरभ्य

---

1. कुमारजीवस्य पिता कुमारायणो भारतीय आसीत्। स एशियामहाद्वीपस्य मध्यभागे स्थिता कुचीराज-वंशस्य गुरुरभवत्। तेन जीवा राजकन्या परिणीता तयो कुमारजीव उत्पन्नः। कुमारजीव काश्मीरदेशेऽधीत्य पुन कुचीदेशे [illegible] विशविद्यालये [illegible]। [illegible] दूरदेशेभ्यो विद्यार्थिन. समागता।
2. [illegible] पुस्तकालये धर्मदर्शन[illegible] ८००० ग्रन्था सन्ति।

नालन्दापर्यन्तं सोऽनेकविद्यालयेषु धर्मदर्शनादीनां ग्रन्थानधीत्य नालन्दाविश्वविद्यालयस्योप-कुलपतिपदमप्यलमकरोत्। भारतस्य प्रायः सर्वेषु भागेषु स धर्मजिज्ञासया पर्यटत्। तस्य भारतयात्रावर्णनमतीव विशदं वर्तते। चीनगमनकाले सोऽनेकान् ग्रन्थानेव परमधनमत्वानयत् चीनीभाषयानूदितवांश्च।

इत्सिंगमहोदयः ६७१ संवत्सरे भारतं समागत्य नालन्दाविश्वविद्यालयेऽधीत्य भारत-पर्यटनविषयकं ग्रन्थं रचितवान्। स ४०० ग्रन्थान् चीनदेशेऽनयत्। तेन चीनीसंस्कृत-भाषापरमरोऽभिधानग्रन्थः प्रणीतः। अनेन ग्रन्थेन चीनदेशवासिनां संस्कृताध्ययनं सुगमं जातम्।

चीने बौद्धधर्मस्य दशविधाभिनवशाखाः प्रस्फुटिताः। तत्र खीष्टस्य तृतीयशतके हरि-वर्मणा प्रतिष्ठापिते सत्यसिद्धसम्प्रदाये हीनयानमहायानयोः शून्यवादस्य च समन्वयो बभूव।

तिब्बत-(त्रिविष्टप-)देशे बौद्धधर्मस्य प्रथमप्रसारः खीष्टस्य सप्तमे शतके बभूव। अष्टमशतके राज्ञा निमन्त्रिता वज्रविहारप्रदेशतो भिक्षवस्तत्र गताः। तिब्बतीया लिपि-र्भारतीयां लिपिमनुसृत्य निर्मिता। नालन्दाविश्वविद्यालयस्य आचार्यः शान्तरक्षितो राज्ञा निमन्त्रितः तिब्बतदेशे परं पूजितोऽभवत्। राजा तम् 'आचार्यबोधिसत्त्व' इत्युपाधिना विभूषयाञ्चकार। स्वदेशस्य महोपाध्यायपदे प्रतिष्ठापितवांश्च। तदनुसारं तिब्बतप्रदेशे लामासम्प्रदायः प्रवर्तितः। पश्चात् चीनदेशस्य कस्यचिद् भिक्षोः प्रतिवादार्थं मगधस्य श्रेष्ठदार्शनिकः कमलशीलो राज्ञामन्त्रितः तिब्बतं गतवान्। नवमशतके वज्रविहारप्रदेश-योर्बहवो महापण्डिता रल्पचनेन राज्ञा निमन्त्रिताः तिब्बतं गतवन्तः। राजाऽत्यन्तधार्मि-कोऽभवत्। स धर्मग्रन्थानां संस्कृतभाषातः तिब्बतभाषायामनुवादं कारितवान्। परवर्ति-युगे एकादशशतके वङ्गदेशस्य महापण्डितोऽतिशो दीपङ्करो वा तिब्बते बौद्धधर्मस्य पुनरु-त्थानमकरोत्। तत्र गमनात् प्रागेव दीपङ्करः सुवर्णद्वीपस्य च प्रशीतं पादपद्मे द्वादशव-त्सरमधीत्य स्वपाण्डित्यं परिणमितवान्। ततः श्रीलङ्कादेशमार्गेण पुनर्भारतमागतवान्। स विक्रमशिलाविश्वविद्यालयस्य कुलपतिर्बभूव। तस्मिन् युगे तिब्बतप्रदेशस्य राजा स्वदेशस्य धर्मदशां दृष्ट्वा २१ भिक्षून् भारतं प्रेषयामास। तेषु भिक्षुषु १९ भारते मृताः, शेषौ द्वौ ११ भारतीयभिक्षुभिः सह प्रत्यावर्तिताः। तैर्भिक्षुभिः प्रशंसितो दीपङ्करो राज्ञा परं निमन्त्रणीयोऽमन्यत। दीपङ्करः तिब्बतं गन्तुमनिच्छन्नपि पुनः पुनः प्रार्थ्यमानः तत्र गत-वान्। स १३ संवत्सरान् तिब्बते पर्यटन् बौद्धधर्मस्य प्रचारं कृतवान्। दीपङ्करेण रचितेषु ग्रन्थेषु २५ ग्रन्थाः सुरक्षिताः। तस्य शतशायाणि धार्मिकव्याख्यानानि समासादितानि।

अनल्पा एव भारतीयविद्वांसः तिब्बतं गत्वा तत्र भारतीयसंस्कृतेः प्रचारं कृतवन्तः। तैर्विद्वद्भी रचिता ग्रन्थाः—'केन्ग्यूर-तेन्ग्यूरौ' इति संगृहीतौ प्रख्यातौ। तेषु ग्रन्थेषु बहवः ईदृशा अपि सन्ति, येषां मूलग्रन्थः भारते न विद्यते। भारतात् पुनरपि तेषां स्वदेशे समाग-मेनास्मान् बहु मन्यन्ते।

## कोरियाजापानयोः बौद्धधर्मः

भारतीयसंस्कृतिश्चीनतः कोरियाजापानयोः प्रसारिता । अष्टमशताब्दादारभ्य जापाने बौद्धधर्मस्य 'तेन्दई—केगोन—शिङ्गोन—जोदो—निचिरेन—जेन' शाखाः प्रस्फुटिताः । इमाः शाखाः महायान-सम्प्रदायस्य कतिपयप्रमुखान् ग्रन्थानाश्रित्य स्थानीयस्थितेरनुकूलाः विकसिताः । कतिपयशाखाः प्रथमं चीनदेशे आविर्भूताः, पश्चात् जापाने प्रसृताः ।

## पूर्वद्वीपेषु भारतीयो धर्मः

एशियामहाद्वीपस्यैते पूर्वद्वीपाश्चीनभारतयोर्मध्ये वर्तन्ते । अतः तेषु देशेषु उभयदेशयोः प्रभावः लक्ष्यते । पुरा ख्रीष्टाब्दस्यारम्भतो मलय-कम्बोडिया (कम्बुज)—अनम (चम्पा)-प्रायद्वीपेषु यव-सुवर्णद्वीप-बालिद्वीपेषु भारतानां राज्यानि स्थापितानि । तेषु राज्येषु भारतीयसंस्कृतिः सहजमेव प्रसृता बभूव । तत्र कतिपयप्रदेशेषु भारतीयवर्णव्यवस्थानुसारं सामाजिकसंघटनं बभूव । अद्यापि पूर्वकालीनसंस्कृतेः आभासः क्वचित् शुद्धभारतीयसंस्थानानां स्वीकरणेन प्रत्यक्ष एव । तथा हि स्यामप्रदेशेऽधुनापि राज्याभिषेको भारतीयविधिमनुसृत्य संस्कृतमन्त्रोच्चारैः सह सम्पाद्यते । राजा समीपवर्तिजनान् वैदिकरीतिमनुसृत्य सम्बोधयति । तेषु प्रदेशेषु पुरा बहवः भारतीयाः वसन्ति स्म । कम्बाङ्कोरे—श्रीविजयादिस्थानेषु संस्कृतशिक्षायाः बहूनि केन्द्राणि प्रादुर्भूतानि । यवबालिद्वीपयोर्धार्मिककर्मकाण्डविषयेऽधुनापि भारतीया एव प्रतिभान्ति ।[1] ब्रह्मविष्णुशिवादीनां बहूनि मन्दिराणि तेषु प्रदेशेष्वद्यावधि वर्तन्ते । शिवस्य कुटुम्बं विष्णोः कुटुम्बमवताराः दिक्पालादयश्च तत्र मूर्तीकृतानि ।

## शिवपूजा

मिस्रदेशे असीरिसनाम्ना शिवस्य पूजाभवत् । असीरिसस्य पत्नी आइसीसदेवी पार्वतीसमा विद्यते । यूनान ( ग्रीस ) देशे लिङ्गपूजायाः प्रचलनमासीत् । तत्रत्य डियोनैसस इति स्वामी एव शिवसदृशोऽभवत् । स्केण्डीनेविया-देशे 'ईश' शिव एव । तत्र ईशा शिवाख्या वर्तते । ईशीशपूजा तत्र हरगौरीपूजेति प्रतिभासते । कोरियादेशे वृषारोहिणः (शिवस्य) देवस्य सिंहवाहिन्या देव्याश्च पूजा १४०० ई० पू० कालेऽभवत् । मुद्रासु तथा प्रतिरूपमुट्टङ्कितमासीत्पुरा ।

मध्येशियाप्रदेशे शिवोपासना प्रचलितासीत् । 'पॅजिकेन्ट' स्थाने नीलकण्ठशिवस्य नर्तनमुद्रायाः चित्राणि प्राप्तानि सन्ति । शिवस्तु त्रिशूलधरोऽजिनपरिधानश्च चित्रितः ।

---

1. Here ( Bali ) together with the Brahmanical religion is still preserved the ancient forms of Hindu municipal polity. Sir Stamford Raffles Description of Java Vol. II Appendix

बालिद्वीपे [illegible] सन्ति । [illegible]

तत्रैव भारतीयशैल्यनुसारिणीनां नर्तकीनां हस्तिनां च बहूनि चित्राणि प्राप्तानि सन्ति। एतस्मिन्प्रदेशे बुखारातो द्वादशक्रोशान्तरे वरक्षेति ख्याते पुरातननगरेऽष्टमशतके ऐखशीये निर्मितस्य प्रासादस्य भित्तिचित्रावली भारतीयशैलीमनुसरन्ति अश्व-चित्रक-शार्दूल-मृगादीनां प्रतिरूपाणि राजन्ते। तत्रैव हस्तिपृष्ठारोहिणा मृगयादृश्यमपि चित्रितम्। तत्र कतिपयनगरेषु बौद्धचैत्यविहारा ख्रीष्टस्याष्टमशतके निर्मिताः। तेषु बौद्धसङ्घविषयाणि चित्राणि मूर्तयश्च भग्नावस्थायां विद्यन्ते। खोरेज्मनगरस्य दुर्गे सरस्वती-विष्णु-शिवादीनां वैदिकदेवानां मूर्तरूपाणि प्राप्तानि सन्ति।

## राजनीतिकः सम्बन्ध

### राज्यप्रसार उपनिवेशाश्च

ख्रीष्टात् प्राक् षष्ठशतके पारसीकानां राज्यं भूमध्यसागरात् पञ्चनदप्रदेशपर्यन्तं विस्तृतमासीत्। तस्मिन्नेव युगे भारतीयाः सैनिकाः पारसीकदेशवासिभिः ग्रीसदेशं गत्वा युद्धे समाजो बभूवुः।[1] परवर्तियुगे अलक्षेन्द्रः पारसीकान् पराजित्य ग्रीकसाम्राज्यं पञ्चनदप्रदेशपर्यन्तं विस्तारितवान्। तत पश्चात् मौर्यचन्द्रगुप्तो भारतीयसाम्राज्यं काबुल-कन्दहार-हिरातादिपर्यन्तं विस्तारितवान्। अनेन प्रकरणेन स्पष्टं प्रतिभाति यत् राजनीतिकक्षेत्रे पश्चिमोत्तरं भारतं प्राचीनयुगे वैदेशिकैः सह सम्बद्धमभवत्।

सीरियाप्रदेशस्य लेखक जेनाबमहोदय प्रमाणयति यत् द्वौ भारतीयसामन्तौ आरमीनियाप्रदेशे ख्रीष्टस्य प्राक् द्वितीयशतकेऽनुयायिभिः सह समायातौ। तत्र राजा ताभ्यां फरातनद्यास्तटे तारूनप्रदेशे भूमिभागं जीविकोपार्जनाय प्रदत्तवान्। तत्र तौ नगरमेकमुपनिवेशितवन्तौ स्वदेशीयपूजापरम्परां विधातुं च कृष्णमूर्तिनिर्माणं कारयामासतुः। ख्रीष्टस्य पश्चात् चतुर्थशतकस्य प्रारम्भिकभागे सण्टग्रेगोरीति ख्यातः ख्रीष्टमूर्तिविध्वंसकः तत्राक्रमणं कृत्वा मन्दिराणि ध्वंसयित्वा तेषां स्थाने 'चर्चम्' निर्मापितवानिति भारतीयोपनिवेशानामपि रोमाञ्चकरमेकं वृत्तमुद्घाटयति।

सुदूरप्राचीनकाले भारतीयानामुपनिवेशाश्चीनतो भारतं गमनागमनयोर्मार्गेषु प्रतिष्ठापिता बभूवुः। तत्र अपरवर्माप्रदेशे, इरावतीसाल्वीनमेकाङ्गादीनां नदीनामुपत्यकासु बहवोपनिवेशा अवर्तन्त। कतिपयोपनिवेशेषु भारतीयानां राजशासनमासीत्। इण्डोचाइना-प्रदेशस्य मध्यभागेऽपि तादृशाः कतिपयोपनिवेशाः कारिताः।

---

१. डॉ० इर्वे का ग्रन्थ The Serian Gods

२. [illegible] १११(।

## कम्बुजसाम्राज्यम्

भारतीयराज्यानां प्रथमावस्थितिर्मलयकम्बोडिया (कम्बुज)—असमप्रदेशेषु जावा-सुमात्रा-बोर्नियो बालिद्वीपेषु चाभवत्। कम्बोडिया तथा मलयप्रायद्वीपं पुरा विशाल-राज्यानां केन्द्रं बभूवतु।

कम्बोडियाराज्यस्य प्रसारः कम्बोडिया परितः कोचीनचीन-मेनाङ्गोपत्यकापर्यन्त-मासीत्। कम्बोडियाप्रदेशे प्रथमं तावत् स्त्रीराज्यमासीत्। तदार्धसभ्या जना परिधानं न गृह्णन्ति स्म।

खीष्टस्य पंचमशतकस्य प्रारम्भिकयुगे कश्चिद् भारतीयब्राह्मणः कौण्डिन्य इति ख्यातस्तत्र समागतः। स प्रजाभीः राजपदे निर्वाचितः। कौण्डिन्यस्य सांस्कृतिकप्रतिभा समुज्ज्वलाऽसीत्। अचिरमेव तेन तस्मिन् महाराज्ये भारतानुरूप-धर्मव्यवस्था-जीवन-विन्यास-शिल्पादीनि च प्रचारयामास। तस्मिन् कौण्डिन्यवंशे जयवर्मा प्रख्यातो बभूव। तस्य राजदूतो नागसेनश्चीनसम्राजः प्रशस्तिं विदधानो महेश्वरबुद्धादीनां माहात्म्यमुप-वर्णयन् काव्यं रचयामास। ५१४ खीष्टसंवत्सरे जयवर्मणि पंचत्वं गते रुद्रवर्मा राजा बभूव। तस्य प्रणिधयः ५१७–५३९ खीष्टसंवत्सरान्तराले षट्कृत्वश्चीनसम्राज-मुपजग्मुः।

सप्तमशतके रुद्रवर्माणं पराजित्य चित्रसेनः कम्बुजप्रदेशे साम्राज्यं प्रसारितवान्। तस्य वंशजा सप्तशतवर्षाणि राज्यं चक्रुः। पूर्वतोऽन्नमराजेन पश्चिमतः स्यामदेशवासिभिश्चा-क्रान्तं कम्बुजराज्यं पञ्चदशशतके विघटितमेव।

कम्बुजदेशस्य सप्तमशतकस्यैव शिलोत्कीर्णलेखे महाराजसोमशर्मणः प्रदत्तानां रामायण-महाभारत-पुराणादीनां प्रतिदिनं पारायणस्यायोजनमुपवर्णितम्।[1]

## श्रीविजयसाम्राज्यम्

श्रीविजयसाम्राज्यस्य संवर्धनं शैलेन्द्रवंशीयैः राजभिः कृतम्।[2] शैलेन्द्राणां प्रादुर्भावो मलयप्रायद्वीपे ७७५ खीष्टाब्दे बभूव। शीघ्रमेव समग्रं मलयप्रायद्वीपं सुमात्रा-जावा च साम्राज्ये समन्वितानि।

शैलेन्द्राणां दौत्यसम्बन्धाश्चीनराजैः भारतीयराजैश्च सह समुदभवन्। दशमे शतके शैलेन्द्राणां राजधानीतो दश प्रणिधयश्चीने प्रेषिताः। कतिपयप्रणिधयो भारते पालानां चोलानां च राजसभासु समागताः।

---

१. Indian Antiquary XVII 3; M. A. Barth's Review of Inscriptions Sanskrites Der Combodge

२. शैलेन्द्रा [illegible] कलिङ्गदेशात् [illegible] च अगुः।

## कम्बुजसाम्राज्यम्

भारतीयराज्यानां प्रथमावस्थितिर्मलयकम्बोडिया ( कम्बुज )—अन्नमप्रदेशेषु जावा-सुमात्रा-बोर्नियो बालिद्वीपेषु चाभवत् । कम्बोडिया तथा मलयप्रायद्वीपं पुरा विशाल-राज्यानां केन्द्रं बभूवतु ।

कम्बोडियाराज्यस्य प्रसारः कम्बोडिया परितः कोचीनचीन-मेकाङ्गोपत्यकापर्यन्त-मासीत् । कम्बोडियाप्रदेशे प्रथमं तावत् स्त्रीराज्यमासीत् । तदार्धसभ्या जना परिधानं न गृह्णन्ति स्म ।

खीष्टस्य पञ्चमशतकस्य प्रारम्भिकयुगे कश्चिद् भारतीयब्राह्मणः कौण्डिन्य इति ख्यातस्तत्र समागतः । स प्रजाभी राजपदे निर्वाचितः । कौण्डिन्यस्य सांस्कृतिकप्रतिभा समुज्ज्वलाऽऽसीत् । अचिरमेव तेन तस्मिन् महाराज्ये भारतानुरूप-धर्मव्यवस्था-जीवन-विन्यास-शिल्पादीनि च प्रचारयामास । तस्मिन् कौण्डिन्यवंशे जयवर्मा प्रख्यातो बभूव । तस्य राजदूतो नागसेनश्चीनसम्राजः प्रशस्ति विदधानो महेश्वरबुद्धादीनां माहात्म्यमुप-वर्णयन् काव्यं रचयामास । ५१४ खीष्टसंवत्सरे जयवर्मणि पंचत्वं गते रुद्रवर्मा राजा बभूव । तस्य प्रणिधयः ५१७–५३९ खीष्टसंवत्सरान्तराले पट्कृत्वश्चीनसम्राज-मुपजग्मुः ।

सप्तमशतके रुद्रवर्माणं पराजित्य चित्रसेनः कम्बुजप्रदेशे साम्राज्यं प्रसारितवान् । तस्य वंशजाः सप्तशतवर्षाणि राज्यं चक्रुः । पूर्वतोऽन्नमराजेन पश्चिमतः स्यामदेशवासिभिश्चा-क्रान्तं कम्बुजराज्यं पञ्चदशशतके विघटितमेव ।

कम्बुजदेशस्य सप्तमशतकस्यैकस्मिन्नुत्कीर्णलेखे महाराजसोमशर्मणा प्रदत्तानां रामा-यण-महाभारत-पुराणादीनां प्रतिदिनं पारायणस्यायोजनमुपवर्णितम् ।[1]

## श्रीविजयसाम्राज्यम्

श्रीविजयसाम्राज्यस्य संवर्धनं शैलेन्द्रवंशीयै राजभिः कृतम् ।[2] शैलेन्द्राणां प्रादुर्भावो मलयप्रायद्वीपे ७७५ खीष्टाब्दे बभूव । शीघ्रमेव समग्रं मलयप्रायद्वीपं सुमात्रा-जावा च साम्राज्ये समन्वितानि ।

शैलेन्द्राणां मैत्र्यसम्बन्धश्चीनराजैः भारतीयराजैश्च सह समुदभवत् । दशमे शतके शैलेन्द्राणां राजधानीतो दश प्रणिधयश्चीने प्रेषिताः । कतिपयप्रणिधयो भारते पालानां चोलानां च राजसभासु समागताः ।

---

१. Indian Antiquary XVII 3 | M. A. Barth's Review of Inscriptions Sanskrites Der Combodge

२ शैलेन्द्रा सम्भवतः कलिङ्गप्रदेशात् प्रथमं वर्मादेशं ततो मलयदेशं च जग्मुः ।

शैलेन्द्रराजानां भारतस्य सांस्कृतिकप्रभावो रुचिकरोऽभूत्। तथा हि तेषां कतिपय-गुरवो भारतेभ्यः समानीताः। सुवर्णभूमेः शैलेन्द्रवंशीयो राजा बालपुत्रदेवो नालन्दायां विहारं प्रतिष्ठापयामास। तस्य कृते गौडराजेन देवपालेनोपराजगृहं पंचग्रामाणां दानं कारितवांश्च। नालन्दायामाधुनिकयुगे प्राप्तासु मूर्तिषु बह्व्यो जावाद्वीपादानीता एव प्रतिभान्ति।

शैलेन्द्रराजश्चूडामणिवर्मा स्वनाम्नाभिख्यातं विहारमेकं नागपत्तने ( दक्षिणभारते ) निर्मापितवान्। चोलराजो राजराजः १००५ ख्रीष्टाब्दे कस्यचिद् ग्रामस्यापणं तस्य विहारस्य सुरक्षाव्यवस्थायै पारितवान्।

परवर्तियुगे चोलराजाः शैलेन्द्राणां शत्रवो बभूवुः। राजेन्द्रचोलो निकोबार-सुमात्रादीनां द्वीपानां विजयं सम्पादितवान्। किन्तु चोला पञ्चाशद्वर्षाणि शैलेन्द्राणां पराभवं कृत्वापि तेषां सुदूरप्रदेशेषु भारतवर्षस्य शासनप्रतिष्ठां कर्तुमसमर्था अभवन्। १०९० ख्रीष्टाब्दे द्वयो राजवंशयोः पुनरपि मैत्री बभूव। शैलेन्द्राणामभिनवा प्रगतिः प्रायः चतुःशतसमाः यावत् प्रावर्तत। त्रयोदशशतके ते लङ्काविजयं चक्रुः। वीरपाण्ड्यः दक्षिणभारतस्याधिपतिः शैलेन्द्राणां जयेन १२६४ ख्रीष्टाब्दे यशो लेभे। शैलेन्द्राणां राज्यं षट्शतवर्षाणि यावत् प्रावर्तत। तदिदं भारतीयानां वैदेशिकराज्यप्रसारस्यापूर्वा गाथा।

लघुराज्यानि

भारतीयानां राज्यानि मलयप्रायद्वीपे ख्रीष्टस्य प्रथमशतकादारभ्य पञ्चदशशतकपर्यन्तं प्रादुरभवन्। शैलेन्द्राणां शासनस्य पश्चात् पञ्चदशशतके तत्र मलक्कायानां राज्ञां शासनमासीत्। तदा कश्चिद्राजा मुसलमानस्त्रिया सह परिणीतः सन् न केवलं स्वयमेव मुसलमानो बभूव अपि तु मलयप्रायद्वीपे दूरतरेऽपि इस्लामप्रचारद्वारमुद्घाटयामास।

कम्बुजप्रदेशात् पूर्वदिग्भागे अन्नमप्रदेशे 'चम्पा' इति ख्यातं भारतीयानां राज्यमासीत्। ख्रीष्टस्य पश्चात् द्वितीयशतके चम्पायां श्रीमारस्याधिपत्यं बभूव। तस्मिन् प्रदेशे पञ्चदश-शतकपर्यन्तं पाण्डुरङ्ग-कौठार-विजय—कौठार—अमरावती-प्रदेशीयैः भारतीयराजैः शासनं प्रतिष्ठापितम्। अन्नामङ्गोलप्रभृतिराजैः पुनः पुनः प्रतिहतस्यापि चम्पाराज्यस्य गौरवम-क्षुण्णमेव सुरक्षितं तत्र यावत् बाहुल्ये। अन्तिमयुगेऽन्नमवासिभिः पादाक्रान्ता चम्पा स्वातन्त्र्यं भारतवर्षस्य त्यक्तवतीति प्रतिभासते। चम्पाप्रदेशस्य भारतीयसांस्कृतिकचरि-तानि शिलालेखानि चाद्यापि तदानीन्तनगौरवगाथां मन्दं स्मारयन्ति।

जावा ( यव ) द्वीपे भारतवर्षीयराज्यं ख्रीष्टस्य प्रथमशतके प्रतिष्ठापितम्। ख्रीष्टस्य द्वितीयशतके तत्रत्यो राजा देववर्मा चीनदेशे प्राणिधिं प्राहिणोत्। ख्रीष्टस्य पञ्चमशतके पूर्ण-वर्मा यवद्वीपस्य राजा बभूव। अष्टमशतके तत्र सञ्जय इति ख्यातः महापराक्रमी राजा समजायत। परवर्तियुगे यवद्वीपः शैलेन्द्रसाम्राज्ये समन्वितो बभूव। शैलेन्द्राणां विनिपातस्य

पश्चात् पुन यवद्वीपे क्रमश त्रयो भारतीयराजवंशा प्रादुर्भूता । तेषु विल्वतिक्तानां साम्राज्यं यवद्वीपाद् बहि सुदूरमपि प्रसृतं बभूव । विल्वतिक्तानामन्तिमराजः खीष्टस्य पचदशशतके भारतीयसंस्कृते सुरक्षार्थं युद्धं कुर्वाण एव बालिद्वीपे शरणं लेभे । बालिद्वीपेऽधुनाऽपि भारतीयवैदिकधर्म सुद्धवमरूपेण प्रकाशमानो प्रतिभासते ।

सुमात्राद्वीप मलययवद्वीपयोर्मध्ये स्थिते भारतचीनमार्गे महत्त्वपूर्णोऽभवत् । खीष्टाब्दत प्रागेव तत्र भारतानामुपनिवेशस्थापना बभूवेति प्रतिभाति । शैलेन्द्राणामाधिपत्यं सुमात्राया सुदीर्घकालिकमासीत् । तत्र श्रीविजयनगर राजधानीदृष्ट्या व्यापारमाहात्म्येन च प्रसिद्धमभवत । शैले द्राणा पश्चात तत्र तलयुवंशस्य राजा प्रभवोऽस्फुरत् । पचदशशतके समुद्रवंशीया राजानस्तत्र प्रतिष्ठिता बभूवु । परिवर्तितसमुद्रनामाधिकृत्य द्वीपोऽयं सुमात्रेति ख्यात ।

बोर्नियोद्वीपे खीष्टाब्दस्य पश्चात पचमशतके भारताना सुसमृद्ध राज्यं प्रादुर्भूतम् । तदा मूलवर्मेति ख्यातो महाराजोऽभवत् । मूलवर्मणश्चत्वार उत्कीर्णलेखा प्राप्यन्ते । चतुर्दशशतकपर्यन्त बोर्नियोद्वीपे भारतानामाधिपत्यं बभूव ।

बालिद्वीपे सुदूरप्राचीनयुगे भारताना राज्य बभूव । पश्चाद्युगे तत्र यवद्वीपस्य राजनीतिकाधिपत्यं प्रसृतम् । भारतीय यवद्वीपस्य राजा तत्रैव शरणं लेभे इति प्रागेव वर्णितम् ।

भारताना व्यापारिणामुपनिवेशा सुदूरप्राचीनयुगे अफ्रीकामहाद्वीपस्य मिसर-इथियोपिआ अबीसीनियाप्रदेशेषु प्रतिष्ठिता । चीन तिब्बत मध्य एशियादिभूभागेषु विदुषा धर्मप्रचारकाणां चावस्थिति प्रागेवोपवर्णिता ।

## दौत्यसम्बन्धाः

भारतीयराजाना वैदेशिकराजै सह दौत्यसम्बन्धपरम्परा प्राय सदैव प्रावर्तत । प्रथम तावत मौर्यराजाना ग्रीकराजै सह दौत्यसम्बन्ध प्रख्यात एव । चन्द्रगुप्तस्य राजपरिषदि मैगस्थनीज इति ख्यातस्य राजदूतस्य महत्त्वपूर्णं पदमासीत् । तत पर बिन्दुसारस्य राज्यपरिषद ग्रीकदूत अपनीसियसोऽलचार । अशोकस्य दौत्यसम्बन्धा वैदेशिकराजै सह मैत्रीसस्थापनार्थ बभूव । अशोकस्य धर्मदूता पश्चिमैशियायां, मिसरे, योरपे च पर्यटन चक्रु । रोमराजाना टाजनस्य ( ९८ ११७ खीष्टाब्दम ) हैड्रियनस्य ( ११८-१३८ खीष्टाब्दम् ) अण्टोनियसस्य ( १३८ १६१ खीष्टाब्दम ) हलिओगबलसस्य ( २१८-२२२ खीष्टाब्दम ) आरलियनस्य ( २७० २७५ खीष्टाब्दम ), कास्टैंटाइनस्य ( ३२३ ३५३ खीष्टाब्दम ) जलियनस्य ( ३६१ ३६३ खीष्टाब्दम ) समीपं भारतीयप्रणिधीना

समागम सुप्रमाणित । ख्रीष्टाब्दात् प्राक् प्रथमे शतके विदिशायां ग्रीको हेलियोदोरो राजदूतो बभूव ।[१]

ह्वेनसागस्य प्रभावेण हर्षः चीनराजस्य तागस्य समीपं दूतं प्राहिणोत् । मुहम्मद-तुगलकः इब्नबतूता चीनदेशे स्वप्रणिधिं कृत्वा प्रेषितवान् ।

दक्षिणभारतस्य चालुक्यवंशीया राजानः पारसीकराजानां समीपं दूतान् प्रेषितवन्तः । कस्यचित् दौत्यसम्बन्धोऽजन्ता-गुफाचित्रेष्वद्यापि अमरीकृतः । १०७७ ख्रीष्टसंवत्सरे कुलोत्तुङ्गः प्रथमः चीनराजस्य समीपं व्यापारिकप्रतिनिधिमण्डलं प्रेषितवान् । मण्डलेन बहुभिर्बहुमूल्योपहारवस्तुभिश्चीनराजस्य परितोषः कृतः ।

## उपहाराः

मौर्यवंशीयानां राज्ञामुपहाराः सुपरिचिता एव । बिन्दुसारः सेल्यूकस ग्रीकदेशोद्भवां मदिरां द्राक्षां च प्रार्थितवान् । तस्माद्देशात् दार्शनिकस्योपहारमपि सोऽभिलषितवान् । प्रथमे द्वे वस्तुनी स प्राप्तवान् । सम्राजाशोकेन विदेशनृपेभ्यः अनेकेषां बहुमूल्योपहाराः प्रेषिताः । ख्रीष्टात् प्राक् २१ संवत्सरे रोमसम्राजः आगस्टसमहाभागस्याभिषेकोत्सवे भारतीयविप्रवर्यस्य नाट्यमञ्चे प्रदर्शनं कृतम् । असौ चित्रकः उपहारद्वारा प्राप्तः ।

स्त्रीष्टाब्दस्यारम्भिकयुगे वाणमग इति चीनदेशस्य राज्ञा काश्मीरराजाय स्वदेशस्य बहुमूल्यानि बहूनि वस्तूनि प्रेषितानि । चीनराजस्याभीष्टो गण्डकः काश्मीरराजेन प्रत्युपहारितः । ख्रीष्टस्य पश्चात् द्वितीयशतके सिन्धुवासिभिश्चीनराजाय बहुमूल्योपहारः प्रेषितः ।

ह्वेनसागस्य भारतीयमित्रैः सह पत्रव्यवहारोऽभवत् । स्थविरदेवस्तस्मै वस्त्रयुग्मेन सह पत्रं प्रेषितवान् । ह्वेनसागः प्रज्ञदेवाय उपहारं प्रेषितवान्, कतिपयग्रन्थानां याचनां कृतवांश्च । तस्याभीष्टं सम्पादितम् ।

सौलङ्कस्य राजा चीनराजाय महाप्रज्ञापारमितासूत्रमिति ख्यातं ग्रन्थं प्रेषितवान् । उपहारेण सह विद्वन्मण्डलं चीने प्रेषितम् ।

१४१४ ख्रीष्टसंवत्सरे सैफुद्दीन इति ख्यातो भारतीयराजः अफ्रीकादेशात् प्राप्तं 'जुर्राफा' पशुं मिंगवंशीयाय चीनराजाय प्रेषितवान् ।

---

१ इदमधिकृत्य शिलालेखोऽयं वर्तते—
देवदेवस वासुदेवस गरुडध्वजे अयं कारिते इअ हेलिओदोरेण भागवतेन दियसपुत्रेण तखसिलाकेन योनदूतेन आगतेन महाराजस अंतलिकितस उपंता सकासं रञो कासीपुतस भागभद्रस त्रातारस वसेन चतुदसेन राजेन वधमानस ।

# साहित्यम्

भारतीयसाहित्यं जगति प्राचीनतममिति नि सन्दिग्धमेव । यत्र यत्र भारता गता-स्तत्र तत्र भारतीयसाहित्यमपि तै सह प्रचारितम्।[१] पुरा जगति भारतीयसाहित्यं क्वचि-दनुवादरूपेण, क्वचित् विशुद्धभारतीयभाषानुबद्धमेव क्वचित् छायारूपेण च परिव्याप्त बभूव । सस्कृत तु आर्या भाषास्ति ।

## पाश्चात्यदेशेषु व्यापकत्वम्

भारतीयकथासाहित्यस्य पाश्चात्यदेशेषु विशेषसमादरो बभूव । प्रथमं तत्र षष्ठशतके पारसीकदेशीयेन राज्ञा खुसरूनौशेरवामहोदयेन प्रेषित बरओयमहोदयो भारते समागत्य पचतन्त्रस्यानुवाद कृतवान् । ५७० खीष्टसवत्सरे बूद इति ख्यात सीरियादेशीयो विद्वान् मातृभाषाया पचतन्त्रस्यानुवाद कृतवान । तदनुसृत्य ७५० सवत्सरे अब्दुल्लाह्-इब्नुल-मौक्कफमहोदय अरबभाषाया पचतन्त्रस्यानुवाद कृतवान् । अयमेवारबदेशीयानुवादो योर-पीयभाषाभि पचतन्त्रस्यानुवादस्याधार ।

एकादशशतके पचतन्त्रस्यानुवाद ग्रीकभाषाया बभूव । तत पर १५८३ सवत्सरे इटलीप्रदेशस्य भाषाया लैटिनभाषाया जर्मनभाषाया स्लवभाषाया च पचतन्त्रस्यानुवादा सजाता । पचतन्त्रस्य हेब्रूभाषायामनुवाद सर्वत्र समादृतो बभूव । पचतन्त्रस्य परवर्ति-युगे जर्मनानुवादमनुसृत्य हालैण्ड-डेनमार्क-आइसलैण्डादीना भाषासु पुनरनुवादा कृता । पचतन्त्रस्य स्पेनभाषायामनुवाद ( १४९३ स० ) तत इटलीभाषाया ( १५४६ स० ), तत फ्रासभाषाया ( १५५६ स० ) चानुवादा बभूवु । इटलीभाषाया १५५२ खीष्ट-सवत्सरे पचतन्त्रस्य स्वतन्त्रानुवादो बभूव। तस्य प्रथमखण्डस्य १५७० खीष्टसवत्सरे टामसमहोदयेनानुवाद कृत ।

अनुवादानामपरा परम्पराऽरबदेशात एकादश-शतकादारब्धा । अरबभाषात पार-सीकभाषाया पचदशशतकेऽनुवादो बभूव । तस्य परिष्कार: फ्रासदेशेऽनुवादेन सप्तदशशतके प्रसृत । तत पर तस्यानुवाद आग्लभाषाया जर्मनभाषाया स्वीडिशभाषाया च बभूव । पारसीकानुवादस्यापरा परम्परा टर्की-जर्मनी-हगरी हालैण्डादीना भाषासु कालान्तरेऽनु-वादेन योरपीयदेशेषु प्रसृता । अपरेऽपि बहवोऽनुवादा सजाता । तेषा परम्परापि प्रसार-वती सजाता ।

शुकसप्ततिग्रन्थस्यानुवादपरम्परा योरोपीयदेशेषु प्रसृता बभूव । प्रथम पारसीक-भाषाया तस्या अनुवादश्चतुर्दशशतके बभूव । पारसीकानुवादत टर्कीभाषाया तस्या अनु-वाद सजात । पारसीकानुवादतो योरपीयभाषासु शुकसप्तते प्रचारोऽभवत् ।

---

१. अस्मिन्नेवाध्याये धार्मिकप्रसारप्रकरणे कतिपयभारतीयपुस्तकाना विदेशे प्रसारो वर्णित ।

उपर्युक्तपद्धत्या बहवो भारतीयकथा योरपीयदेशेषु लोकप्रचलिता बभूवु । तासु कथासु 'अरबियननाइट्स' इति प्रख्यातसाहित्य भारतादरबदेशे तत योरपीयमहाद्वीपे प्रसृतमिति सुविदितमेव ।

## पूर्वद्वीपसमूहे व्यापकत्वम्

पूर्वद्वीपसमूहे संस्कृतभाषायामुत्कीर्णलेखा गणनातीता सन्ति । तत्र कम्बुज चम्पा-प्रदेशयोर्लेखा कतिपयशतानि सन्ति । मलय यव-बोनियो-सुमात्रादिद्वीपेषु कतिपयलेखा प्राप्ता । इमे लेखा प्राय लघुकाय्या एव सन्ति । कतिपयेषु तेषु शतादधिका त्रिशत-पर्यन्ताश्च श्लोका विद्यन्ते । तेषा लेखकाना संस्कृतभाषाया प्रकामाधिकार प्रतिभाति ।[1] कतिपयभारतीयपण्डितास्तत्र गत्वा लेखान् विरचयामासु । अपरे तु बहवो जिज्ञासवो भारते समागत्य स्वपाण्डित्य परिपक्व चक्रु, पश्चात् स्वदेशेषु साहित्यकारा बभूवु ।

भारतीय-यवसाहित्य विशेषवर्णनामर्हति । तस्य साहित्यस्य वर्ण्यविषया भारतीया एव, तस्मिन् प्रयुक्तानि छन्दासि संस्कृतसमानि सन्ति । अपर च, साहित्ये संस्कृतशब्दानां श्लोकाना च समाहार समाहृत । तत्र महाभारतस्यानुवाद गद्येन कृता विशिष्ट एव वतत । रामायणीकथापि गद्येन निबद्धा । किन्तु भारतीयरामायणात् क्वचिद्भिन्ना वर्तते सा कथा । तत्र सीताया निर्वासन मृत्युर्वा न वर्णित । अपरे कतिपयवर्ण्यविषया पुराणे-तिहासेभ्यो गृहीता भारतीय-यवसाहित्ये उपनिबद्धा । तथा हि निवातकवचेनार्जुनस्य युद्धम्, कृष्णस्य रुक्मिणीहरणम्, मालापातेन इन्दुमतीमरणम्, कौरवपाण्डवयुद्धम्, शिवेन कामदहनम्, नरकासुरेणेन्द्रादीना पराजय , कार्तवीर्येण रावणस्य पराजय , समुद्रमन्थनम्, धृतनहुषयाविजय , कालयवनकथा, तिलोत्तमाया प्राप्तये सुन्दोपसुन्दयो युद्धम्, वासव-दत्तोदयनयो प्रणयकथा, सावित्रीसत्यवतो कथा—अपरे च तादृशा विषया कथासाहित्ये निबद्धा । अपर च भारतीय-साहित्यनिधि —पुराणेतिहासाधिकृता सृष्टिकथा , नीति-कथा , व्याकरणच्छन्द कोशायुर्वेदकामशास्त्रादि वर्णितम् । बालिदेशस्य भारतसम्बन्ध-मधिकृत्य रवीन्द्रनाथठक्कुरेण रोचककाव्य रचितम् ।

## अन्यदेशेषु व्यापकत्वम्

मेडागास्करप्रदेशस्य भाषा संस्कृतेन प्रभाविता वर्तते । चीनीतुर्किस्तानप्रदेशे स्रोतान-समीप ५०० गुहा वर्तन्ते । तत्र कस्याञ्चिन् गुहाया संस्कृतचीनीतिब्बतीभाषाणा ग्रन्था प्राप्ता । बौद्धधार्मिकसाहित्य विहाय तत्र दर्शनसाहित्येतिहासभूगोलादीनां विषयाणां ग्रन्था वर्तन्ते । इमानि पुस्तकानि ख्रीष्टाब्दस्य एकादशशतके विध्वंसकानामाक्रमणाद्रक्षितु गुहाया निगूहितानि । १९०० ख्रीष्टसवत्सरे वगताओ इति ख्यात चीनदेशीयो विद्वान्

१ कम्बोडिया—फिडायाइनदोसयार्लेक्सनकृता भारतीयशिष्यानुरूपा वर्तते । तन्मध्यमागेषु संस्कृतभाषा-तत्सदृशशब्दाना प्राचुर्यं वर्तते

तेषां पुस्तकानामुद्धारं कृतवान् । तत्र पुस्तकानां संख्या १५,००० प्रायो वर्तते । ३००० ग्रन्था मध्येशियायां ब्राह्मीलिप्या लिखिता वर्तन्ते ।[1] चीनदेशे ६६८ ख्रीष्टवत्सरे भारतीयकथानां विश्वकोशो रचितः । कोशेऽस्मिन् २०२ पुस्तकेभ्योऽसंख्याः कथाः सङ्गृहीताः । चीनदेशीयाः संस्कृतपालिभाषयोः पण्डितप्रकाण्डानि बभूवुः ।[2]

बौद्धभिक्षुर्बोधिसेन ७३६ ख्रीष्टवत्सरे जापानदेशीयेभ्यः पुरोहितेभ्यः संस्कृतभाषां शिक्षितवान् ।

## कला

भारतीयकलानां प्रसारः विदेशेषु सविशेषमेव बभूव । प्रथमं तावत् प्रायः ७० ख्रीष्टसंवत्सरे निर्मिता हस्तिदन्तमूर्तिर्लक्ष्मीप्रतीकेति पाम्पियाई नगरे प्राप्ता । सुमेरुप्रदेशस्य प्राचीनमन्दिराणां रचना तत्र पूजाविधानं च दक्षिणभारतसमं प्रतिभासते ।

चीनप्रदेशे तानहुअङ्गे युनकाङ्गे, लाङ्गमैन च भारतीयशैलीमनुसृत्य कारिता गुहा विद्यन्ते । तत्र बुद्धस्य विशालमूर्तयश्चित्राणि च विराजन्ते । पुरा भारतीयाः चीनदेशीयाश्च चीनगमनकाले भारतात् मूर्तीस्तासां चित्राणि च निन्युः ।[3]

तिब्बतप्रदेशस्य यात्रिणो भारतीयकलाकृतीः क्रीत्वा स्वदेशं निन्युः । तासु कतिपयाः बह्व्योऽधुनापि प्राप्यन्ते । तासु प्रमुखो बोधगयामन्दिरस्यादर्शो विद्यते । अजन्ता-कलानुरूपाणि बहूनि चित्रपटानि तिब्बतप्रदेशे विराजन्ते । भारतीयशैलीमनुकृत्य शताधिकाः कांस्यमूर्तयः तिब्बते विद्यन्ते । प्राचीनयुगस्य जापानदेशस्य चित्राणि भारतीयकलानुरूपाणि वर्तन्ते । खोतानप्रदेशस्य भित्तिषु कौशेयपटेषु च भारतीयशैलीमनुकृत्य चित्राणि रचितानि । मध्यएशियाभूभागे भारतीयवास्तुमूर्तिचित्रकलादीनां चरमविकासः ऐसवीये पष्ठशतकादारभ्याष्टमशतकं यावद् बभूव ।

पूर्वद्वीपसमूहस्य मूर्तिकला वास्तुकला च भारतीयां कलामनुसृत्य विकसिते । तत्रत्यकलायाः आदर्शो गुप्तयुगस्य भारतीय एव । 'अङ्कोरनगरस्य मन्दिराणि भारतीयपरम्परामतिशेरते' इति स्पष्टमेव विभाव्यते । तादृशानि वास्तूनि भारतेऽधुना न विद्यन्ते । कम्बोडियाप्रदेशे काश्मीरवास्तुकला विकसिता । तत्र भारतीयैः कारितानि मन्दिराणि सविशेषं कौशलं समाख्यापयन्ति । यवद्वीपे भारतीयदेवतानां मूर्तयोऽसंख्या एव विद्यन्ते । महिषासुरमर्दिन्या मूर्तेर्दश बाहवः कृताः । बोरोबुदुरनगरस्य मन्दिराणि तत्रत्यकलाकाराणां परमाश्चर्यंकरं चमत्कारं प्रमाणयन्ति । सर्वत्र दक्षिणभारतस्य द्राविडशैल्याः प्रभावः परिस्फुरति ।

---

१ खोतानप्रदेशे ख्रीष्टाब्दस्य तृतीयशतके संस्कृतभाषायाः प्रचारस्तत्र प्रदेशस्य सम्मेलनात्मके कृतः ।
२ चीनभाषायां संस्कृतध्वनीनां वर्णमालायाश्च निवेशनस्य प्रयत्नं तेन इति स्याज्जो लिपिं कृतवान्
३ फाहियानस्य मूर्तिनन्दनस्य वृत्तं सुविदितमेव ।

## सांस्कृतिकसंस्थाः

पुरा समग्रं भारतमेव जिज्ञासूनां कृते तीर्थमासीत् । भारतीयविश्वविद्यालयेषु शिक्षितुं सर्वेभ्यो देशेभ्यो दूरतोऽपि विद्यार्थिनः समागताः । भारतागमनमार्गेषु बहवः शिक्षणसंस्थाः पूर्वतः पश्चिमतश्चाजिगमिषूणां कृते समुत्थापिताः । तद्यथा चम्पा, अङ्कोर, श्रीविजय संस्कृतविद्यायाः केन्द्राणि बभूवुः । काशगरस्य विश्वविद्यालय प्रख्यात एवासीत् ।

चीनदेशे बह्व्यः संस्थाः भारतीयग्रन्थानामनुवादाय, चीनीभाषायां मौलिकग्रन्थानां प्रणयनाय च स्थापिताः । काचित् संस्था नवमे दशमे वा ख्रीष्टशतके 'महाव्युत्पत्ति' इति ख्यातं संस्कृततिब्बतीचीनीभाषाणां कोशं प्रणिनाय ।

विदेशेष्वौद्योगिकप्रगतये भारतानां प्रयत्ना दृश्यन्ते । यथा हि जापानदेशे कार्पासवपनस्य कार्पासवस्त्रनिर्माणस्य च विधिर्भारतैः शिक्षितः । चीनदेशस्य पौतवमानादयो भारतीयप्रणालीमनुसृत्य कारिताः ।



# उपसंहारः

भारतीयसंस्कृति-सागरेऽवगाह्य कानिचिद् रत्नानि संगृह्य पाठकेभ्यो मया समर्पितानि। तेषामालोके पुरा देशोऽयं समुज्ज्वलो बभूव। विश्वगुरुरासीदस्माकं देशः सदाचारस्य सर्वजनीनपथनिर्माणेन। अहो महापौरोभाग्यमस्माकं यदद्य सर्वं तत्तेजः समुपेक्ष्य यद् किञ्चिदवरमासीत्, तदेव स्वीकुर्वाणाः स्वयमेव परापतिताः। मानवीपद्धतिं परित्यज्य वयं हीना अपरानुकारिणोऽन्धेनैव नीयमाना यथान्धा एव।

भारतीयसंस्कृतेः सर्वोच्चविकास आध्यात्मिकपथेन समभवत्। आध्यात्मिकानन्दस्य प्राप्तिर्जीवनस्य प्रमुखोद्देश्यमिति निर्धार्य तदनुकूलं धर्मार्थकामानां स्वरूपं विहितम्। आध्यात्मिकपृष्ठभूमौ आधिभौतिकक्षेत्रे सर्वत्र कर्मण्यता, सदाशयता, उदारता, परोपकारशीलता, समृद्धिशालिता च पुरस्कृता। अधुनापि तथैव भवितव्यमिति समीहामहे।

प्राचीनसंस्कृतेः प्रकाशस्तम्भानां पञ्चशीलादीनां विश्वप्राङ्गणे प्रवर्तनं तदा भविष्यति यदा भारते प्रथमं व्यष्टिना समष्टिनाच तेषां शीलानां परिग्रहेण कश्चिदभिनवोऽभ्युदयो जायेत। अनेन प्रकारेण भारतस्य जगद्गुरुत्वं पुनरुदेष्यति।

भारतस्य प्राचीनसंस्कृतिर्भारतीयनिसर्गानुकूला सती भारतवासिनां परमकल्याणाय वर्तते। आधुनिकयुगे तस्याः संस्कृतेर्युगानुरूपो विन्यासो विवेकानन्द-लोकमान्यतिलक-मदन-मोहनमालवीय रवीन्द्रनाथठक्कुर-गांधिमहात्मादिभिर्महाभागैः प्रस्तावित एवास्माकं समक्षं विद्यते। इदानीं भारतस्य सांस्कृतिकनिर्माणे तेषां महाभागानामादर्शा ग्राह्याः। तत्र एष श्लोकः —

इदं नम ऋषिभ्यः पूर्वजेभ्यः
पूर्वेभ्यः पथिकृद्भ्यः ॥

# शब्दानुक्रमणिका